॥ श्रीगणेशायनमः ॥ विश्वसर्गविसर्गादिनवलक्षणलक्षितम् ॥ श्रीकृष्णाख्यंपरंधामजगद्धामनमामतत् ॥ १ ॥ दशमेदशमंलक्ष्यमाश्रिताश्रयविग्रहम् ॥
क्रीडद्यदुकुलांभोधौपरानंदमुदीर्य्यते ॥ २ ॥ दशमेकृष्णसत्कीर्तिवितानायानुवर्ण्यते ॥ धर्मग्लानिनिमित्तस्तुनिरोधोदुष्टभूभुजाम् ॥ ३ ॥ प्राकृतादिश्चतुर्धा
योनिरोधस्सतुवर्णितः ॥ तत्तत्प्रसंगतः सृष्टिसंहारादिनिरूपणे ॥ ४ ॥ कृतानवतिरध्यायादशमेकृष्णकीर्त्तये ॥ आदौचतुर्भिरध्यायैर्ब्रह्मप्रार्थनयावनेः ॥
भारंहर्तुंहरेर्जन्मसप्रसंगंनिरूप्यते ॥ ५ ॥ गोकुलेमथुरायांचद्वारवत्यांततःक्रमात् ॥ कृष्णलीलात्रिधाप्रोक्तातत्तद्भेदैस्त्वनेकधा ॥ ६ ॥ सपंचत्रिंशताध्यायै
र्वृहद्दावनादिषु ॥ गोकुलेवसतोलीलावर्ण्यतेसुरदुष्करा ॥ ७ ॥ एकेनयमुनावारिण्यक्रूरेणकृतास्तुतिः ॥ एकादशभिराख्यातालीलामधुवनेकृता ॥ ८ ॥ शेषै
र्द्वारवतीलीलातन्निर्माणादिवर्ण्यते ॥ एवंनवतिरध्यायादशमेविशदार्थकाः ॥ ९ ॥ तत्रतुप्रथमेकंसःस्वमृत्युंदेवकीसुतात् ॥ श्रुत्वाभीतोवधीत्तस्याः षड्गर्भानि



॥ श्रीगणेशायनमः ॥ राजोवाच ॥ कथितोवंशविस्तारोभवतासोमसूर्य्ययोः ॥ राज्ञांचोभयवंश्यानां
चरितंपरमाद्भुतम् ॥ १ ॥ यदोश्चधर्मशीलस्यनितरांमुनिसत्तम ॥ तत्रांशेनावतीर्णस्यविष्णोर्वीर्य्याणिशं
सनः ॥ २ ॥ अवतीर्य्ययदोर्वंशेभगवान्भूतभावनः ॥ कृतवान्यानिविश्वात्मातानिनोवदविस्तरात्
॥ ३ ॥ निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरामात् ॥ कउत्तमश्लोकगुणानुवादात्
मान्विरज्येतविनापशुघ्नात् ॥ ४ ॥ पितामहामेसमरेऽमरंजयैर्देवव्रताद्यातिरथैस्तिमिंगिलैः ॥
दुरत्ययंकौरवसैन्यसागरंकृत्वातरन्वत्सपदंस्मयत्प्लवाः ॥ ५ ॥ द्रौण्यस्त्रविप्लुष्टमिदंमदंगं स
न्तानबीजंकुरुपाण्डवानाम् ॥ जुगोपकुक्षिंगतआत्तचक्रोमातुश्चमेयःशरणंगतायाः ॥ ६ ॥ ९ तिवर्ण्यते ॥ १०

कृष्णावतारचरितश्रवणामृतनिर्वृतः ॥ उक्तानुवादेनौत्सुक्याद्राजापृच्छतितत्पुनः ॥ ११ ॥ कथितोवंशविस्तारइति ॥ १ ॥ अंशेनेतिप्रतीत्यर्थं ...येणोक्त
मु ॥ २ ॥ ननूक्तानिजातोगतः पितृगृहाद्व्रजमेधितार्थइत्यादिनासत्यंपुनर्विस्तरेणवदेत्याह अवतीर्य्येति ॥ ३ ॥ अत्रलोकेत्रिविधाजनाःमुक्तामुमुक्षवोविषयिण
श्चतेषांमध्येअत्रनकस्याप्यलंप्रत्ययइत्याह ॥ निवृत्ततर्षैरिति ॥ गततृष्णैर्मुक्तैरपीत्यर्थः ॥ मुमुक्षूणामयमेवोपायइत्याह भवौषधादिति विषयिणांपरमोविषयो
ऽयमेवेत्याहश्रोत्रमनोभिरामादिति अपगताशुक् यस्मात्तमात्मानंहंतीत्यपशुघ्नः तस्मात्पशुघातिनइतिवा ॥ ४ ॥ किंचअस्मत्कुलदैवतंकृष्णःतत्तत्क
थैवनितरांश्रोतव्येत्याशयेनाह ॥ पितामहाइति अमरान्जयंतियेतैर्देवव्रतोभीष्मस्तदाद्यैरतिरथैस्तिमिंगिलतुल्यैर्दुरत्ययम् वत्सपदमिव अत्यल्पंकृ
त्वातरन्कौरव्यानस्माय: कृष्णएवप्लवोयेषांतेतस्यवीर्य्याणिवदस्वेतितृतीयश्लोकगतेनान्वयः ॥ ५ ॥ नकेवलंपाण्डवानेवारक्षत् ॥

इदंममशरीरमपियोरक्षितवानित्याहद्रौण्यस्त्रविप्लुष्टमिति द्रोणपुत्रस्याश्वत्थाम्नोब्रह्मास्त्रेणप्लुष्टमिदंमच्छरीरंचकुरूणांपांडवानांचसंतानस्यनिदा
नम् ममामातुःकुक्षौप्रविष्टोधृतचक्रोयोजुगोपेति॥६॥अखिलदेहभाजांसर्वप्राणिनामंतश्चबहिश्चपुरुषरूपेणकालरूपेणच अंशाभिप्रायेणबहुव
चनम् मृत्युंसंसारम् उतअपिअमृतममपिप्रयच्छतोवीर्याणिवदस्वब्रूहि अयंभावः अंतर्यामिरूपेणांतर्दृशीनांमुक्तिंबहिर्दृशीनांचकालरूपेणमृत्युं
ददातियतः अतोंतर्दृष्ट्यातद्वीर्याण्येवश्रोतव्यानीति॥७॥ननुबलंगदंसारणंचदुर्मदंविपुलंध्रुवम्।वसुदेवस्तुरोहिण्यांकृतादीनुदपादयदिति
रोहिण्यास्तनयोरामःप्रोक्तः।वसुदेवस्तुदेवक्यामष्टपुत्रानजीजनत्।कीर्तिमंतंसुषेणंचभद्रसेनमुदारधीः।मृदुंसंतर्दनंभद्रंसंकर्षणमहीश्व

वीर्याणितस्याखिलदेहभाजामंतर्बहिःपूरुषकालरूपैः।प्रयच्छतोमृत्युमुतामृतंचमायामनुष्यस्यवदस्वविद्वन्
॥७॥रोहिण्यास्तनयःप्रोक्तोरामःसंकर्षणस्त्वया।देवक्यागर्भसंबंधःकुतोदेहांतरंविना॥८॥कस्मान्मुकुंदोभ
गवान्पितुर्गेहाद्व्रजंगतः।क्ववासंज्ञातिभिःसार्धंकृतवान्सात्वतांपतिः॥९॥व्रजेवसन्किमकरोन्मधुपुर्यांचकेशवः।
भ्रातरंचावधीत्कंसंमातुरद्धाऽतदर्हणम्॥१०॥देहंमानुषमाश्रित्यकतिवर्षाणिवृष्णिभिः।यदुपुर्यांसहावात्सीत्प
त्न्यःकत्यभवन्प्रभोः॥११॥एतदन्यच्चसर्वंमेमुनेकृष्णविचेष्टितम्।वक्तुमर्हसिसर्वज्ञश्रद्दधानायविस्तृतम्॥१२॥
नैषातिदुःसहाक्षुन्मांत्यक्तोदमपिबाधते।पिबंतंत्वन्मुखांभोजच्युतंहरिकथामृतम्॥१३॥सूतउवाच॥एवंनिशम्यभृगु
नंदनसाधुवादंवैयासकिःसभगवानथविष्णुरातम्।प्रत्यर्च्यकृष्णचरितंकलिकल्मषघ्नंव्याहर्तुमारभतभागवतप्रधा
नः॥१४॥श्रीशुकउवाच॥सम्यग्व्यवसिताबुद्धिस्तवराजर्षिसत्तम।वासुदेवकथायांतेयज्जातानैष्ठिकीमतिः॥१५॥

रम्।अष्टमस्तुतयोरासीत्स्वयमेवहरिःकिलेति।पुनर्देवक्यागर्भसंबंधस्तस्यैवोक्तःसकुतोघटतइत्याक्षेपः॥८॥कस्मादितिभगवतःकंसभय
शंकायाअसंभवादित्यर्थः॥९॥मातुर्भ्रातरंकंसंतस्माद्वधानर्हम् अद्धासाक्षात्कस्मादवधीत्।१०।११।१२।ननुक्षुत्तृड्भ्यांपीडितस्यतवकुतःश्र
वणावकाशस्तत्राहनैषेतित्यक्तोदकस्यापिममजीवनंहरिकथामृतपाननिमित्तम् तदुपरमेसद्यएवजीवितंनस्यादित्यर्थः॥१३॥एवंसाधुवादंस
मीचीनंप्रश्नम् भागवतप्रधानोभागवतेषुश्रेष्ठः॥१४॥व्यवसिताकृतनिश्चयायतयतोबुद्धेः॥१५॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥१६॥ तत्रतावत्प्रथमंभगवदवतारकारणमाह भूमिरित्यादिनवभिः श्लोकैः दृप्तनृपव्याजायेदैत्यास्तेषामनीकशतानामयुतैर्योभूरिभारस्ते
नाक्रांता॥१७॥ विभोरंतिके उपस्थितासती।१८।१९।२०। पौरुषींपुरुषस्यभगवतइयंपौरुषीतांवाचंमेमत्तः आशुशृणुतमाचिरमविलंबितं
तथैवविधीयतांचेति॥२१॥ विज्ञापनासुरैर्वपुंसाईश्वरेणज्वरस्तापः अवधतोऽवधारितः।२२।२३।२४। देवकीगर्भसंकर्षणयशोदामोह

वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनातिहि। वक्तारंपृच्छकंश्रोतॄंस्तत्पादसलिलंयथा॥१६॥ भूमिर्दृप्तनृपव्याजदै
त्यानीकशतायुतैः। आक्रांताभूरिभारेणब्रह्माणंशरणंययौ॥१७॥ गौर्भूत्वाऽश्रुमुखीखिन्नाक्रंदंतीकरुणंविभोः।
उपस्थितांऽतिकेतस्मैव्यसनंस्वमवोचत॥१८॥ ब्रह्मातदुपधार्याथसहदेवैस्तयासह। जगामसत्रिनयनस्तीरंक्षीरपयो
निधेः॥१९॥ तत्रगत्वाजगन्नाथंदेवदेवंवृषाकपिम्। पुरुषंपुरुषसूक्तेनोपतस्थेसमाहितः॥२०॥ गिरंसमाधौगगनेस
मीरितांनिशम्यवेधास्त्रिदशानुवाचह। गांपौरुषींमेशृणुतामराःपुनर्विधीयतामाशुतथैवमाचिरम्॥२१॥ पुरैवपुंसा
ऽवधृतोधराज्वरोभवद्भिरंशैर्यदुषूपजन्यतां। सयावदुर्व्याभरमीश्वरेश्वरःस्वकालशक्त्याक्षपयंश्चरेद्भुवि॥२२॥ व
सुदेवगृहेसाक्षाद्भगवान्पुरुषःपरः। जनिष्यतेतत्प्रियार्थंसंभवंतुसुरस्त्रियः॥२३॥ वासुदेवकलानंतःसहस्रवदनः
स्वराट्। अग्रतोभवितादेवोहरेःप्रियचिकीर्षया॥२४॥ विष्णोर्मायाभगवतीययासंमोहितंजगत्। आदिष्टाप्रभुणां
शेनकार्यार्थेसंभविष्यति॥२५॥ श्रीशुकउवाच॥ इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः। आश्वास्यचमहींगीर्भिः
स्वधामपरमंययौ॥२६॥ शूरसेनोयदुपतिर्मथुरामावसन्पुरीम्। माथुरान्शूरसेनांश्चविषयान्बुभुजेपुरा॥२७॥
राजधानीततःसाभूत्सर्वयादवभूभुजाम्। मथुराभगवान्यत्रनित्यंसन्निहितोहरिः॥२८॥ तस्यांतुकर्हिचिच्छौ
रिर्वसुदेवःकृतोद्वहः। देवक्यासूर्ययासार्द्धंप्रयाणेरथमारुहत्॥ २९॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नादिकार्यार्थेयशोदायांसंभविष्यति।२५॥२६। भोजेंद्रबंधनागारे अवतारायप्रस्तावकथामाह शूरसेन इत्यादिनायावदध्यायसमाप्ति
मथुरामावसन् मथुरायांवसन् विषयान्देशान्।२७॥ २८॥ सूर्ययानवोढयाप्रयाणेप्रयाणार्थे॥ २९॥ ॥ ॥ ॥ ॥ ॥

रश्मीनग्रहीत्।३०।पारिबर्हमुपस्करम्।३१।३२।३३।आभाष्य रेकंसेतिसंबोध्य इंतादर्शयति।३४।कुलपांसनः कुलदूषणः आरब्धः उद्युक्तः कचेके
शबंधे।३५।नृशंसंक्रूरंमहाभागइतिअयंभावः स्वजन्मनिहर्षेणदेवैरानकदुंदुभिघोषणाद्भाविभगवदवतारेण शक्यप्रतीकारतासंभवतीतिसांत्वय
न् स्तुत्याकृपाविषयत्वेनोपपत्तिभिश्चसाममार्गेणसंबोधयन् किंचसामभेदाभ्यांसंबोधयन्तत्रसामपंचविधंभेदोद्विविधः तदुक्तं।संबंधलाभोपकृ
तिर्ह्यभेदोगुणकीर्तनं।सामपंचविधंभेदोद्दृष्टादृष्टभयंवचः।तत्रश्लाघनीयगुणइतिगुणकीर्त्तनंभगिनीमितिसंबंधकथनंपुत्रिकोपमेत्यभेदं वक्ष्य
तिहन्यादितिस्त्रीवधनिरत्ययशोलाभंदर्शयतिउद्वाहपर्वणीतिसंतानवृद्ध्योपकारंदर्शयति।३६।३७।मरणभयेनहन्मीतिचेत्तथापिमरणस्या
परिहरणीयत्वाद्देहांतरस्यावश्यंभावित्वात्तत्रापिचभोगप्रेमास्पदत्वादीनामविशेषात्तद्भयेनपापाचरणमयुक्तमित्यभिप्रेत्याहमृत्युर्जन्मवतामित्य

उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया।रश्मीन्हयानांजग्राहरौक्मैरथशतैर्वृतः।३०।चतुःशतंपारिबर्हंगजानांहेम
मालिनाम्।अश्वानामयुतंसार्द्धंरथानांचत्रिषट्शतम्।३१।दासीनांसुकुमारीणांद्वेशतेसमलंकृते।दुहित्रेदेवकः प्रादा
द्यानेदुहितृवत्सलः।३२।शंखतूर्यमृदंगाश्चनेदुर्दुंदुभयः समम्।प्रयाणप्रक्रमेतावद्वरवध्वोः सुमंगलम्।३३।पथिप्रग्रहि
णंकंसमाभाष्याहाशरीरवाक्।अस्यास्त्वामष्टमोगर्भोहंतायांवहसेऽबुध।३४।इत्युक्तः सखलः पापोभोजानांकुलपांस
नः।भगिनींहंतुमारब्धः खड्गपाणिः कचेऽग्रहीत्।३५।तंजुगुप्सितकर्माणंनृशंसंनिरपत्रपम्।वसुदेवोमहाभाग
उवाचपरिसांत्वयन्।३६।वसुदेवउवाच॥श्लाघनीयगुणः शूरैर्भवान्भोजयशस्करः।सकथंभगिनींहन्यात्स्त्रिय
मुद्वाहपर्वणि।३७।मृत्युर्जन्मवतांवीरदेहेनसहजायते।अद्यवाब्दशतांतेवामृत्युर्वैप्राणिनांध्रुवः।३८।देहेपंचत्वमाप
न्नेदेहीकर्मानुगोऽवशः।देहांतरमनुप्राप्यप्राक्तनंत्यजतेवपुः।३९।व्रजंस्तिष्ठन्पदैकेनयथैवैकेनगच्छति।यथातृणजलौकैवं
द्दिदेहेनसहेतिविधात्राललाटेलिखितत्वादितितथाऽपिकालविलंबार्थंहन्मीतिचेत्तत्राह अद्य ९ देहीकर्मगतिंगतः॥ ४०॥
वेति अवश्यंभाविनिमरणेविलंबमात्रायनपापाचरणंयुक्तमितिभावः।३८। किंच अस्मिन्देहेगतेयदिदेहांतरंनस्यात्तदायुज्येतपापेनापित
त्पालनंनतुतदस्तीत्याहदेहेपंचत्वमापन्नइतिआपन्नेआपन्नप्रायेकर्मवशाद्यत्नतएवप्रथमंदेहांतरंप्राप्यपश्चात्पूर्वंवपुस्त्यजति।३९।अत्रदृ
ष्टांतः व्रजन्निति एकेनाग्रतोनिहितेनपदातिष्ठन्भुवमवष्टभ्यदेहंबिभ्रत्पश्चादन्येनपूर्वप्रदेशादुत्थाप्यपुरोनिहितेनगच्छतितद्वत् अत्रचस्वीकारपरित्यागयो
र्नात्यंतभिन्नविषयावितिस्पष्टंदृष्टांतांतरमाहयथातृणजलौकेतिसाहियथातृणांतरमवष्टभ्यपूर्वंतृणंत्यजतिएवंकर्मपथेवर्तमानोन्योजीवोऽपि ॥ ४०॥

देहविषयावेवस्वीकारपरित्यागौदर्शयितुंदृष्टांतांतरमाहस्वप्नइतिदृष्टंराजादिदर्शनंश्रुतमिंद्रादिश्रवणंताभ्यामाहितसंस्कारेणमनसातंदेवाद्यंचिंत
यन् ईदृशंजाग्रद्दृष्टश्रुतसदृशंदेहंराजादिरूपंकिमपि अनिरुक्तंपश्यतियःक्षणांतरेचतदेवाहमितिप्रपद्यतेमन्यतेततश्चजाग्रद्देहादपगतस्मृतिर्भ
वतिपुरुषोयथेतिजाग्रत्त्वेवदर्शयितुंदृष्टांतांतरमाहमनोरथेनेति अत्रापिदृष्टश्रुताभ्यामित्यादिसर्वंयोज्यम् तथाचवक्ष्यति।जंतोर्वैकस्यचिद्धेतोर्मृत्यु
रत्यंतविस्मृतिः।जन्मत्वात्मतयापुंसःसर्वभावेनभूरिद।विषयस्वीकृतिंप्राहुर्यथास्वप्नमनोरथः।स्वप्नंमनोरथंचेत्थंप्राक्तनंनस्मरत्यसावित्यादि।तद्वदत्रा
पिकर्मवशाद्देहांतरंप्राप्यप्राक्तनंत्यजतीति।४१।ननुविचित्रदेहहेतूनांकर्मणांकृतत्वाद्देहविशेषप्राप्तौकिंकारणमतआहयतोयतइतिदेहस्यपंचत्वसम
येपंचसुगुणेषुभूतेषुमायारचितेषुमाययानानादेहरूपेणरचितेषुदैवेनफलाभिमुखेनकर्मणाचोदितंनानाविकारात्मकंमनोयंयंदेहंदेवतिर्यगादिरूपंप्रति
धावतिधावच्चसत् यंयमाप अभिनिवेशेनप्राप्तंतत्रतत्र असौदेहीजायतेननुमनसःकर्तृत्वात्तदेवजायतांनत्वकर्तात्मेत्यत आह प्रपद्यमानइतितदेवाहमि

स्वप्नेयथापश्यतिदेहमीदृशंमनोरथेनाऽभिनिविष्टचेतनः।दृष्टश्रुताभ्यांमनसाऽनुचिंतयन्प्रपद्यतेतत्किमपिह्यऽपस्मृतिः।४१।
यतोयतोधावतिदैवचोदितंमनोविकारात्मकमापपंचसु।गुणेषुमायारचितेषुदेह्यसौप्रपद्यमानस्सहतेनजायते।४२।
ज्योतिर्यथैवोदकपार्थिवेष्वदःसमीरवेगानुगतंविभाव्यते।एवंस्वमायारचितेष्वसौपुमान्गुणेषुरागानुगतोविमुह्यति।४३।
तस्मान्नकस्यचिद्द्रोहमाचरेत्सतथाविधः।आत्मनःक्षेममन्विच्छन्द्रोग्धुर्वैपरतोभयम्॥४४॥एषातवानुजाबालाकृपणापुत्रि
कोपमा।हंतुंनार्हसिकल्याणीमिमांत्वंदीनवत्सल ।४५।श्रीशुकउवाच॥एवंससामभिर्भेदैर्बोध्यमानोपिदारुणः।नन्यवर्त
तकौरव्यपुरुषादाननुव्रतः॥४६॥ (तिमन्यमानस्तेनसहजायतइति॥४२॥ननुसत्यंभविष्यत्येवकिमपिदेहमात्रंतथाऽप्यऽस्याऽतिप्रियस्यरा
जदेहस्यरक्षणायाकृत्यमपिक्रियतइतिचेत्तत्राहज्योतिरिति अदश्चंद्रादिज्योतिःउदकयुक्तेषुपार्थिवेषुघटादिषुयद्वाउदकेषुपार्थिवेषुतैलघृतादिषुचप्र
तिबिंबेनस्थितंसमीरस्यवायोर्वेगमनुगतंकंपादियुक्तंप्रतीयतेयथाएवंस्वाविद्ययारचितेषुगुणेषुदेहेष्वसौरागेणानुगतःप्रविष्टोमुह्यति अभिनिवेशंप्रा
प्नोति अयंभावःआत्मनस्तावद्देहाद्यध्यासाज्जन्मोक्तंसहतेनजायतइतिततश्चान्योन्यधर्माध्यासाद्यथादेहादिधर्माःकार्श्यादयःआत्मनिप्रती
यंतेएवमात्मधर्माःप्रेमास्पदत्वादयोपिदेहादिष्वितिराजसूकरदेहयोर्विशेषाभावात् व्यर्थोमृत्युप्रतीकारइति।४३।एवमुक्तंसामोपायमुपसंह
रन्भेदमाहतस्मादितिपरतइति अभिद्रुह्यमाणात्तत्संबंधिनश्चयमादपिइहामुत्रचभयमितिभेदोदर्शितः॥४४॥पुनस्सामैवाहएषेतिपुत्रिको
पमादारुमयीव अचेतनप्राया॥४५॥बोध्यमानःउपदिश्यमानःस्वयंदारुणःपुनःपुरुषादान्दैत्यान्अनुव्रतःअनुसृतइति ॥ ४६ ॥ ॥

आनकदुंदुभिरितिपदंमहाभागइत्यत्रोक्ताभिप्रायंप्रतिव्योढुंप्रतिवंचयितुमित्यर्थः इदंवक्ष्यमाणमपत्यार्पणम् अनूपद्यतइतिज्ञातवा
न्॥४७॥ ननुखलोयमेतन्नमन्येतेत्याशंक्यस्वयमेवविचारयतिमृत्युरिति॥४८॥तस्मादुपेक्षादोषपरिहारायैवंकरिष्यामीत्याहप्रदायेति
मृत्यवेकंसायनन्नुइदमपिनैवन्याय्यमित्याशंक्याहसुताइति असौयदिमेसुताजायेरंस्तदायद्भवितद्भवतुजीवितंतुतावद्भवेदेवतदंतरायद्ययमेवम्रि
येततदानकिंचिदन्याय्यं॥४९॥यदिचसुताभविष्यंतिनचायंम्रियेततदामत्पुत्रादेवास्यमरणमितिविपर्ययोवाकिंनस्यात् ननुप्रौढस्यकंसस्य
तवबालकात्कथंमृत्युःस्यात्तत्राहगतिरितिधातुः अस्यास्त्वामष्टमोगर्भोहंतेत्युक्तवतः अतइदानीमपत्यार्पणप्रतिज्ञैवमंत्रः तथासति उप
स्थितोमृत्युरयंतावन्निवर्तेतनिवृत्तः पुनःकालांतरेआपतेच्चेत्तदानापराधोममेत्यर्थः अथवाऽस्यमत्पुत्रादुपस्थितोमृत्युरस्यावधाद्योनिवर्तेत

निर्बंधंतस्यतंज्ञात्वाविचिंत्यानकदुंदुभिः।प्राप्तंकालंप्रतिव्योढुमिदंतत्रान्वपद्यत॥४७॥मृत्युर्बुद्धिमताऽपोह्योया
वद्बुद्धिबलोदयम्।यद्यसौननिवर्तेतनापराधोस्तिदेहिनः॥४८॥प्रदायमृत्यवेपुत्रान्मोचयेकृपणामिमां॥सुतामे
यदिजायेरन्मृत्युर्वानम्रियेतचेत्॥४९॥विपर्ययोवाकिंनस्याद्गतिर्धातुर्दुरत्यया।उपस्थितोनिवर्तेतनिवृत्तः पु
नरापतेत्॥५०॥अग्नेर्यथादारुवियोगयोगयोरदृष्टतोऽन्यन्ननिमित्तमस्ति।एवंहिजंतोरपिदुर्विभाव्यःशरीरसंयो
गवियोगहेतुः॥५१॥एवंविमृश्यतंपापंयावदात्मनिदर्शनम्।पूजयामासवैशौरिर्बहुमानपुरःसरं॥५२॥प्रसन्नव
दनांभोजोनृशंसंनिरपत्रपं।मनसादूयमानेनविहसन्निदमब्रवीत्॥५३॥ वसुदेवउवाच॥ नह्यस्यास्तेभयंसौम्य
यद्वैसाहाऽशरीरवाक्।पुत्रान्समर्पयिष्येऽस्यायतस्तेभयमुत्थितं ॥ ५४ ॥

९ सपुनरनेनसन्मंत्रेणभवेदेवेतियद्य

गतिर्धातुर्दुरत्ययेत्येतस्यप्रपंचः उपस्थितइति॥५०॥प्राणिनामदृष्टंचदुर्वितर्क्यमितिसदृष्टांतमाह अग्नेरितिवनेवृक्षान्प्रदहन्वन्हिः स
न्निहितानपिवृक्षान्परित्यज्यकदाचिद्दूरस्थानपिदहतिग्रामेगृहान्वानह्यस्यप्राण्यदृष्टव्यतिरेकेणकिंचिन्नियामकमस्तियथा एवंजंतोर्जन्म
मरणयोरपिहेतुर्दुर्विभाव्यः अचिंत्यः॥५१॥ यावदात्मनिदर्शनंस्वप्रज्ञावधिविचार्य॥५२॥ तस्यविश्वासायविकसितमुखांभोजः विहसन्न
ब्रवीत्॥५३॥यत् यथा अशरीरिणीवागाहतथाहिनिश्चितम् अस्यास्सकाशात्तेभयंनास्तियतोयेभ्यःपुत्रेभ्यस्तेभयमुत्थितं अष्टमोहंतेत्युक्तेऽन्ये
न्यापेक्षयासर्वेप्यष्टमाभवेयुरित्युद्भूतानस्याःपुत्रान्समर्पयिष्ये ॥ ५४ ॥ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

निववृतेनिवृत्तः तद्वाक्येसारउपपत्तिः तद्वित्।५५। प्रसूतिकालेप्राप्तेसर्वैः सर्वात्माभगवानेवदेवतायस्याः सातथासर्वदेवतामपीतिवाभगव
दाश्रयत्वात्।५६।५७। मृत्यवेपुत्रंकथमर्पितवानित्यपेक्षायामाह किंदुःसहमितिसाधूनांसत्यसंधानांपुत्रलालनसुखापेक्षाकथंत्यक्तेतिअत
आहविदुषामितिभगवानेवतत्त्वंनान्यदितिजानतामित्यर्थः नत्रस्वयंनीतेसतिकंसोबालंनहन्यात् इतिमत्वानीतवानितिकिंनस्यादितिनेत्या

श्रीशुकउवाच॥ स्वसुर्वधान्निववृतेकंसस्तद्वाक्यसारवित्। वसुदेवोपितंप्रीतःप्रशस्यप्राविशद्गृहं॥५५॥ अथका
लउपावृत्तेदेवकीसर्वदेवता। पुत्रान्प्रसुषुवेचाष्टौकन्यांचैवानुवत्सरं॥५६॥ कीर्तिमंतंप्रथमजंकंसायानकदुंदुभिः।
अर्पयामासकृच्छ्रेणसोऽनृतादतिविह्वलः॥५७॥ किंदुःसहंनुसाधूनांविदुषांकिमपेक्षितं। किमकार्यंकदर्याणांदुस्त्य
जंकिंधृतात्मनां॥५८॥ दृष्ट्वासमत्वंतच्छौरेःसत्येचैवव्यवस्थितिं। कंसस्तुष्टमनाराजन्प्रहसन्निदमब्रवीत्॥५९॥ प्रति
यातुकुमारोयंनह्यस्मादस्तिमेभयं। अष्टमाद्युवयोर्गर्भान्मृत्युर्मेविहितःकिल॥६०॥ तथेतिसुतमादायययावानक
दुंदुभिः। नाभ्यनंदततद्वाक्यमसतोऽविजितात्मनः॥६१॥ नंदाद्यायेव्रजेगोपायाश्चामीषांचयोषितः। वृष्णयोवसु
देवाद्यादेवक्याद्यायदुस्त्रियः॥६२॥ सर्वेवैदेवताप्रायाउभयोरपिभारत। ज्ञातयोबंधुसुहृदोयेचकंसमनुव्रताः
॥६३॥ एतत्कंसायभगवान्शशंसाभ्येत्यनारदः। भूमेर्भारायमाणानांदैत्यानांचवधोद्यमं॥६४॥ ऋषेर्विनिर्गमे
कंसोयदून्मत्वासुरानिति। देवक्यागर्भसंभूतंविष्णुंचस्ववधंप्रति॥६५॥ देवकींवसुदेवंचनिगृह्यनिगडैर्गृ
हे। जातंजातमहन्पुत्रंतयोरजनशंकया॥६६॥ मातरंपितरंभ्रातॄन्सर्वांश्चसुहृदस्तथा। घ्नन्तिह्यसुतृपोलुब्धा
राजानःप्रायशोभुवि॥६७॥ आत्मानमिहसंजातंजानन्प्राग्विष्णुनाहतम्। महासुरंकालनेमिंयदुभिःसव्यरु
ध्यत॥६८॥ छ ॥ छ ॥ छ ॥

ह किमकार्यमितिननुदेवकीकथंपुत्रंतत्याजेत्यतआह दुस्त्यजमितिचित्तेधृतआत्माहरिर्यैस्तेषाम्॥५८॥५९॥६०॥६१॥ कंसस्य
शांतिर्देवकार्यानुगुणानभवतीतिनारदस्यप्रत्यवस्थानंतदाहनंदाद्याइत्यादित्रयेण॥६२॥ उभयोर्वसुदेवनंदकुलयोः॥६३॥ वधो
द्यमंदैवकृतमितिशेषः॥६४॥६५॥ निगडैःशृंखलैः अजनोविष्णुस्तच्छंकया ॥६६॥ ६७॥ ६८॥ ॥ छ ॥ छ ॥

॥६१॥ इतिश्रीपरमानंदसेवितश्रीधरस्वामिविरचितायांभावार्थदीपिकायांप्रथमोऽध्यायः॥१॥ द्वितीयेकंसघातायदेवक्यागर्भगोहरिः। ब्रह्मादि
भिःस्तुतःसाचसांत्वितेतिनिरूप्यते॥१॥ यदुभिःसत्यरुध्यतेत्युक्तंतमेवविरोधंप्रपंचयतित्वरयादेवकीगर्भस्यान्यत्रसंचारेणभगवतःप्रवेशंवक्तु
माह प्रलंबेत्यादिसार्द्धत्रयेणश्लोकेनमहाशनोऽघासुरः।१।२।३। अनुरुंधानाःअनुवर्तमानाः।४। धामकलातदेवसप्तमोगर्भोबभूवकिंलक्षणमित्य
तआहयमनंतमितिहर्षशोकविवर्द्धनःआनंदरूपस्यावतीर्णत्वाद्धर्षःपूर्वगर्भसाधारणदृष्ट्याचशोकइति।५।६। ननुसागोकुलेकिमित्यास्तेअत

उग्रसेनंचपितरंयदुभोजांधकाधिपम्॥स्वयन्निगृह्यबुभुजेशूरसेनान्महाभुजः॥६९॥ इतिश्रीभागवतेमहा
पुराणेदशमस्कन्धेप्रथमोऽध्यायः॥१॥श्रीशुकउवाच॥प्रलंबबकचाणूरतृणावर्तमहाशनैः।मुष्टिकारिष्टद्वि
विदपूतनाकेशिधेनुकैः॥१॥अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः।यदूनांकदनंचक्रेबलीमागधसंश्रयः॥२॥
तेपीडितानिविविशुःकुरुपांचालकैकयान्।शाल्वान्विदर्भान्निषधान्विदेहान्कोशलानपि॥३॥एकेतमनुरुन्धाना
ज्ञातयःपर्युपासत।हतेषुषट्सुबालेषुदेवक्याऔग्रसेनिना॥४॥सप्तमोवैष्णवंधामयमनंतंप्रचक्षते।गर्भोबभूवदेवक्या
हर्षशोकविवर्द्धनः॥५॥भगवानपिविश्वात्माविदित्वाकंसजंभयम्।यदूनांनिजनाथानांयोगमायांसमादिशत्॥६॥ ग
च्छदेविव्रजंभद्रेगोपगोभिरलंकृतम्।रोहिणीवसुदेवस्यभार्यास्तेनंदगोकुले।अन्याश्चकंससंविग्नाविवरेषुवसंतिहि
॥७॥देवक्याजठरेगर्भंशेषाख्यंधाममामकं।तत्सन्निकृष्यरोहिण्याउदरेसन्निवेशय॥८॥अथाहमंशभागेनदेव
क्याःपुत्रतांशुभे।प्राप्स्यामित्वंयशोदायांनंदपत्न्यांभविष्यसि॥९॥

ऽऽआह अन्याश्चेतिनकेवलंसैवअन्याअपीतिविवरेषुअ
लक्ष्यस्थानेषु॥७॥जठरेसंतंननुगर्भआकृष्यमाणःकथंजीवेदित्यतआहमामकंधामेतितत्त्वतः॥८॥किमर्थमेवंकार्यमित्यतआहअथेतिअनंत
रमेवेत्यर्थःअंशभागेनेति अंशैःशक्तिभिर्भजतेअधितिष्ठतिसर्वान्ब्रह्मादिस्तंबपर्य्यन्तानित्यंशभागस्तेनपरिपूर्णेनरूपेणेत्यर्थःयद्वाअंशैर्ज्ञानै
श्वर्य्यबलादिभिर्भाजयतियोजयतिस्वीयानितितथातेनेतियद्वाअंशेनपुरुषरूपेणमायायाभागोभजनंईक्षणंयस्यतेनयद्वाअंशेनमाययागुणा
वतारादिरूपाःभागाभेदायस्यतेनयद्वाअंशाएवमत्स्यकूर्मादिरूपाभजनीयाःननुसाक्षात्स्वरूपंयस्यतेनयद्वाअंशैर्ज्ञानबलादिभिर्भजनम् ॥

अनुवर्त्तनं भक्तेषु यस्य तेन यद्वा अंशा महदादयः तेषां भागः शुद्धसत्वांशस्तेन सर्वथा परिपूर्णेन रूपेणेति विवक्षितम् कृष्णस्तु भगवान् स्वयमि
त्युक्तत्वात् इति सांप्रोत्साहयति त्वं यशोदायामिति सार्द्धचतुष्टयेन ॥ ९ ॥ सर्वान्सुतादीन्कामयन्ते ये तेषां वरां ईश्वरीं श्रेष्ठां निपन्त्रां अर्चकानां सर्वा
न् कामवरान् प्रददातीया तां । १० । ११ । १२ । लब्धिक्रमेण च तस्य व्यपदेशा भविष्यन्तीत्याह गर्भसंकर्षणादित्यादिना राममेति च संबोधनम् करिष्यति
त्वया संकृष्टेन तेन लोकस्य रमणात् रत्युत्पादनात् ॥ १३ ॥ तथेति पुनरपि ओमित्यादरेण प्रतिगृह्य गां पृथ्वीं ॥ १४ ॥ विस्रंसितः विभ्रष्टः विस्रस्त इत्य
र्थः इति विचुक्रुशुः नतु तद्धि दुरित्यर्थः । १५ । मन आविवेश मनस्याविर्बभूव ... वानामिव न धातुसंबंध इत्यर्थः । १६ । धाम श्रीमूर्तिं ॥ १७ ॥ जगन्मङ्ग
लं जगतो मूर्तिमन्मङ्गलं अच्युतांशं अच्युता च्युतिरहिता अंशा ऐश्वर्यादयो यस्य तं यद्वा अच्युतस्य अंश इवांशो भक्तानामनुग्रहार्थं परिच्छिन्नव

अर्चिष्यन्ति मनुष्यास्त्वां सर्वकामवरेश्वरीं । धूपोपहारबलिभिः सर्वकामवरप्रदाम् ॥ १० ॥ नामधेयानि कुर्वन्ति स्थानानि
च नरा भुवि । दुर्गेति भद्रकालीति विजया वैष्णवीति च ॥ ११ ॥ कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च । माया नारायणी
शानी शारदेत्यम्बिकेति च । १२ । गर्भसंकर्षणात्तं वै प्राहुः संकर्षणं भुवि । रामेति लोकरमणाद्बलं बलवदुच्छ्रयात् ॥ १३ ॥
संदिष्टैवं भगवता तथेत्योमिति तद्वचः । प्रतिगृह्य परिक्रम्य गां गता तत्तथाकरोत् ॥ १४ ॥ गर्भे प्रणीते देवक्या रोहिणीं
योगनिद्रया । अहो विस्रंसितो गर्भ इति पौरा विचुक्रुशुः ॥ १५ ॥ भगवानपि विश्वात्मा भक्तानामभयंकरः । आविवेशांशभा
गेन मन आनकदुन्दुभेः । १६ । स बिभ्रत्पौरुषं धाम भ्राजमानो यथा रविः । दुरासदोऽतिदुर्द्धर्षो भूतानां संबभूव ह ॥ १७ ॥ त
तो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी । दधार सर्वात्मकमात्मभूतं काष्ठा यथानंदकरं मनस्तः ॥ १८ ॥ सा देव
की सर्वजगन्निवासनिवासभूता नितरां न रेजे । भोजेंद्रगेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती ॥ १९ ॥

पुरित्यर्थः समाहितं सम्यग्भृतमेवाहितं वेधदीक्षया अर्पितं देवी द्योतमाना शुद्धसत्वेत्यर्थः सर्वात्मकं सर्वस्यात्मानं अत एवात्मभूतं
स्वस्मिन्नादावेव संतं मनस्तः मनसैव दधार धारणया धृतवती अत्रानुरूपं दृष्टांतमाह यथा काष्ठा प्राची दिक् आनंदकरं चंद्रमिति । १८
सर्वजगन्निवासस्य श्रीहरेर्निवासभूतासत्यपि नितरां सर्वजनाल्हादकतया न रेजे किंतु स्वयमेवानंदमन्वभवत् यतः कंसस्य गृहे रु
द्धा अन्यैर्न दृश्यते घटादिषु रुद्धा अग्निशिखा दीपकलिका इव तथा सती शोभमाना सरस्वती ज्ञानखले ज्ञानवंचके रुद्धा यथान्येषा
मनुपकारिणी न राजते तद्वत् ॥ १९ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

प्रभयाभवनंविरोचयंतींतां अजितः अंतराकुक्षिमध्ये यस्याः सा तां प्रति विरोचमानः ध्रुवं हरिरेव यत् यस्मात् ईदृशी इयं पुरा पूर्वं नासीत्॥२०॥ननु संतिसामाद्युपायाः नेतिस्वयमेवाह अयमर्थंतंत्रो देवकार्यप्रधानः विक्रमं न विहंति मद्वधे पराक्रमं करिष्यत्येवेत्यर्थः।यद्वा तर्हि इयमिदानीमेवहन्यतामितिविविंत्याह अर्थतंत्रोपिपुमान्स्वविक्रमं नविहंति न नाशयति स्त्रीवधे तन्नाशः स्यादितिभावः तदेवाह स्त्रियाइति गुरुमत्याः गुर्विण्याः।२१।किञ्च सएवजीवन्नपिमृतः स्यात् नृशंसितेन क्रौर्येण योवर्त्तेत तंजीवंतमेवमनुजाः शपंति दुर्वाक्यैर्धिक्कुर्वन्ति सचदेहे मृते तत्तनुमानिनः पापिनोनरकंगच्छति अथवाशापप्रकारमेवाह तन्नुमानिनोऽस्यदेहेमृतेयंध्रुवमंधंतमोगमिष्यतीति।२२।२३।संविशन्शयानः।२४।स्याभिर्गीर्भिः वृषणं कामवर्षिणं ऐडयन् तुष्टुवुः।२५।प्रतिश्रुतंसत्यंकृतमिति हृष्टाः संतः सत्यत्वेनैवप्रथमंस्तुवंति सत्यव्रतमिति सत्यं व्रतं संकल्पो यस्य

तांवीक्ष्यकंसः प्रभयाऽजितांतरां विरोचयंतींभवनंशुचिस्मिताम्।आहैषमेप्राणहरोहरिर्गुहांध्रुवंश्रितोयन्नपुरेयमीदृशी।२०।किमद्यतस्मिन्करणीयमाशुमेयदर्थतंत्रोनविहंतिविक्रमं।स्त्रियाःस्वसुर्गुरुमत्यावधोऽयंयशःश्रियंहंत्यनुकालमायुः॥२१॥सएवजीवन्खलुसंपरेतोवर्त्ततयोऽत्यन्तनृशंसितेन।देहेमृतेतंमनुजाःशपन्तिगन्तातमोऽधंतनुमानिनोध्रुवम्॥२२॥इतिघोरतमाद्भावात्सन्निवृत्तःस्वयंप्रभुः।आस्तेप्रतीक्षंस्तज्जन्महरेर्वैरानुबंधकृत्॥२३॥आसीनःसंविशंस्तिष्ठन्भुञ्जानःपर्यटन्महीं।चिंतयानोहृषीकेशमपश्यत्तन्मयंजगत्॥२४॥ब्रह्माभवश्चतत्रैत्यमुनिभिर्नारदादिभिः।देवैःसानुचरैःसाकंगीर्भिर्वृषणमैडयन्॥२५॥सत्यव्रतंसत्यपरंत्रिसत्यंसत्यस्ययोनिंनिहितंचसत्ये।सत्यस्यसत्यमृतसत्यनेत्रंसत्यात्मकंत्वांशरणंप्रपन्नाः ॥२६॥

तम् सत्यप्रतिज्ञमित्यर्थः सत्यंपरंश्रेष्ठंप्राप्तिसाधनंयस्मिन्तंत्रिसत्यंत्रिष्वपिकालेषुसृष्टेः पूर्वंप्रलयानंतरंचस्थितिसमयेचसत्यंअव्यभिचारेणवर्तमानंतदेवाहुः सत्यस्ययोनिमिति सच्छब्देनपृथिव्यप्तेजांसित्यच्छब्देनवाय्वाकाशौएवंसच्चत्यच्चसत्यंभूतपंचकंतत्सत्यमित्याचक्षतइतिश्रुतेः तस्ययोनिंकारणंअनेनभूतपंचकात् पूर्वंवर्त्तमानतोक्तातथासत्येतस्मिन्नेवनिहितंअंतर्यामितयास्थितंअनेनस्थितिसमयेपिसत्यत्वमुक्तंतथासत्यस्यसत्यंतस्यैवसत्यस्यसत्यंपारमार्थिकंतन्नाशेप्यवशिष्यमाणरूपंअनेनप्रलयेप्यवधित्वेनसत्यत्वंदर्शितम् एवंत्रिसत्यत्वमुपपादितंतथाऋतसत्यनेत्रं। ऋतंचसूनृतावाणीसत्यंचसमदर्शनं।तथाभगवताव्याख्यास्यमानत्वात् सत्यंचसमदर्शनम्।ऋतंचसूनृतावाणीकविभिः परिकीर्तितेति। तयोर्नेत्रंनयनसाधनंनेतारंप्रवर्त्तकमितियावत् एवंसर्वप्रकारेणसत्यात्मकंत्वांभगवन्वयंशरणंप्रपन्नाः प्राप्ताइति ॥ २६ ॥ ७ ॥

रनुभवन्तोऽपिलोकेश्वरामत्तुल्याएवकिमितिमांशरणंप्रपद्यंतेनैवमूवाच्यंत्वमेवैकःसर्वेश्वरःसर्वस्रष्ट्यादिकारणत्वात्वयंतुत्वदेकशरणाएव
लोकादिरूपंद्वैतंचसर्वंत्वद्व्यतिरेकेणनास्तीतिवक्तुंद्वैतप्रपंचंवृक्षरूपेणनिरूपयंतिएकायनइतिअसौप्रपञ्च आदिवृक्षःवृश्च्यतइतिवृक्षः
समष्टिव्यष्टिदेहरूपःकथंभूतःएकायनःएकाप्रकृतिरयनमाश्रयोयस्यसःद्वेसुखदुःखेफलेयस्यसःत्रयोगुणामूलानियस्यसःचतूरसःधर्मा
र्थकाममोक्षाश्चत्वारोरसायस्यसःपंचइंद्रियाणिविधाज्ञानप्रकारायस्यसःक्षुत्पिपासेशोकमोहौजरामृत्यूएताःषडूर्मयःषट्ऊर्म्मयःअस्तिजायतेव
र्धतेविपरिणमतेअपक्षीयतेनश्यतीतिषट्कोशावाआत्मानःस्वभावायस्यसःत्वग्मांसरुधिरस्नायुशुक्रास्थिमज्जासप्तधातवःत्वचोयस्यपंचभूता
निमनोबुद्धिरहंकारश्चेत्यष्टौविटपाःशाखाविस्तारायस्यसःनवद्वाराणिअक्षाःछिद्राणियस्यसःप्राणापानसमानोदानव्याननागकृकलकूर्मदेवद
त्तधनञ्जयाःदशप्राणाःछदाःपत्राणिविद्यंतेयस्यसःदशच्छदीद्वौजीवेश्वरौखगौपक्षिणौयस्मिन्सद्विखगः।२७।एवंरूपस्यसंसारवृक्षस्यसतः

एकायनोऽसौद्विफलस्त्रिमूलश्चतूरसःपंचविधःषडात्मा।सप्तत्वगष्टविटपोनवाक्षोदशच्छदीद्विखगोह्या
दिवृक्षः॥२७॥त्वमेकएवाऽस्यसतःप्रसूतिस्त्वंसन्निधानंत्वमनुग्रहश्च।त्वन्माययासंवृतचेतसस्त्वांपश्यन्तिनाना
नविपश्चितोये॥२८॥बिभर्षिरूपाण्यवबोधआत्माक्षेमायलोकस्यचराचरस्य।सत्वोपपन्नानिसुखावहानि
सतामभद्राणिमुहुःखलानां॥२९॥त्वय्यंबुजाक्षाखिलसत्वधाम्निसमाधिनावेशितचेतसैके।त्वत्पादपोतेनमहत्
कृतेनकुर्वन्तिगोवत्सपदंभवाब्धिम् ॥ ३० ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥

कार्यस्यत्वमेकएवप्रसूतिःप्रकर्षेणसूतिर्ज्जन्मयस्मात्सःत्वंकारणमित्यर्थःत्वमेवसन्निधानंसम्यक्निधीयतेऽस्मिन्नितिलयस्थानंत्वमेवा
नुग्रहश्च अनुगृण्हातीतिपालकःननुब्रह्मविष्णुरुद्राएवंभूताःप्रसिद्धाःकथमहमितिचेत्तत्राहुःत्वन्माययेतिसंवृतम्पिहितंचेतोज्ञानंयेषा
न्तेत्वामेवनानापश्यन्तियेतुविपश्चितोविद्वांसःतेतथानपश्यंति॥२८॥ननुदेवकीपुत्रंमांकथमेवंवर्णयथेतिचेत्तत्राहुःबिभर्षीतिअवबोधैकस्व
रूपआत्मात्वमेवरूपाणिमूर्तीर्बिभर्षिधत्सेनतुत्वंकस्यापिपुत्रइत्यर्थःक्षेमायपालनायसतांधर्मवर्तिनांसुखकराणिखलानामभद्राणिनाशका
नि॥२९॥नकेवलमेतावत्भक्तानांमोक्षार्थमपीत्याहुःत्वयीतित्वयिसमाधिनाआवेशितचेतसानिमित्तेनत्वत्पादपोतेनाऽश्रितेनएकेमुख्याविवे
किनःमहद्भिःकृतेनसेव्यतयासंपादितेनयद्वाइदमपिमायामयमित्यनादरंपरित्यज्यइदमेवमहत्सर्वोत्कृष्टमितिमनसिकृतेनबहुमतेने
त्यर्थःभवाब्धिन्तुच्छंकुर्वन्तिअनायासेनैवभजनानुनिष्पादिनीतेषांमुक्तिरित्यर्थः ॥ ३० ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ ॥

ननु तेऽज्ञपोतेन चेत्पूर्वे चेत्पारङ्गताः तर्हि इदानीं तेन नौकागतिस्तत्राहुः स्वयमिति अयमर्थः हे द्युमन् स्वप्रकाशत्वात् पोतसामीप्यमात्रेण भवांबुधौ
नत्स्पदमात्रेऽज्ञाते अतस्तान्निरपेक्षं स्वयमेवान्येषां भीमं दुस्तरमपि भवार्णवं समुत्तीर्य भवत्पदांभोरुहरूपां नावं अत्रैव निधाय भक्तिमार्गं संप्रदायं प्र
वर्त्येत्यर्थः पारं प्राप्तास्तत्किं यतः अदभ्रसौहृदाः सर्वभूतेष्वतिप्रीतियुक्ताः अतस्तेऽन्येषां तरणाय संनिधायेति कथं सा तदाश्रयणमात्रेण तीर्णाः अत उक्तं
भवान्सदनुग्रहः सतो भक्तान्ननुगृह्णातीति॥३१॥ ननु विवेकिनां किमङ्ग जनेन मुक्ता एव हि ते तत्राहुः येऽन्य इति विमुक्तमानिनः विमुक्ता वयमिति मन्य
मानाः त्वयि अस्तो निरस्तो अत एवासन् यो भावः तस्माद्भक्तेरभावादित्यर्थः न विशुद्धा बुद्धिर्येषां ते तथा यद्वा त्वयि अस्तभाः इतिच्छेदः अस्तमतयः
वादेष्वेव विशुद्धबुद्धयः कृच्छ्रेण बहुजन्मतपसा परं पदं मोक्षसन्निहितं सत्कुलतपःश्रुतादि आरुह्य ततः पतंति विघ्नैरभिभूयन्ते न आदृतौ युष्मदं

स्वयं समुत्तीर्य्य सुदुस्तरं द्युमन्भवार्णवं भीममदभ्रसौहृदाः।भवत्पदांभोरुहनावमत्र ते निधाय याताः सदनुग्रहो भ
वान्॥३१॥ येऽन्येऽरविन्दाक्ष विमुक्तमानिनस्त्वय्यस्तभावादविशुद्धबुद्धयः।आरुह्य कृच्छ्रेण परं पदन्ततः पतन्त्यऽ
धोऽनादृतयुष्मदंघ्रयः॥३२॥ तथा न ते माधव तावकाः क्वचिद्भ्रश्यंति मार्गात्त्वयि बद्धसौहृदाः।त्वयाभिगुप्ता विच
रन्ति निर्भया विनायकानीकपमूर्द्धसु प्रभो॥३३॥ सत्त्वं विशुद्धं श्रयते भवान्स्थितौ शरीरिणां श्रेय उपायनं वपुः।वेदक्रि
यायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते॥३४॥ सत्त्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदापमार्जन
म्।गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः॥३५॥

घ्रयो येस्ते अधः अर्वाक् तिर्यग्योनौ॥३२॥ त्वदीयास्तु
न कदाचिदपि पतन्तीत्याहुः तथा नेति विनायका विघ्नहेतवस्तेषामनीकानि स्तोमास्तानि पांति ये तेषां मूर्द्धसु विचरंति विघ्नान् जयन्तीत्यर्थः॥३३॥ स
तां सुखावहानि रूपाणि धारयसीत्युक्तं बिभर्षि रूपाणीति तत्केन प्रकारेण सुखावहत्वमित्यपेक्षायामाहुः सत्त्वं विशुद्धमिति सत्त्वं वपुः श्रयत इत्यन्वयः
श्रेय उपायनं कर्मफलदातृ कथं येन वपुषा जनस्तवार्हणं पूजां समीहते करोति कैः वेदाश्च क्रियायोगाश्च तपश्च समाधिश्च तैश्चतुराश्रमधर्मैरित्यर्थः वपुषो
ऽनाश्रयणेऽर्हणासंभवात् न कर्मफलसिद्धिः स्यादिति॥३४॥ त्वय्यंबुजाक्षेत्यादिना श्लोकत्रयेण भगवद्भक्तानामेव मोक्षो नान्येषामित्युक्तं तत्र कर्मफ
लं भक्तिं विना माभून्मोक्षस्तु ज्ञानैकसाध्यत्वात् किं भक्त्येति सानुशयान्प्रत्याहुः सत्त्वं न चेदिति हे धातः इदं सत्त्वं निजं तव वपुर्न भवेच्चेत्तर्हि वि
ज्ञानं विशिष्टमपरोक्षं ज्ञानं न भवेदित्यनुषङ्गः कथंभूतं अज्ञानभिदापमार्जनम् अज्ञानं च तत्कृता भिदा च तयोरपमार्जनं निवर्तकं यद्वा अज्ञानं॥

T

भिनत्तीत्यज्ञानभित् विज्ञानं मार्जनं नाशं आपप्राप्नमेवेति न तु जडानां बुध्यादीनां यतः प्रकाशस्तद्दृष्ट्वेति ज्ञानं भवेदेवेति चेन्न गुणप्रकाशैः गुणावच्छिन्नैः प्रकाशैर्भवान् सर्वसाक्षीपरिपूर्णः केवलमनुमीयते कल्प्यते न तु साक्षात् क्रियत इत्यर्थः अनुमानप्रकारमाहुः प्रकाशते यस्य येन वा गुणा इति यस्य संबंधी अयं बुध्यादिगुणः प्रकाशते यो गुणसाक्षी स एवं येन वा बुध्याद्यारूढेन प्रमात्रा बुद्ध्यधिष्ठात्रा बाह्यो गुणः प्रकाशते इत्यनुमीयत इत्यर्थः शुद्धसत्ववपुषि लयि सेव्यमाने तु तदाकारेन्तःकरणे त्वत्प्रसादेन साक्षात्कारो भवेदिति भावः॥३५॥ एवन्तावद्दृक्तानामभ्युदयापवर्गार्थे रूपाणि बिभर्षीत्युक्तं तान्यपि भजनीयानि केवलं न तु ज्ञातुं शक्यन्ते अनंतत्वादतर्क्यत्वाच्च मनोवचसोरगोचरत्वादित्याहुः न नामरूपे इति गुणाश्च जन्मानि च कर्माणि च तैर्निरूपितव्ये निरूपणार्हे न भवतः कुतः अनुमेयं वर्त्म मार्गो यस्य तव इति तत्रापि हेतुः तस्य साक्षिण इति न हि साक्षिणस्तत्वं मनोवचोगोचरमित्यर्थः हे देव बहुधा द्योतमान अथापि क्रियायां उपासनादिलक्षणायां त्वां प्रतियंत्युपासकाः साक्षात्पश्यंति हि प्रसिद्धम्॥३६॥ त

न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः। मनोवचोभ्यामनुमेयवर्त्मनो देव क्रियायां प्रतियन्त्यथापि हि॥३६॥ शृण्वन्गृणन्संस्मरयंश्च चिन्तयन्नामानि रूपाणि च मङ्गलानि ते। क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते॥३७॥ दिष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः। दिष्ट्याऽङ्किता त्वत्पदकैः सुशोभनैर्द्रक्ष्याम गां द्यां च तवानुकंपिताम्॥३८॥ न तेऽभवस्येश भवस्य कारणं विना विनोदं बत तर्कयामहे। भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभयाश्रयात्मनि॥३९॥ मत्स्याऽश्वकच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः। त्वं पासि नस्त्रिभुवनं च यथाधुनेश भारं भुवो हर यदूत्तम वन्दनन्ते॥४०॥ एतस्माद्भक्तैवमो

क्ष इत्युपसंहरति शृण्वन्निति अन्यानपि संस्मारयन् क्रियासु देवार्चादिकर्मसु॥३७॥ विशेषतः श्रीकृष्णावतारमभिनंदंति दिष्ट्येति दिष्ट्या भद्रं तव पदः पादभूताया ईश्वरस्य तव जन्ममात्रेण अपनीत एव किंच त्वत्पदकैः कोमलैः पदैः सुशोभनैः वज्रांकुशादिशुभलक्षणैः गां पृथ्वीं द्यां स्वर्गं च तव त्वया अनुकंपितां॥३८॥ तव जन्मना भारोऽपनीत इत्युक्तं तत्र ममापि किं जीववत्संसार उक्तः न हि न हीत्याहुः न ते इति बत हे ईश अ संसारिणस्ते जन्मनः कारणं क्रीडां विना न तर्कयामः किं च हे अभयाश्रय न भयं संसारं आश्रयत इति तथा तत्संबोधनं हे नित्यमुक्तेत्यर्थः तव जन्मकारणं नास्तीति किं वक्तव्यं यतो जीवात्मन्यपि भवादयस्त्वयि विषयेऽविद्यातया कृताः न परमार्थतः संतीति॥३९॥ प्रस्तुतं प्रार्थयन्ते मत्स्याश्वेति नः अस्मान् त्रिभुवनं च अन्यदा यथा पासि तथाधुनापि पाहीति वंदनं ते इति च वदन्तः सर्वे शिरोभिः प्रणमंति॥४०॥ छ॥ छ॥ छ॥ छ॥ छ॥ छ॥

देवकींप्रत्याहुः दिष्ट्येति नोऽस्माकंभवायउद्भवायसाक्षात्परःपुमांस्तेकुक्षिगतः अतोभयंमाभूदिति अन्येषामपिकुक्षिंहृद्यंगतोहरिर्भवतितेषांभ

यंनभवतीतिकृतस्तवः॥४१॥यस्यरूपमनिदंसर्वप्रत्यग्भूतंयथायथावत् अस्मान्वञ्चयित्वाएताविहस्थास्येतेइतिमन्यमानाब्रह्मेशानौपुरोधायपु
रतःकृत्वाययुरिति॥४२॥इतिश्रीदशमेद्वितीयोऽध्यायः॥२॥तृतीयेनिजरूपेणसंभूतस्तुहरिःस्वयं।पितृभ्यांसंस्तुतोनीतःपित्राभीतेनगोकुलम्॥१॥
अथेतिमङ्गलार्थंयर्हिसर्वगुणोपेतःकालोबभूवतदादेवक्यांविष्णुराविरासीदित्यष्टमश्लोकगतेनान्वयः।परमशोभनत्वमेवाहयर्हीत्यादिना।अजना

दिष्ट्याऽम्बतेकुक्षिगतःपरःपुमानंशेनसाक्षाद्भगवान्भवायनः।माभूद्भयंभोजपतेर्मुमूर्षोर्गोप्तायदूनांभवितातवात्मजः
॥४१॥श्रीशुकउवाच॥इत्यभिष्टूयपुरुषंयद्रूपमनिदंयथा।ब्रह्मेशानौपुरोधायदेवाःप्रतिययुर्दिवम्॥४२॥इतिश्रीभागव
तेमहापुराणेदशमस्कन्धेगर्भगतविष्णोर्ब्रह्मादिकृतस्तुतिर्नामद्वितीयोऽध्यायः॥२॥श्रीशुकउवाच॥अथसर्वगुणोपे
तःकालःपरमशोभनः।यर्ह्येवाजनजन्मर्क्षंशान्तर्क्षग्रहतारकम्॥१॥दिशःप्रसेदुर्गगनंनिर्मलोडुगणोदयं।महीमङ्गल
भूयिष्ठपुरग्रामव्रजाकरा॥२॥नद्यःप्रसन्नसलिलाह्रदाजलरुहश्रियः।द्विजालिकुलसन्नादस्तबकावनराजयः॥३॥
ववौवायुःसुखस्पर्शःपुण्यगंधवहःशुचिः।अग्नयश्चद्विजातीनांशान्तास्तत्रसमिंधत॥४॥मनांस्यासन्प्रसन्नानिसाधू
नामसुरद्रुहाम्।जायमानेजनेतस्मिन्नेदुर्दुंदुभयोदिवि॥५॥जगुःकिन्नरगंधर्वास्तुष्टुवुःसिद्धचारणाः।विद्याधर्यश्चननृ
तुरप्सरोभिःसमंतदा॥६॥मुमुचुर्मुनयोदेवाःसुमनांसिमुदान्विताः।मंदंमंदंजलधराजगर्जुरनुसागरम्॥७॥निशी
थेतमउद्भूतेजायमानेजनार्द्दने।देवक्यांदेवरूपिण्यांविष्णुःसर्वगुहाशयः।आविरासीद्यथाप्राच्यांदिशीन्दुरिवपु
ष्कलः॥८॥

॥ नारायणाज्जन्मयस्यप्रजापतेस्तस्यऋक्षंरोहिणीनक्षत्रंकथंभूतंशान्तानिऋक्षाणि अश्विन्यादीनिग्रहाश्चता
रकाश्चयस्मिन्तत् यर्हीतिसर्वत्रानुषज्यते॥१॥निर्मलानामुडुगणानामुदयोयस्मिन्तत्तथामंगलभूयिष्ठाःपुरादयोयस्यांसा॥२॥ज
लरुहैःश्रीःशोभायेषांतेद्विजालिकुलानांसन्नादोयेषुतेस्तबकायासुताः॥३॥समिंधतआडागमोऽत्रद्रष्टव्यःसमैंधतेतिसम्यक्दीप्ता
बभूवुरित्यर्थः॥४॥असुरद्रुहांकंसादिव्यतिरिक्तानांसर्वप्राणिनांदेवानांचेतिस्वर्गेतुविशेषमाहजायमानइतिअजनेजायमाने॥५॥तदा
आसन्नःप्रसन्नोयस्मिन्तस्मिन्समयेइत्यर्थः॥६॥७॥तमसाउद्भूतेघनतमसिनिशीथेयथायथावत्ऐश्वरेणैवरूपेण ॥ ८ ॥ ९ ॥

तमद्भुतंबालकंवसुदेवऐक्षतेतिद्वितीयश्लोकस्थेनान्वयः अद्भुतत्वेहेतुगर्भाणिविशेषणानिअम्बुजेक्षणमित्यादीनिश्रीवत्सलक्ष्मम् श्रीवत्सल
क्षणंगलेनशोभतेइतिगलशोभीसःकौस्तुभोयस्मिन्॥९॥परिष्वक्तसहस्रकुंतलंकिरीटकुंडलादीनांत्विषास्फुरदपरिमितकेशमित्यर्थः॥१०॥विस्म
येनउत्फुल्लेविशिष्टेलोचनेयस्यसः गवामयुतमस्पृशत् मनसादत्तवान् कंसनिगृहीतस्यदानासंभवात् स्पर्शेहेतुःकृष्णावतारेतिमुदाआप्लुतोव्या
प्तःस्नातइतिवा॥११॥कृतधीःशुद्धबुद्धिः॥१२॥प्रथमंपुत्रबुद्ध्यापश्यन्वसुदेवःतांपुत्रबुद्धिंपरित्यज्याह विदितोसीतिकथंविदितोसिभवा
न्प्रकृतेःपरःपुरुषइति नतुकिमत्राश्चर्यंपुरुषस्यप्रकृतेरन्यत्वादेवेति अतआहसाक्षादितिप्रत्यक्षतइत्यर्थः नन्वक्षिसन्निकृष्टंप्रत्यक्षंतउ

तमद्भुतंबालकमंबुजेक्षणंचतुर्भुजंशंखगदाद्युदायुधं।श्रीवत्सलक्ष्मंगलशोभिकौस्तुभंपीतांबरंसांद्रपयो
दसौभगम्॥९॥महार्हवैडूर्यकिरीटकुंडलत्विषापरिष्वक्तसहस्रकुंतलं।उद्दामकांच्यंगदकंकणादिभिर्विरो
चमानंवसुदेवऐक्षत॥१०॥सविस्मयोत्फुल्लविलोचनोहरिंसुतंविलोक्यानकदुंदुभिस्तदा।कृष्णावतारोत्सवसंभ्र
मोऽस्पृशन्मुदाद्विजेभ्योयुतमाप्लुतोगवाम्॥११॥अथैनमस्तौदवधार्यपूरुषंपरंनतांगःकृतधीःकृतांजलिः।
स्वरोचिषाभारतसूतिकागृहंविरोचयंतंगतभीःप्रभाववित्॥१२॥वसुदेवउवाच॥विदितोसिभवान्साक्षात्पुरु
षःप्रकृतेःपरः।केवलानुभवानंदस्वरूपःसर्वबुद्धिदृक्॥१३॥सएवस्वप्रकृत्येदंसृष्ट्वाग्रेत्रिगुणात्मकम्॥तदनु
त्वंह्यप्रविष्टःप्रविष्टइवभाव्यसे॥१४॥यथेमेऽविकृताभावास्तथातेविकृतैःसह।नानावीर्याःपृथग्भूताःविरा
जंजनयंतिहि॥१५॥

पलभ्यतेकिंचित्रमित्यतआहकेवलेतिकेवलश्चासावनुभवश्चआनंदश्चतदेवस्वरूपंयस्यसःकिं
चसर्वबुद्धिदृक्साक्षीनह्येवंभूतोदृश्योभवतीत्यर्थः॥१३॥ननुदेवकीजठरेप्रविष्टस्यकिमियमतिस्तुतिःक्रियतेअतआहसएवेतिसएव
उक्तस्वरूपएवत्वंनदेवकीजठरेप्रविष्टइत्यर्थः ननुविश्वंसृष्ट्वातदनुप्रविष्टस्यकिमेतद्भुतअतआहस्वप्रकृत्येतिस्वमायया सृष्ट्वा
तदनुत्वमप्रविष्टएवेतिननुकथंतर्हिश्रुत्योच्यतेतत्सृष्ट्वातदेवानुप्राविशदितिअतआहप्रविष्टइवेतिभाव्यसेनिरूप्यसेप्रत्यक्षतो
वासद्रूपेणवाप्रविष्टइवलक्ष्यसे॥१४॥अत्रदृष्टांतःयथेतिइमेविकृताभावामहदादयोयथातथेति दृष्टान्तंविवृणोतितेविकृतैरिति
षोडशविकारैःसहसंनिपत्यविराजंजनयंतिसन्निपतनेहेतुःयतःपृथग्भूताःसंतोनानावीर्याविशिष्टकार्यजननसमर्थानभवंति
॥१५॥ छ॥ छ॥ छ॥

अतःसन्निपत्येति एवंसमुत्पाद्यानुगताःप्रविष्टाइवदृश्यंतेनतुप्रविष्टाःकुतःउत्पत्तेःप्रागेवकारणतयाविद्यमानत्वात् नतेषामिहसृष्टेःकार्य्ये

पश्चात्संभवःप्रवेशइति॥१६॥दार्ष्टांतिकेऽतिदिशतिएवंभवानिति ननुयद्यहमप्रच्युतस्वरूपएवकारणतयाकार्य्येष्ववर्त्तेतर्हितेषिंद्रियैर्गृ
ह्यमाणेषुममग्रहणंकिंनास्तितत्राहबुद्ध्यनुमेयलक्षणैरितिबुद्ध्यारूपादिज्ञानेनानुमेयंलक्षणंस्वरूपंयेषांतैर्गुणैरिंद्रियैर्ग्राह्यैर्गुणैःसहसन्न
पिवर्तमानोपितद्गुणाग्रहस्तैर्गुणैःसहनगृह्यसेअयंभावःनहिग्राह्यैःसहभावमात्रंग्रहणेकारणंकिंत्विंद्रियाणांशक्तिःसाचकार्य्यैकसमधि
गम्यायथाकार्य्यमेवकल्प्यते अतोयथाचक्षुषारूपग्रहणेरसादिग्रहणंनास्तितथैवविषयग्रहणेत्वद्ग्रहणमपीतिअविषयत्वेनचग्रहणाऽ
नर्हत्वमुक्तमेवसर्वंबुद्धिदृगित्यत्रएवंतावत्प्रागेवविद्यमानत्वात् प्रवेशोनास्तीत्युक्तंकिंचपरिच्छिन्नस्यनीडेपक्ष्यादेरिवप्रवेशोभवेत् तवत्व
नावृतत्वादपरिच्छिन्नत्वेनबहिरंतर्भेदोनास्तिकुतःप्रवेशइत्याह अनावृतत्वादिति अनावृतत्वेहेतूनाहसर्वस्येतिनहिसर्वस्वरूपस्यान्यदावर
कमस्तिसर्वात्मनःनह्येकेनावृतोन्यस्यात्माभवेत् आत्मवस्तुनइति आत्मनोवस्तुनश्चेतिहेतुद्वयंअतस्तात्त्वगमनइत्यस्मात् अततिव्याप्नोति।

सन्निपत्यसमुत्पाद्यदृश्यन्तेऽनुगताइव। प्रागेवविद्यमानत्वान्नतेषामिहसंभवः॥१६॥ एवंभवान्बुद्ध्य
नुमेयलक्षणैर्ग्राह्यैर्गुणैःसन्नपितद्गुणाऽग्रहः। अनावृतत्वाद्बहिरंतरंनतेसर्वस्यसर्वात्मनआत्मवस्तुनः॥१७॥ य
आत्मनोदृश्यगुणेषुसन्नितिव्यवस्यतेस्वव्यतिरेकतोऽबुधः। विनानुवादंनचतन्मनीषितंसम्यग्यतस्त्यक्तमुपाददत्
पुमान्॥१८॥ त्वत्तोऽस्यजन्मस्थितिसंयमान्विभोवदन्त्यनीहादगुणादविक्रियात्। त्वयीश्वरेब्रह्मणिनोविरुध्यते
त्वदाश्रयत्वादुपचर्य्यतेगुणैः॥१९॥

((ति आत्मानहिव्यापकस्यावरणंघटतेतथावस्तुनःपरमार्थस्यवस्तुनआवरणंनघटतइत्यर्थःत
स्मात्सर्वांतर्यामितयाप्रवेशोनमुख्योस्तिकुतस्तरांगर्भप्रवेशः अतःकेवलानुभवानंदस्वरूपएवत्वंविदितोसीत्याश्चर्य्यंममभाग्यमित्यर्थः॥१७॥नन्वेत
द्धेतुचतुष्टयंप्रपंचस्यावस्तुत्वेघटेततत्तुनसंभवतिसत्यत्वेनप्रतीयतइत्याशंक्याहयइति आत्मनोदृश्येषुगुणेषुदेहादिषुस्वव्यतिरेकतआत्मव्यतिरे
केणपृथक्त्वेनायंदेहादिरितिव्यवस्यतेनिश्चिनोतियःपुमान्सोऽबुधः अविद्वान्व्यतिरेकदर्शनात् किञ्चमनीषितंमनसाविचारितंतत्तुदेहादिस
र्वंयतःविनानुवादंवाचारंभणमात्रंविनानसम्यग्भवति अतोऽवस्तुत्वेनत्यक्तंबाधितमेववस्तुबुद्ध्याउपाददत्स्वीकुर्वन्अबुधइत्यर्थः॥१८॥ए
वंपरमेश्वरदृश्यस्यतद्व्यतिरेकेणासत्त्वमुक्तंपरमेश्वरोपादानत्वादपितद्व्यतिरेकेणासत्त्वमित्याहत्वत्तोस्येतिनचैवंसत्यपिविकारित्वमित्याहअ
नीहादितिअगुणत्वादनीहत्वंततोऽविकारित्वमित्यर्थः नन्वनीहत्वेकथंकर्तृत्वंकर्तृत्वेवाकुतोऽविकारित्वंतत्राहत्वयीश्वरइतिब्रह्मत्वादवि

कारित्वमीश्वरत्वाच्चकर्तृत्वमितिनन्वेतदपिविरुद्धमेवनेत्याहत्वदाश्रयत्वादितिगुणैःकुर्वद्भिःत्वयिसृष्ट्यादिकर्तृत्वमुपचर्य्यतेगुणाश्रयत्वात् य थाभृत्यकृत्यंराजनीति॥१९॥एवंभूतस्यैवतवयथाविश्वस्थितिसर्गलयार्थंत्रिवर्णागुणावतारा:एवमयंभूभारापनयनार्थमितिज्ञातमित्याहस त्वमितिश्लोकद्वयेन॥२०॥रिरक्षिषुःरक्षितुमिच्छुरवतीर्णोसिकृष्णेनवर्णेनअतःसाधूनांरक्षणार्थंराजन्यसंज्ञायेऽसुरकोटियूथपास्तैर्निर्व्यूह्यमा नाइतस्ततश्चाल्यमानाःचमूःसेनानिहनिष्यसेसंहरिष्यसि॥२१॥किन्तुतथाप्यप्रमत्तेनत्वयाभाव्यमित्याहअयंत्विति असभ्यःखलःसम र्प्पितंकथितंअभिसरतिआगमिष्यति॥२२॥उपाधावत् अस्तौत्॥२३॥त्वयिभयशङ्कैवतावन्नास्तीतिश्लोकचतुष्टयेनाहदेवकीकिंचिद्विज्ञा पयितुंरूपमितियत्तत्किमपिरूपंवस्तुप्राहुर्वेदाःकिंतद्वस्तुतदाह अव्यक्तंअत्रहेतुःआद्यंकारणंकिंपरमाणवःनब्रह्मबृहत्किंप्रधानंनज्योतिः

सत्त्वंत्रिलोकस्थितयेस्वमाययाबिभर्षिशुक्लंखलुवर्णमात्मनः।सर्गायरक्तंरजसोपबृंहितंकृष्णंचवर्णंतमसाजनात्यये ॥२०॥त्वमस्यलोकस्यविभोरिरक्षिषुर्गृहेवतीर्णोसिममाखिलेश्वर।राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमानानिह निष्यसेचमूः॥२१॥अयंत्वसभ्यस्तवजन्मनौगृहेश्रुत्वाऽग्रजांस्तेन्यवधीत्सुरेश्वर।सतेऽवतारंपुरुषैःसमर्प्पितं श्रुत्वाधुनैवाभिसरत्युदायुधः॥२२॥श्रीशुकउवाच॥अथैनमात्मजंवीक्ष्यमहापुरुषलक्षणं।देवकीतमुपाधाव त्कंसाद्भीताशुचिस्मिता॥२३॥श्रीदेवक्युवाच॥रूपंयत्तत्प्राहुरव्यक्तमाद्यंब्रह्मज्योतिर्निर्गुणंनिर्विकारं।सत्तामा त्रंनिर्विशेषंनिरीहंसत्वंसाक्षाद्विष्णुरध्यात्मदीपः॥२४॥नष्टेलोकेद्विपरार्द्धावसानेमहाभूतेष्वादिभूतङ्गतेषु ॥

चेतनम् किंवैशेषिकाणामिवज्ञानगुणंननिर्गुणंकिंमीमांसकानामिवज्ञानपरिणामिननिर्विकारंकिंपुष्करासादीनामिवशक्तिविक्षेपपरिणा मिनसत्तामात्रंतर्हिकिंसामान्यंननिर्विशेषंतर्हिकिंकारणत्वात् सक्रियंननिरीहंसन्निधानमात्रेणकारणंएवंभूतंकिमपिकार्य्यकल्प्यंयद्वस्तुस एवसाक्षात्त्वंविष्णुरितिअपरोक्षश्चेत्याहअध्यात्मदीपइतिबुद्ध्यादिकरणसंघातप्रकाशकइत्यर्थःअथवाअव्यक्तंनकेनापिप्रकारेणव्यज्यत इति अव्यक्तंकथंउत्तरत्रातावन्नव्यज्यतइत्याह आद्यंसर्वस्यकार्य्यस्याद्यंअनादीत्यर्थःतथाब्रह्मज्योतिर्निर्गुणंनिर्विकारमितिचतुर्भिःपदैर्दे शेनप्रकाशेनचगुणेनचविकारेणचव्यक्तिंनिराकरोतितथासत्तामात्रमितिविशेषेणनिर्विशेषमितिसामान्येननिरीहमितिक्रिययाचव्यक्तिं निराकरोतिअन्यत्समानंएवंभूतस्यतवनभयशङ्केतिभावः॥२५॥किंचमहाप्रलयेप्यवशिष्यमाणस्यकुतोभयमित्याह ॥ ॥ ॥

नष्टे लोके इति चराचरे लोके महाभूतेषु लीने तेषु च्यादिभूतं भूतसूक्ष्मं प्रविष्टेषु तन्मात्रेषु व्यक्ते अव्यक्तं प्रधानं प्राप्ते अशेषात्मके प्रधाने संज्ञा प्र
ज्ञा यस्य स एवं मयि लीनमिदमस्ति पश्चादेव सुबोधनाय मिति स अशेषसंज्ञः शेषसंज्ञ इति वा ॥२५॥ किंच एवं प्रलयहेतुर्योयं कालस एनं हे अव्यक्त बं
धो प्रकृतिप्रवर्तक तस्य प्रलयावधिभूतस्य तेतव चेष्टां लीलां चेष्टे ते विपरिवर्त्तते पुनः पुनर्वत्सरावृत्त्या महीयान् हि पराद्धरूपः यस्य चेष्टामाहुः तं त्वा
त्वां क्षेमधाम अभयस्थानं प्रपद्ये शरणं व्रजामि ॥२६॥ क्षेमधामत्वमेवाह मर्त्य इति लोकान् प्रति यदृच्छया केनापि भाग्योदयेन हे आद्य ॥२७॥ प्रस्तुतं वि

व्यक्तेऽव्यक्तं कालवेगेन याते भवानेकः शिष्यते शेषसंज्ञः ॥२५॥ योऽयं कालस्तस्य तेव्यक्तबंधो चेष्टामाहुश्चेष्टते येन
विश्वं । निमेषादिर्वत्सरांतो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये ॥२६॥ मर्त्यो मृत्युव्यालभीतः पलायन् लोकान्सर्वान्नि
र्भयं नाध्यगच्छत् । त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य स्वस्थः शेते मृत्युरस्मादपैति ॥२७॥ स त्वं घोरादुग्रसेनात्मजान्नस्त्रा
हि त्रस्तान्भृत्यवित्रासहासि । रूपं चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥२८॥ जन्म ते मय्यसौ पापो
मा विद्यान्मधुसूदन । समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥२९॥ उपसंहर विश्वात्मन्नदो रूपमलौकिकं । शंखचक्र
गदापद्मश्रिया जुष्टं चतुर्भुजं ॥३०॥ विश्वं यदेतत्स्वतनौ निशांते यथाऽवकाशं पुरुषः परो भवान् । बिभर्ति सोयं मम गर्भगोऽ
भूदहो नृलोकस्य विडंबनं हि तत् ॥३१॥ श्रीभगवानुवाच ॥ त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायंभुवे सति । तदायं सुतपा नाम
प्रजापतिरकल्मषः ॥३२॥ युवां वै ब्रह्मणादिष्टौ प्रजासर्गे यदा ततः । संनियम्येंद्रियग्रामं तेपाथे परमं तपः ॥३३॥ वर्षवाता
तपहिमघर्मकालगुणाननु । सहमानौ श्वासरोधविनिर्धूतमनोमलौ ॥३४॥ शीर्णपर्णानिलाहारावुपशांतेन चेतसा । म
त्तः कामानभीप्संतौ मदाराधनमीहतुः ॥३५॥

१ त्रापयति सत्वमिति भृत्यानां वित्रासं हंतीति भृत्यवित्रासहा भृत्यविदिति वा च्छेदः पौ
रुषं परेश्वरं ध्यानधिष्ण्यं ध्यानास्पदं मांसदृशां मांसचक्षुषां प्रत्यक्षं मा कृथाः ॥२८॥ भवत एव हेतोः निमित्तभूतात् कंसात् समुद्विजे बिभेमि यतः अ
धीरचित्ता ॥२९॥३०॥ किमित्युपसंहर्तव्यं एवंभूतेन मया पुत्रेण तव महती श्लाघा स्यादिति तत्राह विश्वमिति निशांते प्रलयावसाने यथावकाश
मसंकोचतः असंभावितत्वादुपहास्यत्वे वस्यादित्यर्थः ॥३१॥ चतुर्भुजरूपेणाविर्भावे कारणं तावदाह त्वमेवेत्यादि चतुर्दशभिः पूर्वसर्गे प्र
थमजन्मनि अभूः आसीः पृश्निर्नाम स्वायंभुवे मन्वंतरे तदा अयं वसुदेवः ॥३२॥ तेपाथे तपः कृतवंतौ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥



T

तप्यतोः आचरतोः ईयुर्गतानिमदात्मनोःमच्चितयोः॥३६॥अमुनावपुषा॥३७॥प्रादुरासंप्रादुर्भूतोस्मिवरदराट्वरदेषुश्रेष्ठइत्यर्थःतेनसह
ह्रेणचवारंवारमाविर्भावेकारणमुक्तंकामस्यदित्सयादातुमिच्छयामादृशःमयासदृशः॥३८॥मेमत्तोपियुवामपवर्गंनवव्राथेनवृतवंतौ
॥३९॥वरंदत्त्वामयिगतेसति॥४०॥४१॥अदित्यांकश्यपात्वामनआसेतियदुक्तंतदपितद्रूपयोर्युवयोरहमेवपुनरासमित्यर्थः॥४२॥४३॥

एवंवांतप्यतोस्तीव्रंतपःपरमदुष्करं।दिव्यवर्षसहस्राणिद्वादशेयुर्मदात्मनोः॥३६॥तदावांपरितुष्टोऽहममुनावपु
षाऽनघे।तपसाश्रद्धयानित्यंभक्त्याचहृदिभावितः॥३७॥प्रादुरासंवरदराड्युवयोःकामदित्सया।व्रियतांवरइत्यु
क्तेमादृशोवांवृतःसुतः॥३८॥अजुष्टग्राम्यविषयावनपत्यौचदंपती।नवव्राथेऽपवर्गंमेमोहितौदेवमायया॥३९॥ग
तेमयियुवांलब्ध्वावरंमत्सदृशंसुतं।ग्राम्यान्भोगानभुंजाथांयुवांप्राप्तमनोरथौ॥४०॥अदृष्ट्वान्यतमंलोकेशीलौदार्य
गुणैःसमम्।अहंसुतोवामभवंपृश्निगर्भइतिश्रुतः॥४१॥तयोर्वांपुनरेवाहमदित्यामासकश्यपात्।उपेन्द्रइति
विख्यातोवामनत्वाच्चवामनः॥४२॥तृतीयेस्मिन्भवेऽहंवैतेनैववपुषाऽथवां।जातोभूयस्तयोरेवसत्यंमेव्याहृतंस
ति॥४३॥एतद्वांदर्शितंरूपंप्राग्जन्मस्मरणायमे।नान्यथामद्भवंज्ञानंमर्त्यलिंगेनजायते॥४४॥युवांमांपुत्रभावे
नब्रह्मभावेनवासकृत्।चिन्तयन्तौकृतस्नेहौयास्येथेमद्गतिंपरां॥४५॥यदिकंसाद्बिभेषित्वंतर्हिमांगोकुलंनय।
मन्मायामानयाशुत्वंयशोदागर्भसंभवाम्॥४६॥श्रीशुकउवाच॥इत्युक्त्वासीद्धरिस्तूष्णींभगवानात्ममायया।पि
त्रोःसंपश्यतोःसद्योबभूवप्राकृतःशिशुः॥४७॥ततश्चशौरिर्भगवत्प्रचोदितःसुतंसमादायससूतिकागृहात्
॥यदाबहिर्गन्तुमियेषतर्ह्यजायायोगमायाऽजनिनंदजायया॥४८॥

९ प्राक्प्रथमंतावदेतद्रूपंमेजन्मेतिस्मरणायज्ञानाय
दर्शितंमद्भवंमद्विषयंअनंतरंत्वदिच्छयाबालोपिभविष्यामीतिभावः॥४४॥ननुत्वयिप्रसन्नेपिकथमावयोःपुनःपुनर्जन्मेतिअतःपरंनभ
विष्यतीत्याहयुवामिति॥४५॥४६॥४७॥यदिकंसाद्बिभेषितर्हिमांगोकुलंनययशोदायाश्चतांकन्यांमन्मायामानयेति प्रथममेवभगवताप्र
चोदितोवसुदेवोयदागंतुमैच्छततदेवअजापियायोगमायासानंदजाययानिमित्तमात्रभूतयाअजनिजाता ॥ ४८ ॥ ३ ॥ ३ ॥

ह. ताः प्रत्ययार्थाः सर्वास्तत्र योयेषां अथवा हृताः प्रत्ययाः अन्या अस्य सर्वास्तयोयेषां जाग्रतामपि तथा भूतेषु द्वारपालेषु सत्सु बृहत्सु कपाटेषु लोहकीलकयुक्तशृंखलैः बृहद्भिः कपाटादिभिर्दुरत्यया इति वा ॥ ४९ ॥ स्वयमेवाभ्यवर्त्यंत विवृता इत्यर्थः व्यव्रियंतेति वक्तव्ये गुणश्छांदसः रवेर्निमित्तात् ॥ ५० ॥ गंभीरोयस्तोयौघस्तस्य जवेन ये ऊर्मयस्तैः फेनिला फेनव्याप्ता भयानकैरावर्तशतैर्व्याप्तापि श्रियः पतेः सी

तयाहृतप्रत्ययसर्ववृत्तिषु द्वाःस्थेषु पौरेष्वपि शायिते ष्वथ ॥ द्वारस्तु सर्वाः पिहिता दुरत्यया बृहत्कपाटायस कीलशृंखलैः ॥ ४९ ॥ ताः कृष्णवाहे वसुदेव आगते स्वयं व्यवर्यंत यथा तमो रवेः । ववर्ष पर्जन्य उपांशुगर्जितः शेषोन्वगाद्वारि निवारयन्फणैः ॥ ५० ॥ मघोनि वर्षत्यसकृद्यमानुजा गंभीरतोयौघजवोर्मि फेनिला । भयानकावर्तशताकुला नदी मार्गं ददौ सिंधुरिव श्रियः पतेः ॥ ५१ ॥ नंदव्रजं शौरिरुपेत्य तत्र तान् गोपान् प्रसुप्तानुपलभ्य निद्रया ॥ सुतं यशोदाशयने निधाय तत्सुतामुपादाय पुनर्गृहानगात् ॥ ५२ ॥ देवक्याः शयने न्यस्य वसुदेवोथ दारिकां । प्रतिमुच्य पदोर्लोहमास्ते पूर्ववदावृतः ॥ ५३ ॥ यशोदा नंदपत्नी च जातं परमबुध्यत । न तल्लिंगं परिश्रांता निद्रयापगतस्मृतिः ॥ ५४ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे कृष्णजन्मनि तृतीयोऽध्यायः ॥ ३ ॥ श्रीशुक उवाच ॥ बहिरंतःपुरद्वारः सर्वाः पूर्ववदावृताः । ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥ १ ॥ ते तु तूर्णमुपव्रज्य देवक्या गर्भजन्म तत् ॥ आचख्युर्भोजराजाय यदुद्विग्नः प्रतीक्षते ॥ २ ॥ स तल्पात्तूर्णमुत्थाय कालोयमिति विह्वलः । सूतीगृहमगात्तूर्णं प्रस्खलन्मुक्तमूर्द्धजः ॥ ३ ॥ तमाह भ्रातरं देवी कृपणा करुणं सती । स्नुषेयं तव कल्याणस्त्रियं मा हंतुमर्हसि ॥ ४ ॥ बहवो हिंसिता भ्रातः शिशवः पावकोपमाः ॥ त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयतां ॥ ५ ॥

९ तापतेः ॥ ५१ ॥ निद्रया अजया ॥ ५२ ॥ प्रतिमुच्य बध्वा पदोः पादयोर्लोहं निगडं आस्ते स्म ॥ ५३ ॥ जातं किंचिदिति केवलमबुध्यत न तु तल्लिंगं पुत्रः कन्या चेति योगनिद्रया च मोहितेति ॥ ५४ ॥ इति दशमे तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थे चंडिकावाक्यमाकर्ण्यातिभयाकुलः । दुर्मन्त्रिभिर्हितं मेने कंसो बालादिहिंसनं ॥ १ ॥ १ ॥ तत् अष्टमं जन्म ॥ २ ॥ कालो मृत्युः ॥ ३ ॥ ४ ॥ ५ ॥ ७ ॥

अङ्ग हे भ्रातः ॥ ६ ॥ दीनदीनवत् दीनादपि दीनवत् न तु तथा पुत्रस्यान्यत्र नीतत्वात्स्वाच योगमायेति ज्ञातत्वात् याचितोपि आचिच्छिदे हस्तात्पारु-
ष्यजग्राह ॥ ७ ॥ अपोथयत् हूले न विक्षेप ॥ ८ ॥ सद्य एव देवी भूत्वा ॥ ९ ॥ १० ॥ ११ ॥ कृपणानिति अन्यान् शिशून् हनिष्यतीति ज्ञात्वा वारयति पाठांतरे
तु मामां कृपणां वृथा अहिंसीः हिंसितवानसीति ॥ १२ ॥ बहूनामसु निकेतेषु वाराणस्यादिस्थानेषु ॥ १३ ॥ परमविस्मितः कथं देवी वागनृता जाते



नन्वहं ते ह्यवरजा दीना हतसुता प्रभो। दातुमर्हसि मंदाया अंगेमां चरमां प्रजां ॥ ६ ॥ श्रीशुक उवाच ॥ उपगुह्यात्मजा
मेवं रुदंत्या दीनदीनवत्। याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ॥ ७ ॥ तां गृहीत्वा चरणयोर्जातमात्रां स्वसुः सु
तां। अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ॥ ८ ॥ सा तद्धस्तात्समुत्पत्य सद्यो देव्यंबरं गता। अदृश्यतानुजा वि
ष्णोः सायुधाष्टमहाभुजा ॥ ९ ॥ दिव्यस्रगंबरालेपरत्नाभरणभूषिता। धनुःशूलेषुचर्मासिशंखचक्रगदाधरा ॥ १० ॥
सिद्धचारणगंधर्वैरप्सरःकिन्नरोरगैः। उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ॥ ११ ॥ किं मया हतया मंद जातः
खलु तवांतकृत्। यत्र क्व वा पूर्वशत्रुर्मा हिंसीः कृपणान्वृथा ॥ १२ ॥ इति प्रभाष्य तं देवी माया भगवती भुवि। बहुनाम
निकेतेषु बहुनामा बभूव ह ॥ १३ ॥ तयाभिहितमाकर्ण्य कंसः परमविस्मितः। देवकीं वसुदेवं च विमुच्य प्रश्रितोब्रवी
त् ॥ १४ ॥ अहो भगिन्यहो भाम मया वां बत पाप्मना। पुरुषाद इवापत्यं बहवो हिंसिताः सुताः ॥ १५ ॥ स त्वहं त्यक्तकारु
ण्यस्त्यक्तज्ञातिसुहृत्खलः। कान्लोकान्वै गमिष्यामि ब्रह्महेव मृतः श्वसन् ॥ १६ ॥ दैवमप्यनृतं वक्ति न मर्त्या एव केव
लं। यद्विश्रंभादहं पापः स्वसुर्निहतवान् शिशून् ॥ १७ ॥ मा शोचतं महाभागावात्मजान्स्वकृतंभुजः। जंतवो न सदैकत्र
दैवाधीनाः सहासते ॥ १८ ॥ भुवि भौमानि भूतानि यथा यांत्यपयांति च ॥

ति ॥ १४ ॥ हे भाम हे भगिनीभर्तः पुरुषादो राक्षसो यथा स्वाप
त्यमेव हिनस्ति तद्वत् ॥ १५ ॥ १६ ॥ १७ ॥ हे महाभागौ स्वकृतंभुजः स्वारब्धकर्मभोक्तृन् स्वात्मजान्मा शोचतम् किञ्च जंतवः प्राणिनः सदा नासते किंतु अल्प
कालमेव तदापि एकत्र नासते किंतु वियुज्यंते यतो दैवाधीनाः ॥ १८ ॥ सदा नासत इत्यनेन यदुक्तं जन्ममरणादि तदपि देहानामेव नात्मन इत्याह भुवीति ॥

भूतानि देहा एव यांति अपयांति च भवंति न भवंति चेत्यर्थः यथा भवि भौमानि घटादीनि तद्वत् एतेषु भूतेषु जन्मादिभिर्विक्रियमाणेषु अयमप्यविकारी सन् तया प्रत्यभिज्ञायमानो नाऽत्मा विपर्येति विपर्ययं न प्राप्नोति एकरूप एव वर्त्तत इत्यर्थः भौमेषु विक्रियमाणेषु यथा भूस्तथेति एवं विचार्यमाणे सति न शोकाद्यवकाशः॥१९॥ अज्ञानतस्तु न निवर्त्तत इत्याह यथेति यथा यथावत् अनेवंविदः एवमजानतः आत्मविपर्ययः देहात्मबुद्धिर्भवति यतो विपर्ययाद्भेदो भवति देहाहंकारेण ह्यात्मनि परिच्छिन्ने सतीदं कारास्पदं भिन्नं भवति यतो भेदात् पुत्रादिदेहैर्योगो वियोगश्च ततः संसृतिः सुखदुःखे इति यावदज्ञानं न निवर्त्तत इत्यर्थः॥२०॥ एवमुक्तप्रकारेण नैते तव तनयाः अहं तु तावन्न घाति तत्रापि तथाप्यज्ञानदृष्ट्यास्वतन

नायमात्मा तथैतेषु विपर्येति यथैव भूः॥१९॥ यथाऽनेवंविदो भेदो यत आत्मविपर्ययः। देहयोगवियोगौ च संसृतिर्न नि वर्त्तते॥२०॥ तस्माद्भद्रे स्वतनयान्मया व्यापादितानपि। मानुशोच यतः सर्वः स्वकृतं विंदतेऽवशः॥२१॥ यावद्धतोऽस्मि हन्तास्मीत्यात्मानं मन्यतेऽस्वदृक्। तावत्तदभिमान्यज्ञो बाध्यबाधकतामियात्॥२२॥ क्षमध्वं मम दौरात्म्यं साधवो दीनवत्सलाः। इत्युक्त्वाऽश्रुमुखः पादौ श्यालः स्वस्रोरथाग्रहीत्॥२३॥ मोचयामास निगडाद्विश्रब्धः कन्यकागिरा। देवकीं वसुदेवं च दर्शयन्नात्मसौहृदं॥२४॥ भ्रातुः समनुतप्तस्य क्षांतरोषा च देवकी। व्यसृजद्वसुदेवश्च प्रहस्य तमुवाच ह॥२५॥ एवमेतन्महाभाग यथा वदसि देहिनां। अज्ञानप्रभवाहंधीः स्वपरेति भिदा यतः॥२६॥ शोकहर्षभयद्वेषलोभमोहमदान्विताः। मिथो घ्नंतं न पश्यंति भावैर्भावं पृथग्दृशः॥२७॥ श्रीशुक उवाच॥ कंस एवं प्रसन्नाभ्यां विशुद्धं प्रतिभाषितः। देवकीवसुदेवाभ्यामनुज्ञातोऽविशद्गृहं॥२८॥

१ यान्मया व्यापादितानपि मानुशोचेति सांत्वयति तस्मादिति अज्ञानाश्रयमेव कर्मवादमाह यत इति॥२१॥ कथं तर्हि ब्राह्मणादिहंतुः तद्वधस्य च प्रायश्चित्तश्रवणं अज्ञानमूलमेवेत्याह यावदिति अस्वदृक् देहाभिमानी तावत् तदभिमानी तस्य देहस्य हननमात्मनि अभिमन्यमान इत्यर्थः॥२२॥ श्यालः कंसः स्वस्रोरिति स्वसृशब्देन द्विवचनानुपपत्त्या मिथुनगणनद्वारा मिथुनी लक्षणया स्वसृतत्पत्योरभिधानं लिंगसमवायेन प्राणभृत उपदधातीतिवत् देवकीवसुदेवयोः प्रत्येकं पादमग्रहीदित्यर्थः॥ श्यालशब्देन वा कथं चिद्वसुदेवाभिधानं॥२३॥ आत्मसौहृदं प्रियवादादिना दर्शयन्॥२४॥२५॥२६॥ स्वपरभेददर्शने किं भवति तदाह शोकहर्षेति भावैरेव निमित्तभूतैर्मिथो भावान् घ्नंतं भावमीश्वरं पृथग्दृशस्तेन पश्यंति किं तु हमेवहंताहतश्चेति मन्यंत इत्यर्थः॥२७॥ विशुद्धं यथा भवति ॥ २८ ॥

॥२९॥नातिकोविदाः दृष्टमात्रमतयः॥३०॥ननिर्गतानिदशदिनानियेषांतान् अर्भांश्च॥३१॥३२॥अस्यतःबाणानक्षिपतःसतःउत्सृज्यरणं त्यक्त्वा॥३३॥३४॥अन्यासक्तान् विमुखांश्चेतिनहंसिनहिनस्सि॥३५॥क्षेमेनिर्भयेदेशेशूरैःसंयुगाद्न्यत्रविकत्थनंप्रौढिवादोयेषांतैः ननुहरे र्बिभेमिशंभोश्चेतिचेत्तत्राहुः रहोजुषेतिसर्वस्याप्यंतःप्रविष्टेनकचिदपिबहिरदृष्टेनेत्यर्थः पुरुषप्रवृत्तिरहितमिलावृत्तवनमोकोयस्यतेनशं



तस्यांरात्र्यांव्यतीतायांकंसआहूयमंत्रिणः।तेभ्यआचष्टतत्सर्वंयदुक्तंयोगनिद्रया॥२९॥आकर्ण्यभर्तुर्गदितंतमूचु र्देवशत्रवः।देवान्प्रतिकृतामर्षादैतेयानातिकोविदाः॥३०॥एवंचेत्तर्हिभोजेंद्रपुरग्रामव्रजादिषु।अनिर्दशान्निर्दशां श्चहनिष्यामोऽद्यवैशिशून्॥३१॥किमुद्यमैःकरिष्यंतिदेवाःसमरभीरवः।नित्यमुद्विग्नमनसोज्याघोषैर्धनुषस्तव॥ ॥३२॥अस्यतस्तेशरव्रातैर्हन्यमानाःसमंततः।जिजीविषवउत्सृज्यपलायनपरायपुः॥३३॥केचित्प्रांजलयोदी नान्यस्तशस्त्रादिवौकसः।मुक्तकच्छशिखाःकेचिद्भीताःस्मइतिवादिनः॥३४॥नत्वंविस्मृतशस्त्रास्त्रान्विरथान्भ यसंवृतान्।हंस्यन्यासक्तविमुखान्भग्नचापानयुध्यतः॥३५॥किंक्षेमशूरैर्विबुधैरसंयुगविकत्थनैः।रहोजुषाकिं हरिणाशंभुनावावनौकसा॥३६॥किमिंद्रेणाल्पवीर्येणब्रह्मणावातपस्यता।तथापिदेवाःसापत्न्यान्नोपेक्ष्याइतिम न्महे।ततस्तन्मूलखननेनियुंक्ष्वास्माननुव्रतान्॥३७॥यथामयोंगेसमुपेक्षितोनृभिर्नशक्यतेरूढपदश्चिकित्सि तुं।यथेंद्रियग्रामउपेक्षितस्तथारिपुर्महान्बद्धबलोनचाल्यते॥३८॥मूलंविष्णुर्हिदेवानांयत्रधर्मःसनातनः। तस्यचब्रह्मगोविप्रास्तपोयज्ञाःसदक्षिणाः॥३९॥तस्मात्सर्वात्मनाराजन्ब्राह्मणान्ब्रह्मवादिनः।तपस्विनोय ज्ञशीलान्गाश्चहन्मोहविर्दुघाः॥४०॥विप्रागावश्चवेदाश्चतपःसत्यंदमःशमः।श्रद्धादयातितिक्षाचक्रतव श्चहरेस्तनूः॥ ४१ ॥ सहिसर्वसुराध्यक्षोह्यसुरद्विड्गुहाशयः ॥ ॥ ॥ ॥ ॥ ॥ ॥

भुनावा॥३६॥यद्यप्युद्यमैर्देवानकिंचिदपिकर्तुंसमर्थास्तथापिनीतिरनुसर्तव्येवेत्याहुः तथापीति॥३७॥रूढपदःबद्धमूलः॥३८॥देवा नांमूलंविष्णुःसचयत्रधर्मस्तत्रास्तेधर्मस्यमूलंवेदादयइति॥ ३९ ॥ ४० ॥ ४१ ॥ किंचविप्रादयोहरेरेवतनवो ॥ ॥ ॥ ॥

गर्गो यदाह तस्मान्नंदात्मजोऽयं तेन नारायणसमो गुणैरित्यादि॥५६॥५७॥५८॥ वत्सपृष्ठगतं हत्वा वत्सदंभासुरं हरिः। मुनिपूथगतं चाहन्नग्रण्यं दंभिनां बकम्॥१॥ इति दशमे टीकायामेकादशोऽध्यायः॥११॥ द्वादशे तु महासर्पवपुर्दुरसमघासुरम्। वत्सपालगिलं क्रुद्धो गलेऽहन्निति वर्ण्यते॥१॥ महाबकगलक्रीडाकेवलस्य न कौतुकम्। इतीवाघासुरमुखे स सखः प्राविशद्धरिः॥२॥ क्वचित्कदाचिद्वनाशाय वने एव प्रथमं भोजनं कर्तुम्॥१॥ तेनैव शृंगरवेण श्रीकृष्णेन च सह पृथुका बालाः स्निग्धाः स्नेहयुक्ताः शिक्यं शिक्यं रम्याः शिग्वेत्रादयो येषां ते सहस्राधिकसंख्यायुक्तान्वत्सान्॥२॥३॥ काचादिभिः भू-

इति नंदादयो गोपाः कृष्णरामकथां मुदा। कुर्वंतो रममाणाश्च नाविंदन् भववेदनां॥५७॥ एवं विहारैः कौमारैः कौमारं जहतुर्व्रजे। निलायनैः सेतुबंधैर्मर्कटोत्प्लवनादिभिः॥५८॥ इति श्रीभागवते महापुराणे दशमस्कन्धे वत्सबकवधो नामैकादशोऽध्यायः॥११॥ श्रीशुक उवाच॥ क्वचिद्वनाशाय मनो दधद्व्रजात्प्रातः समुत्थाय वयस्यवत्सपान्। प्रबोधयन् शृंगरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः॥१॥ तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः। स्वान्स्वान्सहस्रोपरिसंख्ययान्वितान्वत्सान्पुरस्कृत्य विनिर्ययुर्मुदा॥२॥ कृष्णवत्सैरसंख्यातैर्यूथीकृत्य स्ववत्सकान्। चारयंतोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह॥३॥ फलप्रवालस्तबकसुमनःपिच्छधातुभिः। काचगुंजामणिस्वर्णभूषिता अप्यभूषयन्॥४॥ मुष्णंतोऽन्योन्यशिक्यादीन् ज्ञातानाराच्च चिक्षिपुः। तत्रत्याश्च पुनर्दूराद्धसंतश्च पुनर्ददुः॥५॥ यदि दूरं गतः कृष्णो वनशोभेक्षणाय तम्। अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे॥६॥ केचिद्वेणून्वादयंतो ध्मांतः शृंगाणि केचन॥ केचिद्भृंगैः प्रगायंतः कूजंतः कोकिलैः परे॥७॥ विच्छायाभिः प्रधावंतो गच्छंतः साधुहंसकैः। बकैरुपविशंतश्च नृत्यंतश्च कलापिभिः॥८॥ विकर्षंतः कीशबालानारोहंतश्च तैर्द्रुमान्। विकुर्वंतश्च तैः साकं प्लवंतश्च पलाशिषु ॥ ९ ॥ ७ ॥

षैर्मातृभिर्भूषिता अपि फलादिभिरात्मानमभूषयन्नित्यर्थः॥४॥ मुष्णंतश्चोरयंतः॥५॥ यदि दूरं गतः कृष्णो भवति तर्हीति॥६॥ ध्मांतः वादयंतः भृंगैः सह॥७॥ विच्छायाभिः पक्षिच्छायाभिः कलापिभिर्मयूरैः॥८॥ कीशबालान्वृक्षशाखासु लंबमानानिव वानरलांगूलान्याकर्षंतः लांगूलममुञ्चतः तैः सह द्रुमानारोहंतः विकुर्वंतः दंतदर्शनभ्रूविजृंभादिभिः तैः सह विकारान्कुर्वंतः पलाशिषु वृक्षेषु प्लवंतः शाखायाः शाखांतरमुत्प्लवंतः॥९॥

 

प्रतिच्छायाः प्रतिबिंबानि॥१०॥ताननतिविस्मितः श्लोकद्वयेनाभिनंदति इत्थमिति सतां विदुषां ब्रह्म च तत्सुखं च अनुभूतिश्च तया स्वप्रकाशपरमसुखे
नेत्यर्थः भक्तानां परदैवतेन आत्मप्रदेन नाथेन मायाश्रितानां तु नरदारकतया प्रतीयमानेन सह विजह्रुः कृतानां पुण्यानां पुंजाः राशयो येषां ते ब्रह्म
विदां तदनुभव एव भक्तानामतिगौरवेणैव भजनं एतेऽतु तेन सह सख्येन विजह्रुः अहो भाग्यमिति भावः॥११॥बहुभिर्जन्मभिः कृच्छ्रेण धृत आ
त्मा मनो यैस्तैरपि।१२।सुखक्रीडनवीक्षणेनास्समायस्य सः कथंभूतः यस्य अंतरं छिद्रं पीतामृतैरपि ततो मृत्युभीतैरमरैरपि प्रतीक्ष्यते कथं मरिष्यति
कदा वेति यद्वा कथंभूतं सुखक्रीडनं यत् अंतर्हृदये अमरैः प्रतीक्ष्यते विचिंत्यते पीतामृतैरपि पुनर्निजजीविते प्सुभिः अयं भावः नामृतपानमात्रेण जी

साकं भेकैर्विलंघन्तः सरित्प्रस्रवसंप्लुताः।विहसंतः प्रतिच्छायाः शपन्तश्च प्रतिस्वनान्॥१०॥इत्थं सतां ब्रह्मसुखा
नुभूत्या दास्यं गतानां परदैवतेन।मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुंजाः॥११॥यत्पादपांसुर्बहुज
न्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यगम्यः।स एव यद्दृग्विषयः स्वयं स्थितः किं वर्ण्यते दिष्टमहो व्रजौकसाम्॥१२॥अथा
घनामाऽभ्यपतन्महाऽसुरस्तेषां सुखक्रीडनवीक्षणाक्षमः।नित्यं यदंतर्निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्य
ते॥१३॥दृष्ट्वाऽर्भकान्कृष्णमुखानघासुरः कंसानुशिष्टः स बकीबकानुजः।अयं तु मे सोदरनाशकृत्तयोर्द्वयोर्ममैनं
सबलं हनिष्ये॥१४॥एते यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः।प्राणे गते वर्ष्मसु का नु चिंता प्रजाः
सवः प्राणभृतो हि ये ते॥१५॥इति व्यवस्याजगरं बृहद्वपुः स योजनायाममहाद्रिपीवरम्।धृत्वाद्भुतं व्यात्तगुहाननं
तदा पथि व्यशेत ग्रसनाशया खलः॥१६॥



॥१३॥कृष्णप्रमुखानर्भकान्दृष्ट्वा स इति व्यवस्य निश्चित्य आजगरं वपुर्धृत्वा तेषां ग्रसनाशया पथि व्यशेतेति तृतीयश्लोकेनान्वयः कंसेनानुशिष्टः
प्रहितः बकीपूतना कथं व्यवस्यत्तदाह अयं त्विति सार्द्धेन मम तयोर्द्वयोः सोदरयोः स्थाने एनं कृष्णं सबलं ससैन्यं वत्सतत्पालसहितं हनिष्या
मि॥१४॥ननु तथापि व्रजस्थास्तु अवशिष्येरन् नेत्याह एत इति तिलापः कृताः तिलोदकतया कल्पिताः वर्ष्मसु देहेषु प्रजाः एव असवो येषां ते तथा

[illegible] प्रसारितं गुहा तत्स्यमाननं यस्मिन् तत् ॥ १६ ॥ ॥

॥३१॥नूत्नैः कुचगतैः कुंकुमैः कांतिर्यासांताः नूत्नेषु कुचेषु यत् कुंकुमं तेन कांतिर्यासामितिवा॥३२॥३३॥व्रजावासं गोकुलवसतिस्थानम्॥३४॥

॥३५॥स्वकालेन सद्योग्यकालेन॥३६॥कौमारलीलां निरूपयति अविदूर इत्यादिना॥३७॥क्षेपणैर्बिल्वामलकादिभिः किंकिणीयुक्तैः पादैः
क्षिपतस्ताडयतः वत्सपाला एवद्वित्राः कंबलादिपिहिताः वृषरूपमनुकुर्वंतितैः सह॥३८॥स्वयमपितथैव वृषायमाणौ नर्दन्तौ तदनुकारि

गोधनानि पुरस्कृत्य शृङ्गाण्यापूर्य सर्वतः।तूर्यघोषेण महतायशुः सह पुरोहिताः॥३१॥गोप्योरूढरथानूत्नकुचकुं
कुमकांतयः।कृष्णलीलाजगुः प्रीतानिष्ककंठ्यः सुवाससः॥३२॥तथायशोदारोहिण्यावेकंशकटमास्थिते।रेजतुरा
मकृष्णाभ्यां तत्कथाश्रवणोत्सुके॥३३॥वृंदावनं संप्रविश्य सर्वकालसुखावहम्।तत्र चक्रुर्व्रजावासं शकटैरर्द्धचं
द्रवत्॥३४॥वृंदावनं गोवर्द्धनं यमुनापुलिनानि च।वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृप॥३५॥एवं व्रजौकसां
प्रीतिं यच्छंतौ बालचेष्टितैः।कलवाक्यैः स्वकालेन वत्सपालौ बभूवतुः॥३६॥अविदूरे व्रजभुवः सहगोपालदार
कैः।चारयामासतुर्वत्सान्नानाक्रीडापरिच्छदौ॥३७॥क्वचिद्वादयतो वेणून्क्षेपणैः क्षिपतः क्वचित्।क्वचित्पादैः
किंकिणीभिः क्वचित्कृत्रिमगोवृषैः॥३८॥वृषायमाणौ नर्दन्तौ युयुधाते परस्परम्।अनुकृत्य रुतैर्जन्तूंश्चेरतुः प्राकृतौ
यथा॥३९॥कदाचिद्यमुनातीरे वत्सांश्चारयतोः स्वकैः।वयस्यैः कृष्णबलयोर्जिघांसुर्दैत्य आगमत्॥४०॥तं वत्सरूपि
णं वीक्ष्य वत्सयूथगतं हरिः।दर्शयन्बलदेवाय शनैर्मुग्ध इवासदत्॥४१॥गृहीत्वापरपादाभ्यां सहलांगूलमच्युतः॥
भ्रामयित्वा कपित्थाग्रे प्राहिणोद्गतजीवितम्॥४२॥स कपित्थैर्महाकायः पात्यमानैः पपात ह।तं वीक्ष्य विस्मिता बालाः शशं
सुः साधु साध्विति॥४३॥देवाश्च परिसंतुष्टा बभूवुः पुष्पवर्षिणः।तौ वत्सपालकौ भूत्वा सर्वलोकैकपालकौ॥ ४४ ॥

शब्दान् कुर्वन्तौ युयुधाते इत्यर्थः रुतैः शब्दैर्जन्तून्हंसमयूरादीन्॥३९॥४०॥मुग्ध इव अजानन्निव आसदत् समीपमागमत्॥४१॥अपर
पादाभ्यां सलाङ्गूलं यथा भवति तथा गृहीत्वा॥४२॥४३॥सर्वेषां लोकानामेकौ मुख्यौ पालकौ प्रातराशः प्रातर्भोज्यमन्नं तत्सहितौ ॥ ४४ ॥
T

अभ्याशंसमीपं॥४५॥४६॥४७॥रामआदिर्येषान्तेनतुरामः॥४८॥४९॥तुण्डयोश्चञ्चोर्वीरणवत् अग्रंथितृणविशेषवत्॥५०॥समीडिरेतुष्टु
वुः आनकैःशङ्खैश्चसंस्तवैःसह॥५१॥स्वस्थानमागतंप्राणमिवकृष्णंप्रणीयएकीकृत्य॥५२॥अतिप्रियेणप्रीत्याआदृताःसादराःप्रेत्यागत



सप्रातराशौगोवत्सांश्चारयंतौविचेरतुः।स्वंस्वंवत्सकुलंसर्वेपाययिष्यंतएकदा।गत्वाजलाशयाभ्याशंपाययित्वा
पपुर्जलम्॥४५॥तेतत्रददृशुर्बालामहासत्वमवस्थितम्।तत्रसुर्वज्रनिर्भिन्नंगिरेःशृंगमिवच्युतम्॥४६॥सवैब
कोनाममहानसुरोबकरूपधृक्।आगत्यसहसाकृष्णंतीक्ष्णतुंडोऽग्रसद्बली॥४७॥कृष्णंमहाबकग्रस्तंदृष्ट्वारामा
दयोऽर्भकाः।बभूवुरिन्द्रियाणीवविनाप्राणंविचेतसः॥४८॥तंतालुमूलंप्रदहन्तमग्निवद्गोपालसूनुंपितरंजगद्गु
रोः।चच्छर्दसद्योऽतिरुषाऽक्षतंबकस्तुण्डेनहंतुंपुनरभ्यपद्यत॥४९॥तमापतंतंसनिगृह्यतुंडयोर्दोर्भ्यांबकंकं
ससखंसतांपतिः।पश्यत्सुबालेषुददारलीलयामुदावहोवीरणवद्दिवौकसाम्॥५०॥तदाबकारिंसुरलोकवा
सिनःसमाकिरन्नंदनमल्लिकादिभिः।समीडिरेचानकशंखसंस्तवैस्तद्वीक्ष्यगोपालसुताविसिस्मिरे॥५१॥मुक्तं
बकास्यादुपलभ्यबालकारामादयःप्राणमिवेंद्रियोगणः।स्थानागतंतंपरिरभ्यनिर्वृताःप्रणीयवत्सान्व्रजमेत्य
तज्जगुः॥५२॥श्रुत्वातद्विस्मितागोपागोप्यश्चातिप्रियादृताः।प्रेत्यागतमिवौत्सुक्यादैक्षंततृषितेक्षणाः॥५३॥
अहोबतास्यबालस्यबहवोमृत्यवोऽभवन्।अप्यासीद्विप्रियंतेषांकृतंपूर्वंयतोभयम्॥५४॥अथाप्यभिभवंत्येनं
नैवतेघोरदर्शनाः।जिघांसयैनमासाद्यनश्यंत्यग्नौपतंगवत्॥५५॥अहोब्रह्मविदांवाचोनासत्याःसंतिकर्हि
चित्।गर्गोयदाहभगवानन्वभावितथैवतत्॥५६॥

९ मिवलोकांतरादागतमिवतृषितानि अतृप्तानि अमृतंपिबं
तीवईक्षणानियेषांते॥५३॥ ॥अहोबतेत्यादिश्लोकत्रयस्यइतिनंदादयइत्यनेनान्वयः अपिएवमपितेषामेवानिष्टमासीत्
तेयतःपूर्वमन्येषांभयंकृते॥५४॥अथघोरदर्शनाअपिनाभिभवंतिनधर्षयंति॥ ५५ ॥ ॥ ॥ ॥ ॥ ॥

अद्भुतमितियदुक्तंतद्दर्शयितुंविशिनष्टिधरायामधरोष्ठोयस्यसःजलदेषूत्तरोष्ठोयस्यसःदर्याविवाननस्यांतोसृक्किणीयस्यसःगिरेःशृङ्गाणीव
दंष्ट्रायस्यसःध्वांतवदंतरास्यंयस्यसःवितताध्वेवजिह्वायस्यसःपरुषानिलवत् श्वासोयस्यसःदववदीक्षणयोरुष्माःदाववद्दृष्टिरित्यर्थः परुषा
निलश्वासश्वासौदवेक्षणोष्मश्चतथा॥१७॥वस्तुतोऽजगरमेवव्यात्ततुंडंदृष्ट्वावृंदावनस्यश्रीःसंपदेषेतिभ्रांत्यामलाविपरीतंव्यात्ताजगरतुंडस
दृश्यनोत्प्रेक्षितवंतः॥१८॥उत्प्रेक्षामेवप्रश्नोत्तराभ्यामाहुःअहोइतिसत्वकूटंसत्वाभासमिदंवानवातत्रापिअस्मत्संग्रसनायव्यात्तंविदारितंय
द्व्यालतुंडंतद्दाचरतिवानवा॥१९॥निश्चितंतथैवेत्याहसत्यमितिअर्ककरैरारक्तंघनमुत्तरोष्ठवत्पश्यततस्यघनस्यप्रतिच्छाययाअरुणंरोध

धराऽधरोष्ठोजलदोत्तरोष्ठोदर्य्याननांतोगिरिशृङ्गदंष्ट्रः।ध्वांतांतरास्योविततावजिह्वःपरुषानिलश्वासदवेक्षणो
ष्मः॥१७॥दृष्ट्वातंतादृशंसर्वेमलावृंदावनश्रियम्।व्यात्ताजगरतुंडेनह्युत्प्रेक्षंतेस्मलौल्यया॥१८॥अहोमित्राणिग
दतसत्वकूटंपुरःस्थितम्।अस्मत्संग्रसनव्यात्तव्यालतुंडायतेनवा॥१९॥सत्यमर्ककरारक्तमुत्तराहनुवद्घनम्।अध
राहनुवद्रोधस्तत्प्रतिच्छाययाऽरुणम्॥२०॥प्रतिस्पर्द्धेतेसृक्किभ्यांसव्यासव्येनगोदरे।तुंगशृंगालयोऽप्येतास्तद्दंष्ट्राभि
श्चपश्यत॥२१॥आस्ततायाममार्गोयंरसनांप्रतिगर्ज्जति।एषामंतर्गतंध्वांतमेतदप्यंतराननं॥२२॥दावोष्णखरवा
तोऽयंश्वासवद्भातिपश्यत।तद्दग्धसत्वदुर्गन्धोप्यंतरामिषगंधवत्॥२३॥अस्मान्किमत्रग्रसितानिविष्टानयंतथाचे
द्बकवद्विनंक्ष्यति।क्षणादनेनेतिबकार्युशन्मुखंवीक्ष्योद्धसंतःकरताडनैर्ययुः॥२४॥इत्थंमिथोऽतथ्यमतज्ज्ञभाषि
तंश्रुत्वाविचिंत्येत्यमृषामृषायते।रक्षोविदित्वाऽखिलभूतहृत्स्थितःस्वानांनिरोद्धुंभगवान्मनोदधे॥ २५ ॥

स्थलंअधरोष्ठवत् पश्यतेतिसर्वत्रान्वेति॥२०॥सृक्किभ्यामोष्ठप्रांताभ्यांप्रतिस्पर्द्धेतेतुल्यतयावर्तेतेनगोदरेगिरिदर्य्यौएतास्तुङ्गशृङ्गालयः
तस्यदंष्ट्राभिःस्पर्द्धमानाः॥२१॥आस्ततायाममार्गःविस्ततोदैर्घ्यवान्मार्गःप्रतिगर्जतिप्रतिस्पर्धतेएषांशृंगाणामंतर्गतंमध्यगतंध्वान्तमेतत् अं
तराननंआननस्यमध्यंप्रतिगर्ज्जति॥२२॥दावेनउष्णःखरोवातोऽयंतेनदावाग्निनादग्धानांसत्वानांयोदुर्गन्धःसएवसर्पस्यांतर्गतामिषगंधवद्भाति।
॥२३॥एवंसत्यमेवाजगरमन्यथोत्प्रेक्ष्यनिर्भयायुःकिंग्रसिताग्रसिष्यतिअनेनश्रीकृष्णेनहंत्रेतिबकारेरुशत्कमनीयंमुखं॥२४॥अमृषावस्तुतःस
र्पंवपुरसुरंएवंमृषायतेस्वानांसर्पसादृश्यगोचरत्वेनप्रतीयतेइतितान्निरोद्धुंवारयितुंयावन्मनोदधेतावत्प्रविष्टाइत्युत्तरेणान्वयः॥ २५ ॥



T

तावत्प्रविष्टाएवकेवलंनतुतेनगीर्णाः गिलिताः जीर्णा इतिपाठेपिसएवार्थः कथंभूतेन हृतयोः स्वकयोरंतंस्मरति अनुध्यायतीति तथातेन अत एवबकारेः श्रीकृष्णस्यप्रवेशंप्रतीक्षमाणेन ॥२६॥ स्वकरादवच्युतान् विनिःसृतान् विस्मितः सन्कृत्यंकिमत्रेत्यादि विचिंत्यतत्रोपायंज्ञात्वास्य मप्यविशदित्यन्वयः ॥२७॥ कथंविचिंत्यअस्यजीवनंअमीषांचविहिंसनमितिद्वयंवैनिश्चितंकथंनस्यादिति ॥२८॥ घनच्छदामेघांतरिताःकौ णपाःकुणपाशिनोराक्षसाः कौणपोनिर्ऋतिस्तदीयाइतिवा ॥२९॥ चूर्णीकर्तुमिच्छोस्तस्यगलेआदावेवतरसावृधेअवर्द्धत ॥३०॥ निरुद्धोमार्गो

तावत्प्रविष्टास्त्वसुरोदरांतरंपरन्नगीर्णाः शिशवः सवत्साः । प्रतीक्षमाणेनबकारिवेशनंहतस्वकांतस्मरणेनरक्षसा ॥२६॥ तान्वीक्ष्यकृष्णः सकलाभयप्रदोह्यनन्यनाथान्स्वकरादवच्युतान् । दीनांश्चमृत्योर्जठराग्निघासान्घृणा र्दितोदिष्टकृतेनविस्मितः ॥२७॥ कृत्यंकिमत्रास्यखलस्यजीवनंनवाअमीषांचसतांविहिंसनं । द्वयंकथंस्यादितिसं विचिंत्यतज्ज्ञात्वाविशत्तुण्डमशेषदृग्घरिः ॥२८॥ तदाघनच्छदादेवाभयाद्धाहेतिचुक्रुशुः । जहृषुर्येचकंसाद्याः कौणपास्त्वघबांधवाः ॥२९॥ तच्छ्रुत्वाभगवान्कृष्णस्त्वव्ययः सार्भवत्सकम् । चूर्णीचिकीर्षोरात्मानंतरसाववृधेगले ॥३०॥ ततोऽतिकायस्यनिरुद्धमार्गिणोह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः । पूर्णोन्तरङ्गेपवनोनिरुद्धोमूर्द्धन्विनिष्पाट्य विनिर्गतोबहिः ॥३१॥ तेनैवसर्वेषुबहिर्गतेषुप्राणेषुवत्सान्सुहृदः परेतान् । दृष्ट्यास्वयोत्थाप्यतदन्वितः पुनर्वक्त्रा न्मुकुन्दोभगवान्विनिर्ययौ ॥३२॥ पीनाहिभोगोत्थितमद्भुतंमहज्ज्योतिः स्वधाम्नाज्वलयद्दिशोदश । प्रतीक्ष्यखेऽव स्थितमीशनिर्गमंविवेशतस्मिन्मिषतांदिवौकसाम् ॥३३॥ ततोऽतिहृष्टाः स्वकृतोऽकृतार्हणंपुष्पैः सुराअप्स रसश्चनर्तनैः । गीतैः सुगावाद्यधराश्चवाद्यकैः स्तवैश्चविप्राजयनिःस्वनैर्गणाः ॥३४॥ ७ ॥ ७ ॥ ७ ॥

दीनांमार्गभूतः कंठोयस्यास्तितस्य उद्गीर्णदृष्टेर्बहिर्निर्गतलोचनस्य अंतरंगेदेहमध्येपूर्णः परिभृतः मूर्द्धन्मूर्द्धानंब्रह्मरंध्रंनिर्भिद्यबहि र्विनिर्गतइति ॥३१॥ प्राणेषुइंद्रियेषुस्वयाअमृतवर्षिण्यादृष्ट्येव ॥३२॥ अहिदेहेस्थितंशुद्धसत्त्वमयंज्योतिर्निर्गत्यखेऽवस्थितंतस्मिन्नी शेनिविवेश ॥३३॥ स्वकृतः स्वकार्यकृतः श्रीकृष्णस्यअर्हणमकृतपूजामकुर्वेन सुगाः सुष्ठुगायंतीतिसुगागन्धर्वादयः ॥ ३४ ॥ के ॥

किंच तेषां यान्यद्भुतस्तोत्रादीनि तेषां नैकोत्सवा अनेकोत्सवा ये मंगलस्वनास्तान् स्वधाम्नों ऽतिसमीपे श्रुत्वा अजो ब्रह्मा अचिरादागतः ईशस्य श्री
कृष्णस्य महिमानं दृष्ट्वा विस्मयं प्राप्त इति ॥३५॥ बहुतिथं बहुकालं आक्रीडगह्वरं क्रीडार्थं महाबिलम् ॥३६॥ अन्यच्चातिचित्रं वृत्तमित्याह एतदिति
कौमारं पंचमाब्दांतं पौगण्डं दशमावधि । कैशोरमापंचदशाद्यौवनं तु ततः परं ॥ हरेः कौमारजं पंचमाब्दकृतं कर्म तदेव दृष्ट्वा पौगंडके षष्ठेऽब्दे बाला अये
तदद्य वृत्तमित्यूचुः किं तत् कर्म मृत्योः सकाशादात्मनामहेरघमोक्षणं आत्मनां प्रसिद्धान्मृत्योः अहेस्तु संसारलक्षणात् अघासुरस्य ज्योतिषः श्रीकृष्णे प्रवेश

तदद्भुतस्तोत्रसुवाद्यगीतिकाजयादिनैकोत्सवमङ्गलस्वनान् । श्रुत्वा स्वधाम्नोऽन्त्यज आगतोऽचिराद्दृष्ट्वा महीशस्य जगा
म विस्मयम् ॥३५॥ राजन्नाजगरं चर्म शुष्कं वृंदावनेऽद्भुतम् । व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरम् ॥३६॥ एतत्कौमा
रजं कर्म हरेरात्माहिमोक्षणम् । मृत्योः पौगंडके बाला दृष्ट्वोचुर्विस्मिता व्रजे ॥३७॥ नैतद्धि चित्रं मनुजार्भमायिनः पराव
राणां परमस्य वेधसः । अघोऽपि यत्स्पर्शनधौतपातकः प्रापात्मसाम्यं त्वसतां सुदुर्लभम् ॥३८॥ सकृद्यदङ्गप्रतिमांऽतरा
हिता मनोमयी भागवतीं ददौ गतिम् । स एव नित्यात्मसुखानुभूत्यभिव्युदस्तमायोंऽतर्गतो हि किं पुनः ॥३९॥ सूत उवा
च ॥ इत्थं द्विजा यादवदेवदत्तः श्रुत्वा स्वरातुश्चरितं विचित्रम् । पप्रच्छ भूयोऽपि तदेव पुण्यं वैयासकिं यन्निगृहीतचेताः ॥४०॥
राजोवाच ॥ ब्रह्मन्कालांतरकृतं तत्कालीनं कथं भवेत् । यत्कौमारे हरिकृतं जगुः पौगण्डकेऽर्भकाः ॥४१॥ तद्ब्रूहि मे महायो
गिन्परं कौतूहलं गुरो । नूनमेतद्धरेरेव माया भवति नान्यथा ॥४२॥ वयं धन्यतमा लोके गुरोऽपि क्षत्रबंधवः । यत्पिबामो मुहु
स्त्वत्तः पुण्यं कृष्णकथामृतम् ॥४३॥ सूत उवाच ॥ इत्थं स्म पृष्टः स तु बादरायणिस्तत्स्मारितानंतहृताखिलेन्द्रियः ॥

मपि तदा दृष्टं कथितवंत इत्यर्थः ॥३७॥ नैतद्धि चित्रं इति किं तदित्यपेक्षायामाह अघोऽपीति आत्मसाम्यं स्वसमानरूपताम् ॥३८॥ यस्य अङ्गं मूर्ति
स्तस्य प्रतिमा प्रतिकृतिस्तत्रापि केवलं मनोमयी साऽपि बलादंतराहिता सती भागवतीं गतिं ददौ प्रह्लादादिभ्यः स एव साक्षात्स्वयमंतर्गतः किं पुनः नि
त्या चासावात्मसुखानुभूतिश्च तयाऽभितो व्युदस्ता माया येन सः ॥३९॥ येन श्रवणेन निगृहीतं वशीकृतं चेतो यस्य सः ॥४०॥ कालांतरे कौमारे कृतं पौ
गण्डके कथं ज्ञातोचुरित्यर्थः ॥४१॥४२॥४३॥ तेन यः स्मारितोऽनंतः तेन हृतान्यखिलेंद्रियाणि यस्य सः तथाभूतोऽपि कथंचिल्लब्धबहिर्दृष्टिः हे भागवता

तमहे शौनक ॥४४॥ इति भागवते दशमस्कंधे टीकायां द्वादशोऽध्यायः समाप्तः ॥१२॥ त्रयोदशे हरद्ब्रह्मा वत्सान्पालांश्च मायया। तदा तत्सर्वरूपोऽभूत्कृष्णः पूर्ववदाचरत् ॥१॥ नूतनयसि नव्यवत्करोषि ॥१॥ तथाहि सारभृतां सारग्राहिणामयं निसर्गः स्वभावः को सौ अच्युतस्य वार्ता प्रतिक्षणं साधु नव्यवद्भवतीति यत्तः विटानां स्त्रैणानां स्त्रियाः कामिन्याः वार्तेव कथंभूतानामपि सतां यथा अच्युतवार्तैव अर्थो येषां ता निवा णीश्रुतिचेतांसि येषां तथाभूतानामपि ॥२॥३॥४॥ भोजनविधानाय पुलिनं स्तौति अहो इति स्वीयानां केलीनां संपद्यस्य विद्यते यस्मिन् तत्

कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः प्रत्याह तं भागवतोत्तमोत्तम ॥४४॥ इति श्रीभागवते महापुराणे दशमस्कन्धे अघासुरवधो नाम द्वादशोऽध्यायः ॥१२॥ श्रीशुक उवाच ॥ साधु पृष्टं महाभाग त्वया भागवतोत्तम। यन्नूतनयसीशस्य शृण्वन्नपि कथां मुहुः ॥१॥ सतामयं सारभृतां निसर्गो यदर्थवाणीश्रुतिचेतसामपि। प्रतिक्षणं नव्यवदच्युतस्य यः स्त्रिया विटानामिव साधुवार्ता ॥२॥ शृणुष्वावहितो राजन्नपि गुह्यं वदामि ते। ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥३॥ तथाऽघवदनान्मृत्यो रक्षित्वा वत्सपालकान्। सरित्पुलिनमानीय भगवानिदमब्रवीत् ॥४॥ अहोऽतिरम्यं पुलिनं वयस्याः स्वकेलिसंपन्मृदुलाच्छबालुकम्। स्फुटत्सरोगंधहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुलम् ॥ ॥५॥ अत्र भोक्तव्यमस्माभिर्दिवारूढं क्षुधार्दिताः। वत्साः समीपेऽपः पीत्वा चरन्तु शनकैस्तृणम् ॥६॥ तथेति पाययित्वाऽर्भा वत्सानारुध्य शाद्वले। मुक्त्वा शिक्यानि बुभुजुः समं भगवता मुदा ॥७॥ कृष्णस्य विष्वक्पुरुराजिमंडलैरभ्याननाः फुल्लदृशो व्रजार्भकाः। सहोपविष्टा विपिने विरेजुश्छदा यथाम्भोरुहकर्णिकायाः ॥८॥ ९ ॥

मृदुला अच्छा वालुका यस्मिन् तत् किंच स्फुटत् विकसत्सरः सरोजबाहुल्येनोपचारतः सर एव विकसदित्युक्तं तस्य गंधः तेन हृताः आकृष्टाः अलयः पत्रिणश्च ये तेषां के उदके ध्वनयस्तेषां प्रतिध्वानास्तैर्लसंतो द्रुमास्तैराकुलं व्याप्तम् ॥५॥ दिवारूढं वेलातीतेत्यर्थः ॥६॥ आरुध्य संरुध्य शाद्वले हरिततृणप्रदेशे ॥७॥ तदा ते विरेजुः कृष्णस्य विष्वक् परितः पुरुराजिमंडलैर्बह्वीभिः पंक्तिमंडलैः सह नैरंतर्येणोपविष्टाः श्रीकृष्णाभिमुखानि आननानि येषां ते फुल्लदृशः विकसितनयनाः कमलकर्णिकायाः परितः पत्राणि यथेति ॥ ८ ॥ ९ ॥

पुष्पैस्तद्दलैरन्यैश्चपत्रैः कृतानिभाजनानियैस्ते॥९॥रुचिंस्वादुविशेषंअभ्यवजह्रुर्बुभुजिरेसहेश्वराः श्रीकृष्णसहिताः॥१०॥यज्ञभुग
पितेषुबुभुजेबालानामिवकेलिर्यस्यसः तदाह [illegible] मध्येवेणुंबिभ्रत् दधत् इतिसर्वत्रसंबध्यतेवामइतिकस्यपाण्योर्विशेषण
म् मसृणंस्निग्धंदध्योदनकवलंतदुचितानिबिल्वादिफलानिअंगुलिसंधिषुकर्णिकेवसर्वाभिमुखोमध्येतिष्ठन् स्वस्यपरितउपविष्टान्
सुहृदः स्वैर्नर्मभिः परिहासवाक्यैः स्वर्गेलोकेस्वर्गवासिनिजनेमिषति आश्चर्येणपश्यतिसतिलोकेजनानांमध्येबुभुजे॥११॥१२॥भीम

केचित्पुष्पैर्दलैः केचित्पल्लवैरंकुरैः फलैः।त्वग्भिः शिग्भिर्दृषद्भिश्चबुभुजुः कृतभाजनाः॥९॥सर्वेमिथोदर्शयन्तः
स्वस्वभोज्यरुचिंपृथक्।हसंतोहासयन्तश्चाऽभ्यवजह्रुःसहेश्वराः॥१०॥बिभ्रद्वेणुंजठरपटयोःशृंगवेत्रेचकक्षे
वामेपाणौमसृणकवलंतत्फलान्यंगुलीषु।तिष्ठन्मध्येस्वपरिसुहृदोहासयन्नर्मभिः स्वैः स्वर्गेलोकेमिषतिबु
भुजेयज्ञभुग्बालकेलिः॥११॥भारतैवंवत्सपेषुभुंजानेष्वच्युतात्मसु॥वत्सास्त्वंतर्वनेदूरंविविशुस्तृणलोभिताः
॥१२॥तान्दृष्ट्वाभयसंत्रस्तानूचेकृष्णोस्यभीभयम्।मित्राण्याशान्माविरमतेहानेष्येवत्सकानहम्॥१३॥इत्युक्त्वा
द्रिदरीकुंजगह्वरेष्वात्मवत्सकान्॥विचिन्वन्भगवान्कृष्णः सपाणिकवलोययौ॥१४॥अंभोजन्मजनिस्तदंतरग
तोमायार्भकस्येशितुर्द्रष्टुंमंजुमहित्वमन्यदपितद्वत्सानितोवत्सपान्॥नीत्वाऽन्यत्रकुरूद्वहांतरदधात्खेऽव
स्थितोयःपुरादृष्ट्वाऽघासुरमोक्षणंप्रभवतःप्राप्तः परंविस्मयम्॥१५॥ततोवत्सानदृष्ट्वैत्यपुलिनेऽपिचवत्सपा
न्॥उभावपिवनेकृष्णोविचिकायसमंततः ॥ १६ ॥

यंभयहेतुभ्योभयमस्यअपास्ययद्वाअस्यविश्वस्यभियोपिभयंयः श्रीकृष्णः आशात् भोजनात् अस्मिन्पादेअस्यएधिकमार्षं॥१३॥अ
द्रिषुतद्दरीषुकुंजेषुलतादिपिहितोदरविवरेषुगह्वरेषुसंकटस्थानेषुच॥१४॥अंभोजन्मनः पद्माज्जनिर्यस्यसः ब्रह्मातदंतरेतस्मिन्नवसरेग
तः आगतः तच्छिद्रंप्राप्तोवामंजुमनोहरंअन्यदपिमहित्वंमहिमानंद्रष्टुंतस्यवत्सानितःस्थानात् वत्सपांश्चान्यत्रनीत्वास्वयंतिरोबभूव
प्रभवतः श्रीकृष्णस्य॥१५॥उभावपिवत्सान् वत्सपांश्चविचिकायअन्वीक्षितवान्॥ १६ ॥ ॥ ॥ श्रीकृष्णगोपीभक्तभः॥ ॥ ॥

T

विधिकृतंब्रह्मणाकृतं॥१७॥उभयायितंवत्सतत्पालरूपेणवर्तमानमित्यर्थः अयंभावःयदितूष्णीमासेत्तर्हितन्मातॄणांविषादःस्यात्यदि
वत्सानेवआनयिष्यामितर्हिब्रह्मणोमोहोनस्यादितितदुभयप्रीतयेतथाचक्रेइति॥१८॥तदेवदर्शयतियावदितिवत्सपानांवत्सकानांचाल्प
कंवपुःप्रमाणमनतिक्रम्यएवमुपर्य्यपियोज्यम् यद्वायावद्वत्सपादिवपुस्तावत्सर्वस्वरूपोऽजःकृष्णोबभावित्यर्थःउत्तरत्राप्येवंसर्वंविष्णुम
यंजगदितिप्रसिद्धायागीस्तस्याअंगवत्साग्गीरेवार्थस्वरूपेणप्रत्यक्षायथातथाबभूवेत्यर्थः॥१९॥एवंसर्वात्मासन्व्रजमाविशत्कथंस्वयमा
त्मैवप्रयोजकआत्मरूपान्गोवत्सानितिकर्मापिस्वयमेवेत्युक्तंआत्मरूपैर्वत्सपैःप्रतिवार्यप्रयोज्यकर्त्ताऽपिस्वयमेवआत्मविहारैःक्रीड



क्वाप्यदृष्ट्वांऽतर्विपिनेवत्सान्पालांश्चविश्ववित्॥ सर्वंविधिकृतंकृष्णःसहसाऽवजगामह॥१७॥ततःकृष्णोमुदं
कर्तुंतन्मातॄणांचकस्यच॥उभयायितमात्मानंचक्रेविश्वकृदीश्वरः॥१८॥यावद्वत्सपवत्सकाऽल्पकवपु
र्यावत्कराङ्घ्र्यादिकम्यावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषांबरम्॥यावच्छीलगुणाभिधाकृतिवयोया
वद्विहारादिकंसर्वंविष्णुमयंगिरोऽगवदजःसर्वस्वरूपोबभौ॥१९॥स्वयमात्मात्मगोवत्सान्प्रतिवार्य्यात्म
वत्सपैः॥क्रीडन्नात्मविहारैश्चसर्वात्माप्राविशद्व्रजम्॥२०॥तत्तद्वत्सान्पृथङ्नीत्वातत्तद्गोष्ठेनिवेश्यसः। त
त्तदात्माऽभवद्राजन्तत्तत्सद्मप्रविष्टवान्॥२१॥तन्मातरोवेणुरवत्वरोत्थिताउद्धृत्यदोर्भिःपरिरभ्यनिर्भरम्
।स्नेहस्नुतस्तन्यपयःसुधासवंमत्वापरंब्रह्मसुतानपाययन्॥२२॥ततोनृपोन्मर्दनमज्जलेपनालंकाररर
क्षातिलकाशनादिभिः।संलालितःस्वाचरितैःप्रहर्षयन्सायंगतोयामयमेनमाधवः ॥ २३ ॥ ७ ॥

न्नितिक्रियाऽपिकारकाण्यपिस्वयमेवेत्यर्थः॥२०॥तत्तदात्मातत्तद्गोपबालरूपोऽभवत्ततःतत्तत्सद्मप्रविष्टः॥२१॥गोपि
कामोहनमाहतन्मातरइतितन्मातरोवेणुरवेणत्वरयाउत्थिताःसत्यःसुतान्मत्वापरंब्रह्मैवदोर्भिरुद्धृत्याउत्थाप्यस्नेहेनस्नुतंस्तन्यं
पयःसुधासवंपयएवसुधावत्स्वादुआसववन्मादकंपाययामासुरित्यर्थः॥२२॥एवंयामयमेनचतत्तत्कालक्रीडानियमेनसायंग
तःप्राप्तःस्वाचरितैःस्वस्वाचरितैःशोभनैराचरितैर्वामातॄःप्रहर्षयनवत्सस्ताभिरुन्मर्दनादिभिरुपलालितइति ॥ २३ ॥ ७

गवां मोहनमाह गाव इति परिहूता आहूताश्च ते संगताश्च तान् ॥२४॥ एतावत्तु वैषम्यं कृष्णस्यापि दुर्निवारमासीदित्याह गोगोपीनामिति गवां गो-
पीनां च अस्मिन् कृष्णे मातृता उपलालनादिरूपा पुरो यथा पूर्वम् आसीत् किन्तु स्नेहर्द्धिकां विना स्नेहाधिक्यं तु इदानीं विशेष इत्यर्थः आसु गोगोपीषु हरेस्तो-
कता च बालभावनादिपूर्ववदेवासीत् किन्तु मायया विना ममेयं माताऽहमस्याः पुत्र इति मोहं विनेत्यर्थः ॥२५॥ स्नेहर्द्धिमेव दर्शयति व्रजौकसामिति
यथा कृष्णे यशोदानंदने स्वपुत्रेभ्योऽपि स्नेहाधिक्यं पूर्वमासीदिदानीं स्वतोकेष्वपि तथैवावर्द्धतेत्यर्थः आऽब्दं यावद्वत्सरं निःसीमं यथा भवति ॥२६॥ ए-
वमात्मा श्रीकृष्णः वत्सपो भूत्वा तत्रापि वत्सानां पालानां च मिषेणात्मानमात्मना पालयन् क्रीडितवानित्यर्थः ॥२७॥ एतावत्पर्यन्तं रामस्यापि मोह ए-
वासीत् संवत्सरान्ते तु कथं विज्ञातवानिति दर्शयन्नाह एकदेति पंचषासु पञ्चसु वा षट्सु वा रात्रिषु हायनस्यापूरणीषु पूरकतया अवशिष्टास्वि-



गावस्ततो गोष्ठमुपेत्य सत्वरं हुंकारघोषैः परिहूतसंगतान्। स्वकान्स्वकान् वत्सतरानपाययन्मुहुर्लिहंत्यः स्रवदौधसं पयः ॥२४॥ गोगोपीनां मातृताऽस्मिन्सर्वा स्नेहर्द्धिकां विना। पुरोवदास्वपि हरेस्तोकता मायया विना ॥२५॥ व्रजौकसां स्वतोकेषु स्नेहवल्ल्याऽब्दमन्वहम्। शनैर्निःसीमववृधे यथा कृष्णे त्वपूर्ववत् ॥२६॥ इत्थमात्मात्मनात्मानं वत्सपालमिषेण सः। पालयन्वत्सपो वर्षं चिक्रीडे वनगोष्ठयोः ॥२७॥ एकदा चारयन्वत्सान्सरामो वनमाविशत्। पञ्चषासु त्रियामासु हायनापूरणीष्वजः ॥२८॥ ततो विदूराच्चरतो गावो वत्सानुपव्रजम्। गोवर्द्धनाद्रिशिरसि चरंत्यो ददृशुस्तृणम् ॥२९॥ दृष्ट्वाऽथ तत्स्नेहवशोऽस्मृतात्मा सगोव्रजोऽत्यात्मपदुर्गमार्गः। द्विपात्ककुद्ग्रीव उदास्यपुच्छोऽगाद्धुंकृतैरास्रुपया जवेन ॥३०॥ समेत्य गावोऽधो वत्सान्वत्सवत्योऽप्यपाययन्। गिलंत्य इव चांगानि लिहंत्यः स्वौधसं पयः ॥ ३१ ॥

त्यर्थः ॥२८॥ ततो दूरतर एव गोवर्द्धनशिखरे चरंत्यो गावो व्रजसमीपे चरतो वत्सान् ददृशुः ॥२९॥ तदैव सगोव्रजः गवां कलापः यतः तत्स्नेह-
वशस्तेषां वत्सानां स्नेहेनाकृष्टः अत एव नस्मृतः आत्मा येन सः जवेन उपव्रजमगात् कथंभूतः अत्यात्मपदुर्गमार्गः अतिक्रांतः आत्मपा-
न्गोपालानृपः सोऽत्यात्मपः तथा दुर्गो दुर्गमो मार्गो यस्य सः स च स च तथा युक्ताभ्यां पद्भ्यां धावन् द्विपादिव प्रतीयमानः ककुदि आकुंचिता ग्रीवा
यस्य सः उदास्यपुच्छः उन्नमितान्यास्यानि पुच्छानि च येन सः आस्रुपयाः सर्वतः स्रवंति पयांसि यस्य सः आस्रुपया इत्यपि पाठे स एवार्थः गोव्रज
इत्यनेन वृषभादयोऽप्यगुरित्युक्तम् ॥३०॥ तत्र विशेषतो धेनूनां चेष्टितमाह समेत्येति गोवर्द्धनस्याधः वत्सवत्यः पुनः प्रसूता अपि ॥ ३१ ॥

रामेणदृष्टंवत्सेषुगवांस्नेहातिशयमुक्त्वागोपानामपिदर्शयितुमाहगोपाइतितासांगवांरोधनेयआयासस्तस्यमौघ्येनमोघत्वेनलज्जयासहोरुमन्यु नादुर्गमार्गजनितक्लेशेनचाभ्येत्यगोवत्सैःसहसुतान्ददृशुः॥३२॥ततश्चतेषामीक्षणेनोद्भूतोयःप्रेमरसस्तस्मिन्आप्लुताःनिमग्नाःआशया येषांतेलज्जामन्युकृच्छ्रैस्तानपिताडयितुमागताःसंतोऽपगतमन्यवःप्रत्युतजातोनुरागोयेषांतेमूर्ध्निघ्राणैरवघ्राणैःपरमांमुदमवापुः॥३३॥कृ च्छ्रात्ततोऽपगताःनिरत्ताःतेषांसुतानामनुस्मृत्याउद्गच्छन्त्यश्रूणियेषान्ते॥३४॥प्रेमर्द्धेरौत्कंठ्यमतिशयंमुक्तस्तनेष्वपत्येषुवीक्ष्यहेतुमजानन्नचि न्तयत्॥३५॥चिंतामेवाहकिमेतदितिद्वाभ्यांवासुदेवेयथापुराप्रेमतथास्वतोकेष्वपिव्रजस्यप्रेमवर्द्धतेकिमेतदद्भुतमितिकिंचसात्मनःमत्सहित

गोपास्तद्रोधनायासमौघ्यलज्जोरुमन्युना॥दुर्गाध्वकृच्छ्रतोऽभ्येत्यगोवत्सैर्ददृशुःसुतान्॥३२॥तदीक्षणप्रेमरसाप्लु ताशयाजातानुरागागतमन्यवोर्भकान्।उदुह्यदोर्भिःपरिरभ्यमूर्द्धनिघ्राणैरवापुःपरमांमुदन्ते॥३३॥ततःप्रवयसो गोपास्तोकाश्लेषसुनिर्वृताः।कृच्छ्राच्छनैरपगतास्तदनुस्मृत्युदश्रवः॥३४॥व्रजस्यरामःप्रेमर्द्धेर्वीक्ष्यौत्कंठ्यमनुक्षण म्।मुक्तस्तनेष्वपत्येष्वप्यहेतुविदऽचिन्तयत्॥३५॥किमेतदद्भुतमिववासुदेवेऽखिलात्मनि।व्रजस्यसात्मनस्तोकेष्वपूर्वं प्रेमवर्द्धते॥३६॥केयंवाकुतआयातादैवीवानार्युतासुरी।प्रायोमायाऽस्तुमेभर्तुर्नान्यामेऽपिविमोहिनी॥३७॥इतिसंचि न्त्यदाशार्होवत्सान्सवयसानपि।सर्वानाचष्टवैकुंठंचक्षुषावयुनेनसः॥३८॥नैतेसुरेशाऋषयोनचैतेत्वमेवभासीशभि दाश्रयेपि।सर्वंपृथक्त्वंनिगमात्कथंवदेत्युक्तेनवृत्तंप्रभुणाबलोऽवैत्॥३९॥तावदेत्यात्मभूरात्ममानेनत्रुट्यनेहसा ।पुरोवदब्दंक्रीडन्तंददृशेसकलंहरिम्॥४०॥

स्यव्रजस्यममतेषुप्रेमकारणंकिमितिभावः॥३६॥केयंमायादेवानांवानरा णांवाअसुराणांवाकुतोवाकस्मात्प्रयुक्तातत्राऽन्यमायानसंभवतियतोममापिमोहोवर्ततेअतःप्रायशोमत्स्वामिनःश्रीकृष्णस्यैवमायेयमस्तीतिसंभा वयति॥३७॥सवयसान्सर्वानपिवयुनेनज्ञानमयेनचक्षुषावैकुण्ठंश्रीकृष्णमेवापश्यत्॥३८॥एवंकृष्णरूपास्सामान्यतोज्ञात्वाकृष्णंदृष्ट्वाकृतापदेशे नविशेषतोज्ञातवानित्याहनैतइतिअयमर्थःपाल्यमानास्तावद्वत्साऋषीणामंशाःपालाश्चदेवानामंशाइतितावदहंवेद्मिइदानींतुनतथाकिंतुअस्मि न्भिदाश्रयेपित्वमेवभासिअतस्त्वंसर्वंपृथग्विविच्यकथंवृत्तमितिवदेत्युक्तेनप्रभुणावक्त्रानिगमात्संक्षेपतएवोक्तंवृत्तंबलोवैत्विदितवानित्य र्थः॥३९॥ततःकिंवृत्तमित्यपेक्षायामाहतावदितिवर्षेजातेआत्मनोमानेनत्रुट्यनेहसात्रुटिमात्रेणकालेनसकलंसानुचरंहरिंददर्श॥४०॥

दृष्ट्वा च व्यतर्कयदित्याह यावंत इति द्वाभ्यां मे माया शयेमन्मायातल्पे ॥४१॥ मन्मायामोहितेभ्य इतरे कुत्रत्याः ॥४२॥ इति वितर्कयन्मुह्यदित्याह एवमिति द्वाभ्यां एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूर्विचारः ॥४३॥४४॥ [illegible] तस्य कुतो मोह इत्यत आह तम्यामिति महामायाविनि भगवति अन्यमायाया आवरणविक्षेपकत्वाभावे दृष्टांतद्वयमाह तम्यां तमिस्रायां रात्र्यां नैहारं हिमकणप्रभवं तम इव तद्धिता शोभा पसञ्जनस्यापि तमसो नैहारमिति विशेषणं छांदसम् तत्तमो यथा पृथगावरणं न करोति किंतु तत्रैव लीयते यथा च खद्योतार्चिरहनि पृथक् प्रकाशं न करोति एवं महति पुरुषे युञ्जतः पुंसः इतरानीचा माया तथा तत्र न किंचित्करोति किन्तु आत्मनि स्वाश्रय एव ऐश्वर्यसामर्थ्यं निहन्तीति ॥४५॥

यावंतो गोकुले बालाः सवत्साः सर्व्व एव हि। मायाशये शयाना ये नाद्यापि पुनरुत्थिताः ॥४१॥ इतः एते ऽत्र कुत्रत्या मन्मायामोहितेतरे। तावन्त एव तत्राब्दं क्रीडंतो विष्णुना समम् ॥४२॥ एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः। सत्याः के कतरे नेति ज्ञातुं नेष्टे कथंचन ॥४३॥ एवं संमोहयन्विष्णुं विमोहं विश्वमोहनम्। स्वयैव मायया ऽजो ऽपि स्वयमेव विमोहितः ॥४४॥ तम्यां तमोवन्नैहारं खद्योतार्चिरिवाहनि। महतीतरमायैश्यं निहंत्यात्मनि युंजतः ॥४५॥ तावत्सर्वे वत्सपालाः पश्यतो ऽजस्य तत्क्षणात्। व्यदृश्यंत घनश्यामाः पीतकौशेयवाससः ॥४६॥ चतुर्भुजाः शंखचक्रगदाराजीवपाणयः ॥ किरीटिनः कुंडलिनो हारिणो वनमालिनः ॥४७॥ श्रीवत्साङ्गददोरत्नकंबुकंकणपाणयः। नूपुरैः कटकैर्भाताः कटिसूत्रांगुलीयकैः ॥४८॥ अंघ्रिमस्तकमापूर्णास्तुलसीनवदामभिः। कोमलैः सर्वगात्रेषु भूरिपुण्यवदर्पितैः ॥४९॥ चंद्रिकाविशदस्मेरैः सारुणापाङ्गवीक्षितैः। स्वकार्थानामिव रजःसत्वाभ्यां स्रष्टृपालकाः ॥५०॥ आत्मादिस्तंबपर्य्यंतैर्मूर्तिमद्भिश्चराचरैः। नृत्यगीताद्यनेकार्हैः पृथक्पृथगुपासिताः ॥५१॥

॥ अन्यदप्याश्चर्य्यमाह तावदिति वत्सपाला वत्साः पालाश्च सर्वे यष्टिविषाणादयश्च ॥४६॥४७॥ श्रीवत्सप्रभायुक्तान्यङ्गदानि दोःषु येषां रत्नमयानि कंबुवत्त्रिधाराणि कंकणानि पाणिषु येषां ते च ते च ॥४८॥ तथा भूरि बहुजन्मार्जितं पुण्यं तद्युक्तैर्जनैरर्पितैः ॥४९॥ चंद्रिकाविशदस्मितयुक्तैः सहारुणगुणेन च वर्त्तमाना ये ऽपांगास्तैर्वीक्षितैः स्वकार्थानां स्वभक्तमनोरथानां रजःसत्वाभ्यां स्रष्टृपालका इव व्यदृश्यंत सत्ववद्विशदस्मितेन पालका इव रजोवदरुणगुणेन च स्रष्टार इव ताः दृक्कटाक्षैर्द्योतमाना इत्यर्थः ॥५०॥ आत्मा ब्रह्मा तदादिस्तंबपर्यंतैरनेकार्हैरनेकार्हणैः ॥ ५१॥ ॥ ॥ ॥ ॥ ॥



T

अजाद्याभिर्मायाविद्यादिभिर्विभूतिभिः शक्तिभिः महदादिभिरिति महत्सूत्रयोः पृथक्त्वविवक्षया चतुर्विंशतितत्त्वैर्जगत्कारणैः ॥५२॥ कालादिभिश्चतत्सहकारिभिश्च तत्र स्वभावः परिणामहेतुः संस्कारः उद्बोधकः स्वमहिध्वस्तमहिभिः भगवन्महिम्ना तिरस्कृतस्वातंत्र्यैः उक्तैः सर्वैरणिमाद्यैः ॥५३॥ सर्वेषां मूर्तिमत्त्वेपि विशेषमाह सत्यज्ञानेति सत्याश्च ते ज्ञानरूपाश्च अनंताश्च आनंदरूपाश्च तत्रापि तदेकमात्रा विजातीयसंभेदरहिताः तत्रापि च एकरसाः सदैकरूपा मूर्तयो येषां ते यद्वा सत्यज्ञानादिमात्रैकरसं यद्ब्रह्म तदेव मूर्तयो येषामिति अत एव उपनिषत् आत्मज्ञानं सैव दृक् चक्षुर्येषां तेषामपि हि निश्चितं अस्पृष्टभूरिमाहात्म्याः न स्पृष्टं न स्पर्शयोग्यं भूरिमाहात्म्यं येषां ते तथाभूताः संतः व्यदृश्यंतेति ॥५४॥ एवं सकृदेकदैव दर्शपरब्रह्मणो विशेषणं यस्येति ॥५५॥ अतिकुतुकेन आश्चर्येण उद्वृत्यदृष्टीः परावृत्य हंसः स्रष्टेति निपत्येति वा कुतुकशब्देत तीयायाश्छान्दसो लुक् यद्वा उद्वृत्य इति छे

अणिमाद्यैर्महिमभिरजाद्याभिर्विभूतिभिः। चतुर्विंशतिभिस्तत्त्वैः परीता महदादिभिः ॥५२॥ कालस्वभावसंस्कारकामकर्मगुणादिभिः। स्वमहिध्वस्तमहिभिर्मूर्तिमद्भिरुपासिताः ॥५३॥ सत्यज्ञानानन्तानंदमात्रैकरसमूर्तयः। अस्पृष्टभूरिमाहात्म्या अपि ह्युपनिषद्दृशाम् ॥५४॥ एवं सकृद्ददर्शाजः परब्रह्मात्मनोऽखिलान्। यस्य भासा सर्वमिदं विभाति सचराचरं ॥५५॥ ततोऽतिकुतुकोद्वृत्यस्तिमितैकादशेन्द्रियः। तद्धाम्नाऽभूदजस्तूष्णीं पूर्देव्यन्तीव पुत्तिका ॥५६॥ इतीरेशेऽतर्क्ये निजमहिमनि स्वप्रमितिके परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ। अनीशेऽपि द्रष्टुं किमिदमिति वा मुह्यति सति चच्छादाजो ज्ञात्वा सपदि परमोऽजाजवनिकाम् ॥५७॥ ततोऽर्वाक्प्रतिलब्धाक्षः कः परेतवदुत्थितः ॥

॥५६॥ अतिकुतुकेन उद्वृत्यः विलोड्यः विपर्यस्तः सन्निति यावत् पाठांतरे तु अतिकुतुकेन उद्वृत्तः क्षुभितस्तेषां धाम्ना तेजसा स्तब्धसर्वेन्द्रियो ब्रह्मा तूष्णीं निश्चलोऽभूत् अत्र दृष्टांतः पूर्देवो व्रजाधिष्ठात्री काचिद्देवता तस्या अंतिसमीपे पुत्तिका चतुर्मुखीकृतकप्रतिमेव ॥५६॥ एवं मोहमग्नमजमुज्जहारेत्याह इतीति इरेशे इरा सरस्वती तस्या ईशे ब्रह्मणि किमिदमिति मुह्यति सति पश्चात्तद्द्रष्टुमप्यनीशे सति परमोऽजः श्रीकृष्णः सपदि अजाजवनिकां मायारूपां तिरस्कारिणीं यया ऽद्भुतं दर्शितं तां चच्छाद तिरोऽधत्त अपसारितवानित्यर्थः अथवाऽयं लोकाभिमानी मम ऐश्वर्यं द्रष्टुमयोग्य इति तस्योपरि मायां प्रसारितवानिति कं मुह्यति सति अतर्क्ये तर्कागोचरे निजः असाधारणो महिमा यस्य तस्मिन् इति मोहहेतुरुक्तः दर्शनायोग्यत्वाय त्रीणि विशेषणानि स्वप्रमितिके स्वप्रमितिः स्वप्रकाशं च तत्कं सुखं च यस्मिन् अ[illegible]

परेतवन्मृतोयदि कथंचित्पुनरुत्तिष्ठति तथा दृष्टी नेत्राणि ॥५८॥ जनानामाजीव्यैर्द्रुमैराकीर्णं समाप्रियं संततानि आसमंतात् प्रियाणि यस्मिन् तत् ॥५९॥ तदाह यत्रेति नैसर्गदुर्वैराः स्वाभाविकाप्रतिकार्यवैरवंतोपि नराः सिंहादयश्च मित्राणीव यत्र सहैवासन् अजितस्यावासेन द्रुताः पलायिता रुट्तर्षादयः क्रोधलोभादयो यस्मात्तथाभूतं वृंदावनमपश्यदिति ॥६०॥ तत्र च परमेष्ठी ब्रह्मा इदं पुरा पूर्ववदेव ब्रह्म अचष्ट अपश्यत् कथंभूतं पशुपवंशशिशुत्वनाट्यमुद्वहत नाट्यमित्यत्र हेतुः अद्वयमित्यादि अद्वयं च वत्सान्विचिन्वत् एकं च सर्वान् अगाधबोधं च विचिन्वत् अनंतं च परितो विचिन्वत् पूर्वं च शिशुत्वमुद्वहत् ब्रह्म च सपाणिकवलमिति नाट्यमेवोद्वहदित्यर्थः ॥६१॥ निजधोरणतः स्ववाहनात् त्वरेणवेगेनावतीर्य दंडवन्नताच

कृच्छ्रादुन्मील्य वै दृष्टीराचष्टेदं महात्मना ॥५८॥ सपद्येवाभितः पश्यन् दिशोऽपश्यत पुरःस्थितम् ॥ वृंदावनं जनाजीव्यद्रुमाकीर्णं समाप्रियम् ॥५९॥ यत्र नैसर्गदुर्वैराः सहासन्नृमृगादयः ॥ मित्राणीवाऽजितावासद्रुतरुट्तर्षकादिकम् ॥६०॥ ततोद्वहत्पशुपवंशशिशुत्वनाट्यं ब्रह्माद्वयं परमनंतमगाधबोधम् ॥ वत्सान्सखीनिव पुरा परितो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्ट ॥६१॥ दृष्ट्वा त्वरेण निजधोरणतोऽवतीर्य पृथ्व्यां वपुः कनकदंडमिवाभिपात्य ॥ स्पृष्ट्वा चतुर्मुकुटकोटिभिरंघ्रियुग्मं नत्वा मुदश्रुसुजलैरकृताभिषेकम् ॥६२॥ उत्थायोत्थाय कृष्णस्य चिरस्य पादयोः पतन् ॥ आस्ते महित्वं प्राग्दृष्टं स्मृत्वा स्मृत्वा पुनः पुनः ॥६३॥ शनैरथोत्थाय विमृज्य लोचने मुकुंदमुद्वीक्ष्य विनम्रकंधरः ॥ कृतांजलिः प्रश्रयवान्समाहितः सवेपथुर्गद्गदयैलतेलया ॥६४॥ इति श्रीभागवते महापुराणे दशमस्कंधे ब्रह्ममोहनं नाम त्रयोदशोऽध्यायः ॥१३॥ ब्रह्मोवाच ॥ नौमीड्य तेऽभ्रवपुषे तडिदंबराय गुंजावतंसपरिपिच्छलसन्मुखाय ॥

१ तुर्णा मुकुटानामग्रैरंघ्रियुग्मं स्पृष्ट्वा मुदश्रुसुजलैरानंदाश्रुरूपैः सुजलैरभिषेकमकरोदित्यर्थः ॥६२॥ चिरस्य चिरं पादयोः पतन्नास्ते ॥६३॥ सवेपथुः सकंपः अतएव गद्गदया अनुकरणमेतत् इलया वाचा ऐलत अस्तौत् ॥६४॥ इति श्रीदशमटीकायां त्रयोदशोऽध्यायः ॥१३॥ चतुर्दशे तु तं दृष्ट्वा पूर्वां गां तु कनिष्ठयम् ॥ अनीशः कर्तुमस्तौषीत् स ब्रह्मा विमोहितः ॥१॥ स्वकृतापराधेन भिया सकंपतया भगवन्महिमानमनवगाहमानो यथा दृष्टस्वरूपमेव कीर्तयन्नाह नौमीति हे ईड्य स्तुत्य ते तुभ्यं नौमि द्वितीयार्थे चतुर्थी अथवा नौमी स्तुत्का प्रकरणागतस्य प्रस्तुतस्य भगवतः कर्मत्वे ज्ञाते प्रयोजनापेक्षायामेवंभूतो भगवानेव प्रयोजनमिति तादर्थ्ये चतुर्थी यद्वा तुभ्यं त्वामेव प्रसादयितुं त्वामेव स्तौमीत्यर्थः ॥ ९ ॥ ९ ॥ ९ ॥

T

अभ्रवद्वपुर्यस्यतस्मैतुभ्यम्तडिद्वदंबरंयस्यतस्मैगुंजानामवतंसौकर्णभूषणेपरिपरितःपिच्छंचबर्हापीडंतैर्लसन्मुखंयस्यतस्मैवन्याःस्रजोय
स्यतस्मैकवलादिभिर्लक्ष्मभिःश्रीःशोभायस्यतस्मैमृदुपादौयस्यतस्मैपशुपस्यांगजाय॥१॥ननुनौमीतिप्रतिज्ञायकिंस्वरूपानुवादमात्रंक्रियते
अतआहअस्यापीतिभोदेवअस्यापिसुलभत्वेनप्रकाशितस्यापितववपुषःअवतारस्यमहिमहिमानंअवसितंज्ञातुंकोऽपिकःब्रह्माअहमपिनईशेन
शक्नोमियद्वाकश्चिदपिनईशेनसमर्थआसीत्सुलभत्वायविशेषणद्वयंमदनुग्रहस्यममानुग्रहोयस्मात्तन्मदनुग्रहंतस्यकिंचस्वेच्छामयस्यस्वीया
नांभक्तानांयथायथेच्छातथातथाभवतःतर्हिकिमितिज्ञातुंनशक्यतेअतआहनतुभूतमयस्यअचिंत्यशुद्धसत्वात्मकस्ययदाऽस्यैवंतदाकथंपुनः
साक्षात्तवकेवलस्यआत्मसुखानुभूतेरेवस्वसुखानुभवमात्रस्यावतारिणोगुणातीतस्यमहिमानंआंतरेणनिरुद्धेनापिमनसाकोवाज्ञातुंसमर्थोभ
वेत्अथवाभूतमयस्यउक्तलक्षणस्यापिविराड्रूपस्यतवलक्ष्मिमयस्यवपुषःमहिमानमेवअवसितुंकोपिनेशेतरांसाक्षात्तवैवासाधारणस्यनिय

वन्यस्रजेकवलवेत्रविषाणवेणुलक्ष्मश्रियेमृदुपदेपशुपांगजाय॥१॥अस्यापिदेववपुषोमदनुग्रहस्यस्वेच्छामयस्यनतु
भूतमयस्यकोऽपि।नेशेमहित्ववसितुंमनसांतरेणसाक्षात्तवैवकिमुतात्मसुखानुभूतेः॥२॥ज्ञानेप्रयासमुदपास्यनमं
तएवजीवंतिसन्मुखरितांभवदीयवार्त्ताम्॥स्थानेस्थिताःश्रुतिगतांतनुवाङ्मनोभिर्येप्रायशोऽजितजितोप्यसितै
स्त्रिलोक्यां॥३॥श्रेयःस्रुतिंभक्तिमुदस्यतेविभोक्लिश्यंतियेकेवलबोधलब्धये॥तेषामसौक्लेशलएवशिष्यतेनान्यद्य
थास्थूलतुषावघातिनाम्॥४॥पुरेहभूमन्बहवोपियोगिनस्त्वदर्पितेहानिजकर्मलब्धया॥ ऽस्यनियंतृभेदरहितस्यउक्तलक्षण

स्यास्यमहिमानंअवसितुंकोपिनेशइतिकिमुवक्तव्यमित्यर्थः॥२॥तर्हिअज्ञाःकथंसंसारंतरेयुरतआहज्ञानइतिहेअजितउदपास्यईषदप्यकृ
त्वासद्भिर्मुखरितांस्वतएवनित्यंप्रकटितांभवदीयवार्तांस्वस्वस्थानएवस्थितास्तत्सन्निधिमात्रेणस्वतएवश्रुतिगतांश्रवणंप्राप्तांतनुवाङ्मनो
भिर्नमंतःसत्कुर्वंतोयेजीवंतिकेवलंयद्यपिनान्यत्कुर्वन्तितैःप्रायशस्त्रिलोक्यामन्यैरजितोपित्वंजितःप्राप्तोऽसीतिकिंज्ञानश्रमेणेत्यर्थः॥३॥भक्तिं
विनातुज्ञानंनैवसिद्ध्येदित्याहश्रेयःस्रुतिमितिश्रेयसांअभ्युदयापवर्गलक्षणानांस्रुतिःश्रवणंयस्याःसरसइवनिर्झराणांतांतेतवभक्तिमुदस्यत्यक्त्वाश्रे
यःस्रुतिमितिपाठेश्रेयसांमार्गभूतामितितेषांक्लेशलःक्लेशएवावशिष्यतेअयंभावःयथाअल्पप्रमाणंधान्यंपरित्यज्यअंतःकणहीनान्स्थूलधान्याभा
सान्तुषानेवावघ्नंतितेषांनकिंचित्फलंएवंभक्तिंतुच्छीकृत्ययेकेवलंबोधायप्रयतंतेतेषामपीति॥४॥भक्त्यैवज्ञानंनान्यथेत्यत्रसदाचारंप्रमाणयतिपु
रेतिहेभूमनइहलोकेपूर्वंयोगिनोपिसंतःयोगेज्ञानमप्राप्यपश्चात्त्वदर्पितेहाःत्वयिअर्पितालौकिक्यपिईहाचेष्टायैस्तेनिजकर्मलब्धयात्वदर्पितैर्निजै

कर्मभिर्लब्धयात्वय्यर्पितया इहाचनिजानि कर्माणि च तैर्लब्धया इत्येकं पदं वा कथोपनीतया कथया स्वसमीपं प्रापितया भक्त्यैव विबुध्य आत्मानं ज्ञात्वा
अंजः सुखेनैव ते परां गतिं प्राप्ताः ॥५॥ एवं तावत्सगुणनिर्गुणयोरुभयोरपि ज्ञानं दुर्घटमिति त्वत्कथाश्रवणादिनैव त्वत्प्राप्तिर्नान्यथेत्युक्तमिदानीं
यद्यप्युभयोरविशेषेण दुर्विज्ञेयत्वमुक्तं तथापि गुणातीतस्य ज्ञानं कथंचिद्भवेत् न तु सगुणस्य तव अचिंत्यानंतगुणत्वादिति स्तौति श्लोकद्वयेन तथा
पीति हे भूमन् अपरिच्छिन्न अगुणस्य ते महिमा अमलैरंतरात्मभिः प्रत्याहृतैरिंद्रियैर्विबोद्धुं बोधगोचरीभवितुं अर्हति योग्यो भवति अथवा विबोद्धुं
ज्ञातुं अर्हति अर्ह्यते शक्यत इत्यर्थः यद्वा महिमेति महिमानं कश्चिद्बोद्धुमर्हतीत्यर्थः कथं स्वानुभवात् आत्माकारांतःकरणसाक्षात्कारात् नन्वंतः
करणमपि स्वविकारमेव विषयीकरोतीति कथमात्माकारतात्स्येति अत आह अविक्रियादिति विक्रियाविशेषाकारस्तद्रहितात् विशेषपरित्याग एवा
त्माकारतेत्यर्थः नन्वंतःकरणसाक्षात्कारविषयत्वे नात्मत्वप्रसंगः स्यादत आह अरूपत इति रूपं विषयः अविषयात् वृत्तिविषयत्वमेवात्मनो न फ
लविषयत्वमतो नायं दोष इति भावः कथं तर्हि स्फूर्तिः अनन्यबोध्यात्मतया स्वप्रकाशत्वेनैव न त्वन्यथा इदं तदिति विषयत्वेनेत्यर्थः बुद्धितत्स्थचिदा

विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोऽच्युत ते गतिं परां ॥५॥ तथापि भूमन्महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलांत
रात्मभिः ॥ अविक्रियात्स्वानुभवादरूपतो ह्यनन्यबोध्यात्मतया न चान्यथा ॥६॥ गुणात्मनस्तेपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य। कालेन यैर्वा विमिताः सुकल्पैर्भूपांसवः खे मिहिका द्युभासः ॥७॥ तत्तेऽनुकंपां सुसमीक्षमाणो भुंजान एवात्मकृतं विपाकम् ॥ हृद्वाग्वपुर्भिर्विदधन्नमस्ते जीवेत यो मुक्तिपदे स दायभाक् ॥८॥

भासो ह्यवेतो व्याप्ततो घटम् । तत्र
ज्ञानं धियानश्येदाभासेन घटः स्फुरेत् इति। अनात्मसु आत्मनि तु। ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरिहेष्यते। स्वयंस्फुरणरूपत्वान्नाभासस्तत्र युज्यते
। अथवा सर्वेतोंतरङ्गत्वस्थीरपि अगुणस्य ते महिम महिमानं अमलैरंतर्वृत्तिभिरिंद्रियैरपि यथा पाट्यवस्तुतः स्वेन रूपेण विबोद्धुं किमर्हति नार्हत्येवेत्य
र्थः कथं तर्हि अर्हति तदाह स्वानुभवादित्यादिना उक्तार्थमेवैतत् ॥६॥ गुणात्मनः गुणानामात्मनः गुणाधिष्ठातुस्ते तव पुनर्गुणान्विमातुं एतावंत इति ग
णयितुमपि के ईशिरे समर्था बभूवुः दूरतस्तद्विशेषवार्ता कथंभूतस्य तव अस्य विश्वस्य हितायपालनाय बहुगुणाविष्कारेणावतीर्णस्य ननु कालेन
निपुणैः किमशक्यमत आह कालेनेति वा शब्दो वितर्के सुकल्पैरतिनिपुणैर्बहुजन्मना कालेन भूपरमाणवो विमिताः विशेषेण गणिता भवेयुः तथा
खे मिहिका हिमकणा अपि तथा द्युभासः दिवि नक्षत्रादिकिरणपरमाणवोपि ॥७॥ तस्माद्भक्तिरेव संगच्छत इत्याह तत्तेनुकंपामिति सुसमीक्षमा
णः तव कृपा कदा भविष्यतीति बहुमन्यमानः स्वार्जितं च कर्मफलमनासक्तः सन्भुंजान एव नातीव तप आदिना क्लिश्यन् एवं यो जी ॥

T

वेतस मुक्तौदायभाग्भवति भक्तस्य जीवनव्यतिरेकेण दायप्राप्ताविव मुक्तौ नान्यदुपयुज्यत इति भावः॥८॥ तदेवं स्तुत्वा भगवंतं क्षमापयितुं स्वा-
पराधं निवेदयति पश्येति हे ईश मे अनार्यं दौर्जन्यं पश्य यदहं मायिनामपि मायिनि विमोहके त्वय्यपि स्वमायां प्रसार्य ऐश्वर्यं मे ईक्षितुमिच्छ
अभिलषितवान् अहो एवं कर्तुं त्वयि अहं कियान् किंचित् यथा अग्नेरुद्भूता ज्वाला अग्नौ न किंचित् तद्वदिति॥९॥ रजोभुवः रजसो जातस्य अतः
अजानतः अतएव अजावलेपांधतमोंधचक्षुषः अजो जगत्कर्ताऽहमिति मदेन गाढतमोरूपेणांधीभूते नेत्रे यस्य अतस्त्वत्तः पृथगीशमानिनः अ
न्यत्र प्रभुत्वेन वर्तमानोपि मयि नाथे सति नाथवान् मद्भृत्य एव अत एषोऽनुकंप्य इति मत्वा क्षमस्वेत्यर्थः॥१०॥ ननु ब्रह्मांडविग्रहस्त्वमपि ईश्वर ए
वेति चेत्तत्राह काहमिति तमः प्रकृतिः महान् महत्तत्वम् अहं अहंकारः खमाकाशः चरो वायुः अग्निः वार्जलम् भूः भूम्यः प्रकृत्यादि पृथिव्यंतैः एतैः संवे

पश्येश मेऽनार्यमनंत आद्ये परात्मनि त्वय्यपि मायिमायिनि॥ मायां वितत्येक्षितुमात्मवैभवं ह्यहं कियानैच्छमिवार्चि
रग्नौ॥९॥ अतः क्षमस्वाच्युत मे रजोभुवो ह्यजानतस्त्वत्पृथगीशमानिनः॥ अजावलेपांधतमोंधचक्षुष एषोऽनुकंप्यो
मयि नाथवानिति॥१०॥ क्वाहं तमोमहदहंखचराग्निवार्भूसंवेष्टितांडघटसप्तवितस्तिकायः॥ क्वेदृग्विधाऽविगणितां
डपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम्॥११॥ उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागसे॥
किमस्तिनास्तिव्यपदेशभूषितं तवास्ति कुक्षेः कियदप्यनंतः॥१२॥ जगत्त्रयांतोदधिसंप्लवोदे नारायणस्योदरनाभि
नालात्॥ विनिर्गतोऽजस्त्विति वाङ्न वै मृषा किं त्वीश्वर त्वन्न विनिर्गतोऽस्मि॥१३॥

ष्टितो योंऽडघटः स एव तस्मिन्वा स्वमाने
न सप्तवितस्तिः कायो यस्य सोऽहं क्व क्व च ते महित्वम् कथंभूतस्य ईदृग्विधानि यानि अविगणितान्यंडानि त एव परमाणवः तेषां चर्या परि
भ्रमणं तदर्थं वाताध्वानो गवाक्षा इव रोमविवराणि यस्य तस्य तव अतोऽतितुच्छत्वात् त्वयानुकंप्योहमिति॥११॥ अपि च गर्भगतस्य
शिशोः पादयोरुत्क्षेपणं मातुः किमपराधाय भवति लोके अस्तिनास्तिव्यपदेशाभ्यां भावाभावशब्दाभ्यां स्थूलसूक्ष्मकार्यकारणशब्दैर्वा भूषि
तं अभिहितं एतेषां शब्दानां विषये उषितं स्थितमिति वा सर्वं वस्त्वित्यर्थः हे अधोक्षज तव कुक्षेरनंतः बहिः कियदपि किंचिन्मात्रमपि किम
स्ति न किंचिदस्तीत्यर्थः अतः सर्वस्य तव कुक्षिगतत्वेन ममापि त्वया लालनात् न वयमपराधः सोढव्य इति भावः॥१२॥ किं च विशेषतोऽपि त्वत्तो मम

निर्गतइतियावाक् सातावन्मृषानभवतिवैनिश्चितंतथाऽपितुहेईश्वरत्वत्तः अहंकिंत्वद्विनिर्गतः नोत्पन्नोऽस्मि अपितुत्वत्तएवोत्पन्नइत्यर्थः

॥१३॥ तर्हिनारायणस्यपुत्रस्त्वंममकिंमायातत्राहनारायणस्त्वमितिनहीतिकाक्वात्वमेवनारायणइत्यापादयतिकुतोऽहंनारायणइतिचेदत
आहसर्वदेहिनामात्माऽसीतिएवमपिकिंनारायणोनभवसिनारंजीवसमूहोऽयनमाश्रयोयस्यसतथेतित्वमेवसर्वदेहिनामात्मत्वान्नारायणइति
भावः हेअधीशत्वंनारायणोनहीतिपुनःकाकुः अधीशःप्रवर्तकःततश्चनारस्यायनंप्रवृत्तिर्यस्मात्सतथेतिपुनस्त्वमेवासावितिकिंचत्वमखिललोक
साक्षीअखिलंलोकंसाक्षात्पश्यसिअतोनारमयसेजानासीतित्वमेवनारायणइत्यर्थः नन्वेवंनारायणपदव्युत्पत्तौभवेदेवंतत्वन्यथाप्रसिद्धमित्या
शंक्याहनारायणोंऽगमितिनराडुद्भूतायेऽर्थाश्चतुर्विंशतितत्वानितथानराज्जातंयज्जलंतदयनाद्योनारायणःप्रसिद्धःसोपितवैवांगंमूर्तिः
तथाचस्मर्यते। नराज्जातानितत्वानिनाराणीतिविदुर्बुधाः। तस्यतान्ययनंपूर्वंतेननारायणःस्मृतइति। तथाच। आपोनाराइतिप्रोक्ताआपो
वैनरसूनवः। अयनंतस्यताःपूर्वंतेननारायणःस्मृतइतिच। ननुमन्मूर्तेरपरिच्छिन्नायाःकथंजलाश्रयत्वमतआहतच्चापिसत्यंनेति॥१४॥

नारायणस्त्वंनहिसर्वदेहिनामात्माऽस्यधीशोऽखिललोकसाक्षी॥ नारायणोंऽगंनरभूजलायनात्तच्चापिसत्यंनतवै
वमाया॥१४॥ तच्चेज्जलस्थंतवसज्जगद्वपुःकिंमेनदृष्टंभगवंस्तदैव॥ किंवासुदृष्टंहृदिमेतदैवकिंनोसपद्येवपुन
र्व्यदर्शि॥१५॥ अत्रैवमायाधमनावतारेह्यस्यप्रपंचस्यबहिःस्फुटस्य॥ कृत्स्नस्यचांतर्जठरेजनन्यामायात्वमेव
प्रकटीकृतंते॥१६॥ यस्यकुक्षाविदंसर्वंसात्मंभातियथातथा॥ तत्त्वय्यपीहतत्सर्वंकिमिदंमाययाविना॥१७॥

अपरिच्छेदमेवोपपादयतितच्चेदितिजगदाश्रयभूतंतववतद्वपुःजलस्थमित्येवंयदिसत्सत्यंस्यात्तर्हितदैवकमलनालमार्गेणांतःप्रवि
श्यसंवत्सरशतंविचिन्वताऽपिमयाहेभगवन्नचिंत्यैश्वर्यतत्रकिमितिनदृष्टंसद्वपुःकिंतुअंतःकरणदृश्यंतदाहद्यपिकिमितिनोव्यदर्शि
नदृष्टमतदैवतपःकरणानंतरंसपद्येवसुदृष्टंअतोमायैवअतस्त्वन्मूर्तेर्दृश्यविशेषपरिच्छेदःसत्योनभवतीत्यर्थः॥१५॥ अपिचयदिजलादिप्र
पंचःसत्यःस्यात्तर्हितेनतवपरिच्छेदोभवेत्सतुमायाविलसितइतित्वयैवदर्शितंइत्याहश्लोकत्रयेणहेमायाधमनमायोपशमनअत्रैवावतारे
बहिःस्फुटस्यापिआत्मनोजठरमध्येजनन्याःप्रदर्शनेन॥१६॥ ननुबहिःसतएवांतर्जठरेप्रतिबिंबोस्तुकुतःसर्वथामायात्वंतत्राहयस्येतिय
स्यतवकुक्षौसर्वमिदंयथाभातितत्सर्वंइहापिबहिरपितथैवभातिकिंचसात्मंत्वत्सहितंतदिदंसर्वंत्वयिमाययाविनाकिंघटतेअयंभावः
त्वयिप्रतिबिंबश्चेद्बाह्याद्विलोमतयाप्रतीयेतनतुतदस्तितवचादर्शस्थानीयस्यत्वयिप्रतीतिर्नस्यात् अतःसर्वथामिथ्यात्वमेवेति॥१७॥

अपि च न केवलं जनन्या मम मापि तथैव दर्शितमित्याह अद्यैवेति त्वदृते त्वां विना अस्य विश्वस्य मायात्वं त्वया ममैव च तद् अद्यैव किं न दर्शितं किंतु दर्शितमेव तथा हि एकोसीत्यादि ततो मया सहाखिलैस्त्वादिभिरुपासिताः त्वावंतश्चतुर्भुजा असि जगंति ब्रह्मांडानीति प्रागनुक्तमपि द्रष्टमिति ज्ञातव्यं॥१८॥ ननु ब्रह्मन्स्त्वमया दर्शितं शुद्धमेव चैतन्यं कथं प्रपंचवन्मायेत्युच्यते सत्यम् किंतु अद्वितीये त्वयि नानात्वं गुणावतारमत्स्याद्यवतारेषु विकार्यं वशेन स्वतंत्रमायानिबंधनमित्याह श्लोकद्वयेन अजानतामिति त्वत्पदवीं तव स्वरूपमजानताम् अनात्मनि प्रकृतौ स्थितः आत्मैव त्वं आत्मनैव स्वातंत्र्येण मायां वितत्य भासि कथं जगतः सृष्टौ अहमिव ब्रह्मेव विधाने पालने च एष त्वमिव अंते त्रिनेत्र इवेति॥१९॥ सुरेषु उपेंद्रः ऋषिषु परशुरामः नृष्वपि रामः॥२०॥ ननु च स्वातंत्र्ये कथं कुत्सितेषु मत्स्यादिषु जन्म कथं वा वामनाद्यवतारे याञ्चादि कार्पण्यं कथं वाऽस्मिन्नेव कदा

अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शितमेकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि॥ तावंतोऽसि चतुर्भुजास्तदखिलैः साकं मयोपासितास्तावंत्येव जगंत्यभूस्तदमितं ब्रह्माद्वयं शिष्यते॥१८॥ अजानतां त्वत्पदवीमनात्मन्यात्मात्मना भासि वितत्य मायां॥ सृष्टाविवाहं जगतो विधान इव त्वमेषोंऽत इव त्रिनेत्रः॥१९॥ सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु यादःस्वपि तेऽजनस्य॥ जन्माऽसतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय॥२०॥ को वेत्ति भूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्याम्॥ क्व वा कथं वा कति वा कदेति विस्तारयन्क्रीडसि योगमायाम्॥२१॥ तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम्॥ त्वय्येव नित्यसुखबोधतनावनंते मायात उद्यदपि यत्सदिवावभाति॥२२॥ एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनंत आद्यः॥

एवं चिद्भयपलायनादि अत आह को वेत्तीति अत्र थैः संबोधनैः दुर्ज्ञेयत्वमेवाह भूमन्नित्यादिभिः भवतः ऊतीर्लीलाः त्रिलोक्यां को वेत्ति क्व वा कथं वा कदा वा कति वेति अचिंत्यं तव योगमायावैभवमिति भावः॥२१॥ ननु भवतोऽवताराणामचिंत्यो महिमा प्रपंचस्य त्वसत्त्वे कथं सत्त्वप्रतीतिरिति आमाशंकां सपरिकरमुपसंहरन् परिहरति तस्मादिति अस्तधिषणं निरस्तप्रतिभासं त्वय्येव उद्यत् उद्भवत् अपिपन् नश्यत् सदिवेति उपलक्षणमेतत् नित्यमिव सुखमिव चेतनमिव अधिष्ठानभूतस्य तव गुणैः तथा तथा भातीत्यर्थः॥२२॥ त्वमेव तु सत्य इत्याह एक इति त्वं सत्यः कुतः आत्मा दृश्यमसत्यं दृष्टं न चात्मा दृश्यः अतः सत्यः किंच यद्विकारवत् तदसत्यमनन्त्वयि जन्मादयो विकाराः संतीत्याह आद्यः कारणं अतो न जन्म आद्यत्वे हेतुः पुराणः पुराऽपि नवः कार्यात्पूर्वमपि वर्तमान इत्यर्थः [illegible] कार्यं वारयति॥

नित्य इति सनातन इत्यर्थः पूर्णः अजस्रसुखः असरः अमृत इति चतुर्भिः पदैः क्रमेण वृद्धिविपरिणामापक्षयविनाशान्वारयति पूर्णत्वे हेतुः अ

नंतः अद्वय इति च देशकालपरिच्छेदरहितः वस्तुपरिच्छेदरहितो ऽपि अमृतत्वोपपादनाय चतुर्विधक्रियाफलत्वं वारयति स्वयंज्योतिर्निरं जन उपाधितो मुक्त इति पदत्रयेण अयं भावः तत्रोत्पत्तिराप्य इत्यनेनैव निराकृता प्राप्तिरपि क्रियया ज्ञानेन वा भवेत् क्रियया प्राप्तिरात्मपदेनैव निरा कृता ज्ञानतः प्राप्तिं वारयति स्वयंज्योतिरिति विकृतिरपि तुषापाकरणेनावघातेन व्रीहीणामिव उपाध्यपाकरणेन भवेत्तत्वसङ्गत्वान्न संभवतीत्याह मुक्त उपाधित इति संस्कारोऽपि किमप्यतिशयाधानेन मलापाकरणेन वा तत्रातिशयाधानं पूर्णत्वेनैव निराकृतं मलापाकरणं निवारयति निरंजन इति नि र्मल इत्यर्थः ॥२३॥ तस्मादेवंभूतज्ञानान्मुच्यंत इत्याह एवंविधमिति त्वां ये विचक्षते सम्यक् पश्यंतिकथं आत्मात्मतया आत्मा प्रत्यक् तस्य स्वरूपेण न चैतत्स्वतंत्रादि द्विविधं गौणमित्याह सकलात्मनामपि स्वात्मानं केन गुरुरेव अर्कः तस्मात् लब्धा उपनिषत् ज्ञानं तदेव सुचक्षुस्तेन भवएव अनंतांबुधिं तत

नित्योऽसरोऽजस्रसुखो निरंजनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥२३॥ एवंविधं त्वां सकलात्मनामपि स्वात्मानमा त्मात्मतया विचक्षते ॥ गुर्वर्कलब्धोपनिषत्सुचक्षुषा ये ते तरंतीव भवाऽनंतांबुधिं ॥२४॥ आत्मानमेवात्मतयाऽविजान तां तेनैव जातं निखिलं प्रपंचितम् । ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा ॥२५॥ अज्ञानसंज्ञौ भवबं धमोक्षौ द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ॥ अजस्रचित्यात्मनि केवले परे विचार्यमाणे तरणाविवाहनी ॥२६॥ त्वामात्मा नं परं मत्वा परमात्मानमेव च ॥

१ रंतीव ॥२४॥ अत्र च ज्ञानेन तरंतीति तत्त्वतः तरंतीवेति तच्च आत्मात्मतया ज्ञानेनेत्यर्थः त्रयं प्रतिज्ञातं क्रमे णोपपाद्यते तत्रात्मानमेवात्मतयेत्यनेन श्लोकेन ज्ञानेन तरंतीत्युपपाद्यते अज्ञानसंज्ञावित्यनेन तरंतीवेत्येतत् त्वामित्यादिश्लोकद्वयेन तु आत्मात्म तयेत्येतदुपपाद्यते न तु ज्ञानेन कथं भवं तरंतीति भवस्य तस्याज्ञानमूलत्वादित्यत आह आत्मानमेवेति तेनैव अज्ञानेनैव प्रपंचितं प्रपंचः रज्ज्वामहेर्भोगभ वाभवाविति सर्पशरीरस्याध्यासापवादौ यथेति ॥२५॥ ननु ज्ञानेन तरन्तीत्येव किमित्युच्यते तरंतीवेति तत्राह अज्ञानसंज्ञाविति अज्ञानेन संज्ञा ययोः तौ भ वबंधमोक्षौ भवेन बंधस्तन्मोक्षश्च तौ द्वौ नाम प्रसिद्धौ ऋतज्ञभावात् ऋतज्ञः सौ ऋतज्ञश्च तस्य यो भावः तस्मादन्यौ न स्तः ननु कथं महानयं प्रलापः क्रियते परमा र्थविचारादित्याह अजस्रेति अखंडानुभवरूपे परे शुद्धे आत्मनि अज्ञानं नन च बंधः अत एव न ज्ञानं न च मोक्षः तरणौ सूर्ये रात्र्यहनी इवेति ॥२६॥ ननु परमार्थ ज्ञानाद् ज्ञानकृतो बंधो निवर्ततां आत्मात्मतयैव ज्ञानादिति कोऽयमाग्रह इत्याशंक्याह यद्ध्यासादात्मनः पररूपास्फूर्तिस्तदपवादेन तत्रैव आत्मस्वरूपज्ञानं युक्त

†

 

मित्यसमर्थ्यविस्मयेनाक्रोशन्निवाह त्वामिति त्वामात्मानं परं देहादिं मत्वा आत्मनि देहादिमध्यस्य तथा परं देहादिमात्मानं मत्वा देहादावात्मानमध्यस्य
त्वन्नष्ट आत्मा बहिर्मृग्य इति चित्रं न हि गृहे नष्टं वने मृग्यत इत्यर्थः ॥२७॥ विवेकिनस्तु प्रत्यक्स्वरूप एव परमात्मानं विचिन्वंतीत्याह अंतर्भव इति भ
वेनीति भवः विज्जडात्मकं शरीरं तन्मध्य एव त्वां मृगयंति अतज्जडं त्यजंतः अपवदंतः ननु सतो ज्ञानेनालं किमसतोऽपवादेनेत्याशंक्य अध्यस्तापवादं विनाऽधिष्ठानतत्त्वं न ज्ञायत इति सतां व्यवहारेणाह असंतमिति अंति समीपे असंतमप्यहिमंतरेण तन्निषेधं विनेत्यर्थः संतं गुणं रज्जुं संतः किमु यंति
जानंति अंति संतमपि गुणमिति वा न जानंतीत्यर्थः तस्मादात्मतयैव ज्ञानान्मुक्तिरिति भावः ॥२८॥ नन्वेवं ज्ञानैकसाध्ये मोक्षे किमिति भक्तिरुद्बोधिता अत आ
ह अथापीति यद्यपि हस्तप्राप्यमिव ज्ञानमुक्तं तथापि हे देव तव पादांबुजद्वयमध्ये एकदेशस्यापि यः प्रसादलेशोऽपि तेनानुगृहीत एव भगवतस्तव महिम्नस्त

आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताऽज्ञता ॥२७॥ अंतर्भवेऽनंत भवंतमेव ह्यतत्त्यजंतो मृगयंति संतः ॥ असंतमप्यंत्यहि
मंतरेण संतं गुणं तं किमु यंति संतः ॥२८॥ अथापि ते देव पदांबुजद्वयप्रसादलेशानुगृहीत एव हि ॥ जानाति तत्त्वं भगवन्म
हिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥२९॥ तदस्तु मे नाथ स भूरिभागो भवेऽत्र वान्यत्र तु वा तिरश्चां ॥ येनाहमेको
ऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवं ॥३०॥ अहोऽतिधन्या व्रजगोरमण्यः स्तन्यामृतं पीतमतीव ते मुदा ॥ यासां
विभो वत्सतरात्मजात्मना यत्तृप्तयेऽद्यापि न चालमध्वराः ॥३१॥ अहो भाग्यमहो भाग्यं नंदगोपव्रजौकसां ॥ यन्मि
त्रं परमानंदं पूर्णं ब्रह्म सनातनं ॥३२॥ एषां तु भाग्यमहिमाच्युत तावदास्तामेकादशैव हि वयं बत भूरिभागाः ॥ ॥

त्त्वं जानाति हे भगवंस्ते महिम्नस्तत्त्वमिति वा एकोऽपि कश्चिदपि चिरमपि विचिन्वन्नपि अतदंशापवादेन विचारयन्नपीत्यर्थः ॥२९॥ तत्तस्माद्भूरिभागः
महद्भाग्यं अत्र भवे ब्रह्मजन्मनि तिरश्चामपि मध्ये यज्जन्म तस्मिन्वा येन भाग्येन भवदीयानां जनानां एकोऽपि यः कश्चिदपि भूत्वा निषेवे अत्यर्थं सेवेय इति
॥३०॥ देवादिजन्मनोऽपि यत्र कुत्रचित्त्वद्भक्तिमज्जन्मैव श्रेष्ठमित्योत्सुक्येन सप्तभिः श्लोकैरभिनंदति अहोऽतिधन्या इत्यादिभिर्व्रजगोरमण्यः व्रजस्था गावो
रमण्यो गोप्यश्च ते त्वया वत्सतरात्मजात्मना वत्सानामात्मजानां च रूपेण यस्य तव तृप्तये सर्वेऽपि यज्ञा अद्यापि न शक्तास्तेन त्वया प्रतिक्षणं तृप्यता यासां
स्तन्यममृतरूपं पीतमिति ॥३१॥ तत्र भगवतस्स्वानां महिमा वक्तुं ज्ञातुं न शक्यत इत्याह अहो इति पौनरुक्त्या भाग्यस्य सर्वथा परिच्छिन्नत्वमुक्तं ॥ रामः
[illegible] सर्वोऽहंकाराधिष्ठाता आदिर्येषां चंद्रादीनामेकादशानां तेन तथा व यत्र 

वयमित्यात्मानमेवबहुमन्यमानआहएवंमनोबुद्ध्यहंकारचक्षुराद्यधिष्ठातारस्त्रयोदशदेवाएवतावत्बतअहोभूरिभागाःयस्मादेतेषांहृषीकाणींद्रि
याण्येवचषकाणिपानपात्राणितैस्तैश्चतुर्दशस्यचित्ताधिष्ठातुःअंघ्रीएवउरजेवारिजेतयोर्मधुमकरंदःतदेवअमृतंस्वादुआसवंमादकंपिबामःय
तदुक्तंभवतियदाप्रत्येकंइंद्रियाभिमानिनोवयंकातिसौदर्यसौगंध्याद्येकदेशसेविनोऽपिकृतार्थाःतदासर्वेन्द्रियैःसर्वसेविनामेतेषांकिंवर्ण्य
तेभाग्यमिति॥३३॥अतोमयाप्रार्थितंतदस्तुमेनाथसभूरिभागइतियत्तदेतदेवेत्याहतद्भूरिभाग्यमितिकिंतत्इहमनुष्यलोकेयत्किमपिजन्मतत्रा
पिअटव्यांयत्तत्रापिगोकुलेयत् अहोसत्यलोकंविहायात्रजन्मनिजातेकोलाभःअतआहअपिकतमांघ्रिरजोभिषेकमितिगोकुलवासिनांमध्येअपि
कतमस्ययस्यकस्याप्यंघ्रिरजसाऽभिषेकोयस्मिन्तत् ननुकुतोगोकुलवासिनएवअतिधन्यास्तत्राहयदितियेषांजीवितंनिखिलंभगवान्मुकुंदःमुकुं
दएवमेवजीवितमित्यर्थःदुर्लभतामाह अद्यापीतिश्रुतिमृग्यंवेदैरपिमृग्यतएवनतुदृश्यतइत्यर्थः॥३४॥अपिचकिंवर्ण्यतेकृतार्थत्वमेतेषांयेषांभक्त्या

एतद्धृषीकचषकैरसकृत्पिबामःशर्वादयोऽङ्घ्र्युदजमध्वमृतासवंते॥३३॥तद्भूरिभाग्यमिहजन्मकिमप्यटव्यांयद्गोकुलेऽ
पिकतमांघ्रिरजोभिषेकम्॥यज्जीवितंतुनिखिलंभगवान्मुकुन्दस्त्वद्यापियत्पदरजःश्रुतिमृग्यमेव॥३४॥एषांघोषनि
वासिनामुतभवान्किंदेवरातेतिनश्चेतोविश्वफलात्फलंत्वत्परंकुत्राप्ययन्मुह्यति।सद्वेषादिवपूतनाऽपिसकुलात्वा
मेवदेवाऽऽपितायद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते॥३५॥तावद्रागादयःस्तेनास्तावत्कारागृहंगृहं।ता
वन्मोहोऽङ्घ्रिनिगडोयावत्कृष्णनतेजनाः॥३६॥प्रपंचंनिष्प्रपंचोऽपिविडंबयसिभूतले॥ ९ भवानपिऋणीवास्तेननुकिं

दातुमसमर्थोहंयेनऋणीस्यांअतआहउतअपिभवानपिएषांकुत्रापिकिंविश्वफलात्सर्वफलात्मकत्वात्त्वत्तःपरंफलंएतादास्यतीतिनश्चेतः
अयत्सर्वत्रगच्छत्विचारयन्मुह्यतिननुमामेवदत्वाअनृणःस्यामितिचेत् नहिनहिसद्वेषादिवसतांभक्तानांयोद्वेषस्तदनुकरणमात्रेणपापिष्ठापू
तनापित्वामेवापितात्राप्रापितातर्हितत्संबंधिनामपिदास्यामीतिचेत्तत्राहसकुलेतिबकाघासुरसहिता धामपितावदेवचेदपर्याप्तमित्याहयदि
तियेषांधामादयःत्वत्कृतेतत्त्वदर्थमेवेत्यर्थः॥३५॥ननुवीतरागादिदोषाणांसंन्यासिनामपिनमत्तःपरंकिंचिदस्तिकथमेषामपर्याप्तंइत्यतआहता
वदितिहेकृष्णरागादयस्तावदेवस्तेनाश्चौराभवंतितथातावद्गृहमपिकारागृहंबंधनागारम्मोहोऽपितावदेवांघ्रिनिगडःपादशृंखलायाव
त्तेत्वदीयाजनानभवन्तित्वदीयानांतुरागादयोऽपित्वन्निष्ठामोचकाएवेतिनयतिभ्योविशेषःभजनंत्वधिकमितिभावः॥३६॥नन्वतएवाहमे
षांपुत्रादिरूपेणवर्तेइतिचेत्तत्राहप्रपञ्चमितिप्रपन्नायाजनताजनसमूहस्तस्याआनंदानांसंदोहंसमूहंप्रथयितुमिति नहिकपटपुत्रत्वादिना।

तादृक्भक्तेरानृण्यं संपद्यत इत्यर्थः॥३७॥ तदेवमादित आरभ्याचिंत्यानंतगुणत्वेन स्वयं दुर्ज्ञेयत्वमुक्तम् केचित्तु जानीमइतिस्थिताः तानुप हसन्निवाह जानंत इति नतु मे मन आदीनां तव वैभवं विषय इति॥३८॥ जगदीशत्वाद्यभिमानं परित्यज्य आह अनुजानीहीति हे कृष्ण मामनुजा नीहि सत्यलोकं गंतुमनुज्ञां देहि स्वमहिमानं अस्मदादीनां च ज्ञानबलादि सर्वं त्वमेव वेत्सि यतः सर्वदृक् जगतां नाथस्त्वमेवेत्येतावत् ज्ञातं अ तो ममतास्पदं जगत् एतत् शरीरं च तवार्पितम्॥३९॥ तदेवं किंकरं प्रस्थापयेति अत्यादरेण नमस्करोति श्रीकृष्णेति वृष्णिकुलपद्मस्य प्रीतिदात्वेन हे सूर्योपम स्माच अवनिः निर्जरा देवाश्च द्विजाश्च पशवश्च त एव उदधयस्तेषां वृद्धिकारित्वेन हे चंद्रोपम उद्धर्मः पाखंडधर्मः तदेव शार्वरं तमः त द्धरतीति तथा अनेन दूयोपमहे क्षितिराक्षसध्रुक् क्षितौ राक्षसाः कंसादयः उद्यन्नेव तेभ्यो द्रुह्यतीति पुनः सूर्योपम सूर्यादुपमापि न्यूनेति मत्वाह आ

प्रपन्नजनतानंदसंदोहं प्रथितुं प्रभो॥३७॥ जानंत एव जानंतु किं बहूक्त्या न मे प्रभो॥ मनसो वपुषो वाचो वैभवं तव गोच रः॥३८॥ अनुजानीहि मां कृष्ण सर्वं त्वं वेत्सि सर्वदृक्॥ त्वमेव जगतां नाथो जगदेतत्तवार्पितम्॥३९॥ श्रीकृष्ण वृष्णिकुल पुष्करजोषदायिन्क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन्॥ उद्धर्मशार्वरहरक्षितिराक्षसध्रुगाकल्पमार्कमर्हन्भगवन्नमस्ते ॥४०॥ श्रीशुक उवाच॥ इत्यभिष्टूय भूमानं त्रिः परिक्रम्य पादयोः॥ नत्वाऽभीष्टं जगद्धाता स्वधाम प्रत्यपद्यत॥४१॥ ततोऽनु ज्ञाप्य भगवान्स्वभुवं प्रागवस्थितान्॥ वत्सान्पुलिनमानिन्ये यथापूर्वं सखीन्स्वकम्॥४२॥ एकस्मिन्नपि याते ऽब्दे प्राणेशं चा न्तरात्मनः॥ कृष्णमायाहता राजन्क्षणार्द्धं मेनिरेऽर्भकाः॥४३॥ किं किं न विस्मरंतीह मायामोहितचेतसः॥ यन्मोहितं जगत्स र्वमभीक्ष्णं विस्मृतात्मकम्॥४४॥ ऊचुश्च सुहृदः कृष्णं स्वागतं तेऽतिरंहसा॥ नैकोऽप्यभोजि कवलः एहीतः साधु भुज्यताम्॥४५॥

र्कमर्कमभिव्याप्य सर्वेषां अर्हन् पूज्य भगवन् आकल्पम् कल्पपर्यंतम् ते तुभ्यं नम इति॥४०॥ स सखिवत्सकमोक्षणकौतुककृतविलंबितपुत्र मुदे हुतम्॥ निखिलरूपमतो दधदच्युतोऽवतु सवः कलयन् व्रजमंगलम्॥१॥ पादयोर्नत्वा अभीष्टं सर्वतः पूजितं अभिप्रेतं वा॥४१॥ अनुज्ञा प्य अनुज्ञां प्रदाप्य इष्ट्वेत्यर्थः स्वभुवं ब्रह्माणं यथापूर्वं सखायो यस्मिन् तत्सखकं पुलिनम्॥४२॥ नन्वेतावंतं कालं कथं ते तत्रैवोपविष्टाः कथं च क्षु त्पिपासादि विस्मरणं मत आह एकस्मिन्निति श्लोकद्वयेन अब्देऽपि याते प्राणेशं कृष्णमंतरा च विनाऽपि प्रियविरहे क्षणोऽपि वर्षाधिको भवति तथा पि मायाहताः क्षणार्द्धं मेनिरे॥४३॥ यत् यया मायया मोहितं जगत् अभीक्ष्णं पुनः पुनर्विस्मृतात्मकं विस्मृतः आत्मैव येन तत्तथा॥४४॥ अतएव सूत्र [illegible] भिन्नो भोजि न भक्षः [illegible] अविशेषेण भुज्यतामिति॥ ४५ ॥

अभ्यवहृत्य भुक्त्वा ॥४६॥ प्रोद्दामो योवेणुवादिस्तस्य रवै रुत्सवस्तेनाढ्यः संपन्नः गणन् उपलालनैराहूयन् गोपीदृशामुत्सवरूपा दर्शिर्दर्शनं यस्य सः ॥४७॥ यशोदानंदसूनुनेति बहूनामुक्तिः सहैव दर्शिता यद्वा केचिद्व्याचक्षते यशोदासूनुना अपरनंदसूनुनेति यद्वा यशोदां नंदयतीति यशोदानंदः स चासौ सूनुश्चे

ति तथा तेन अस्मान्महाव्यालात् वयं च अविताः रक्षिताः ॥४८॥ व्रजौकसां स्वतोकेषु स्नेहवल्ल्याऽब्दमन्वहम् ॥ शनैर्निःसीमववृधे यथा कृष्णे त्वपूर्ववत् इत्यादिना स्वतोकेभ्योऽपि परपुत्रे कृष्णे प्रेमाधिक्यमुक्तं तत्र पृच्छति ब्रह्मन्निति ॥४९॥ श्रीकृष्णस्य साक्षादात्मत्वात् तस्मिन्नात्मीयेभ्यः प्रेमाधिक्यं युज्य त इति वक्तुं प्रथमं तावदात्मनः स्वतः श्रेष्ठत्वमन्येषां तु तदुपाधिकमिति दर्शयति पंचभिः सर्वेषामपीति ॥५०॥ कुतः तथा दर्शनादित्याह तदिति तस्मादेव कारणा

ततो हसन्हृषीकेशोऽभ्यवहृत्य सहार्भकैः ॥ दर्शयंश्चर्मीजगरं न्यवर्तत वनाद्व्रजम् ॥४६॥ बर्हप्रसूनवधातुविचित्रितांगः प्रोद्दाम वेणुदलशृङ्गरवोत्सवाढ्यः । वत्सान्गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः प्रविवेश गोष्ठम् ॥४७॥ अद्यानेन महा व्यालो यशोदानंदसूनुना ॥ हतोऽविता वयं चास्मादिति बाला व्रजे जगुः ॥४८॥ राजोवाच ॥ ब्रह्मन् परोद्भवे कृष्णे इयान् प्रेमा क थं भवेत् ॥ योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यताम् ॥४९॥ शुक उवाच ॥ सर्वेषामपि भूतानां नृप स्वात्मैक वल्लभः ॥ इतरेऽपत्य वित्ताद्यास्तद्वल्लभतयैव हि ॥५०॥ तद्राजेंद्र यथा स्नेहः स्वस्वकात्मनि देहिनां ॥ न तथा ममतालंबि पुत्रवित्तगृहादिषु ॥५१॥ दे हात्मवादिनां पुंसामपि राजन्यसत्तम ॥ यथा देहः प्रियतमस्तथा न ह्यनु ये च तम् ॥५२॥ देहोऽपि ममताभाक् चेत्तर्ह्यसौ नात्मवत् प्रियः ॥ यज्जीर्यत्यपि देहेऽस्मिन् जीविताशा बलीयसी ॥५३॥ तस्मात्प्रियतमः स्वात्मा सर्वेषामपि देहिनाम् ॥ तदर्थमेव सकलं ज गच्चैतच्चराचरम् ॥५४॥ कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् । जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥५५॥ वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च ॥ भगवद्रूपमखिलं नान्यद्वस्त्विह किंचन ॥५६॥ ९ तत्स्वस्वकात्मनि अहंकारास्पदेऽपि देहे

॥५१॥ आत्माध्यासतारतम्येन प्रेमतारतम्यं दृश्यमानमुत्तन्निबंधनमेवेति दर्शयितुं मूढामूढभेदेन विशेषमाह देहात्मवादिनामिति द्वाभ्याम् तं देहमनु भ वंति ये पुत्रादयस्ते तु न तथा प्रियतमा इत्यर्थः ॥५२॥ यत् यस्मात् जीर्यत्यपि आसन्नमरणेऽपि जीविताशा भवति अयं भावः न जीविष्यतीति निश्चितेऽपि देहे यत्नेन त्मवत् प्रियो न भवति अतस्तत्र नातीवास्थेति ॥५३॥ तदर्थमेव सकलं प्रियमित्यर्थः ॥५४॥ प्रस्तुतमाह कृष्णमेनमिति ॥५५॥ न केवलमात्मना मात्मा अपि तु जडानामपीत्याह वस्तुत इति सर्वं जगत्कारणमिति कृष्णं जानतां पुंसां स्थावरं जंगमं च सर्वं भगवद्रूपं भगवानेव स्वरूपं यस्य तन्नान्यत् ॥५६॥

T

कृतइतितदाहसर्वेषामितिभावार्थः परमार्थः भवतिभवत्परिणामंप्राप्नुवत्कारणंतस्मिन्तस्यापिभवतः कारणस्यापिभगवान्कृष्णएवकारणम् अ
तः किमेतत् श्रीकृष्णव्यतिरिक्तम् वस्तुरूप्यताम् तस्माच्छ्रीकृष्णस्यैवपरमार्थत्वात्तदेकशरणानामयत्नसिद्धोमोक्षइति॥५७॥प्रकरणार्थमुपसं
हरतिसमाश्रिताइतिपुण्यंयशोयस्यसपुण्ययशाः सचासौमुरारिश्चतस्यपदपल्लवमेवप्लुवस्तंयेसम्यगाश्रितास्तेषांमहत्पदंमहतांपदमाश्रयंयद्वामहच्च
तत्पदंचेतितथातेषांभवांबुधिर्वत्सपदमात्रंभवतिकिंचपरंपदंश्रीवैकुण्ठाख्यंपदंस्थानंभवतिविपदांयत्पदंविषयस्तस्मिन्कदाचिदपितेषांनभवतिन
ततः पुनरावर्त्ततइत्यर्थः॥५८॥५९॥सुहृद्भिश्चरितंमुरारेरघार्दनंचशाद्वलजेमनंभोजनंचव्यक्तेतरदलक्ष्यंकान्नडप्रपं
चादितरत्शुद्धसत्वात्मकंवत्सवत्सपालरूपंयद्वाव्यक्तेतरः विहिलासः तद्रूपतइतिरूपंअजस्यऊरुमहानभिष्टवस्तवस्तंब्रह्मकृतांस्तुतिमेततशृण्वन्पठ

सर्वेषामपिवस्तूनांभावार्थोभवतिस्थितः। तस्यापिभगवान्कृष्णः किमेतद्वस्तुरूप्यताम्॥५७॥ समाश्रितायेपदपल्लवप्लु
वंमहत्पदंपुण्ययशोमुरारेः। भवांबुधिर्वत्सपदंपरंपदंपदंपदंयद्विपदांनतेषाम्॥५८॥ एतत्तेसर्वमाख्यातंयत्पृष्टोऽहमिहत्व
या॥ यत्कौमारेहरिकृतंपौगंडेपरिकीर्तितम्॥५९॥ एतत्सुहृद्भिश्चरितंमुरारेरघार्दनंशाद्वलजेमनंचाव्यक्तेतरद्रूपमजोर्वभिष्ट
वंशृण्वन्गृणन्नेतिनरोखिलार्थान्॥६०॥ एवंविहारैः कौमारैः कौमारंजहतुर्व्रजे। निलायनैः सेतुबंधैर्मर्कटोत्प्लवनादिभिः॥६१॥
॥इतिश्रीभागवतेम॰ दशमस्कंधेब्रह्मस्तुतिर्नामचतुर्दशोऽध्यायः॥१४॥ श्रीशुकउवाच॥ ततश्चपौगंडवयः श्रितौव्रजेबभूवतु
स्तौपशुपालसंमतौ॥ गाश्चारयंतौसखिभिस्समंपदैर्वृंदावनंपुण्यमतीवचक्रतुः॥१॥ तन्माधवोवेणुमुदीरयन्वृतोगोपैर्गृण
द्भिः स्वयशोबलान्वितः॥ पशून्पुरस्कृत्यपशव्यमाविशद्विहर्तुकामः कुसुमाकरंवनम्॥२॥ तन्मंजुघोषालिमृगद्विजाकुलं
महन्मनः स्वच्छपयः सरस्वता॥ वातेनजुष्टंशतपत्रगंधिनानिरीक्ष्यरंतुंभगवान्मनोदधे॥३॥

॥६१॥इतिश्रीपरमानंदनसिंहपदषट्पदः। व्याकरोच्छ्रीधरस्वामीयथामतिविधिस्तुतिं॥इतिदशमेचतुर्दशोऽध्यायः॥१४॥ ततः पंचदशेधेनुपालनंधेनुकार्द
नम्। कालियस्वेडतोगोपरक्षणंचनिरूप्यते॥१॥ अहिवक्त्रप्रवेशेनवृथाखिन्नानसखीनतः। कृष्णः प्रावेशयत्पक्वफलंतालालिकानन॥२॥ पशुपालसंमतौप
शुपालनेसंमतौपशुपालानांवासंमतौईषद्वयोबलातिरेकमतुकृतवंताविसर्थः अतीवचक्रतुः सर्वतः प्रसर्पणेन॥१॥ स्वयशोगायद्भिर्गोपैर्वृतस्तद्वनंप्राविश
त्॥२॥ तद्वनंनिरीक्ष्यरंतुंमनोदधेकथंभूतंमंजुघोषायेअलिमृगद्विजाः भ्रमरमृगपक्षिणः तैराकुलंव्याप्तंमहज्जनः स्वच्छपयः सरस्वतामहतांमनयातु
ल्यस्वच्छपयोयस्मिंस्तत्ताआश्रयत्वेनातिमसतेनवातेनेतिशेषस्तत्कम् शतपत्रगंधिनेतिपरिमलवत्वंजुष्टंवनमितिमांद्यंसवितम॥३॥

अरुणपल्लवश्रिया सहस्तस्पर्शं त्यः शिखाः शाखाग्राणि येषां तान् ॥ ४ ॥ तरुजन्म येन तमसा कृतं तस्य तमसः पापस्य अपहत्यै नाशाय अथवा येन त्वया ईश्व रेण सर्वोपकारकं तरुजन्म कृतं तं त्वां नमंति एवं अस्माध्यो निजजन्मनि यदज्ञानरूपं तमोऽस्ति तस्यापहत्यै ॥ ५ ॥ हे अनघ वने गूढमपि त्वां नत्यजंति त्वयि म नुष्यवेषेण निगूढे सति मुनयोऽप्यलिवेषेण निगूढास्त्वां भजंतीत्यर्थः ॥ ६ ॥ इयान्हि सतां निसर्ग इति यदस्ति स्वास्मिन् तत्र गृहमागताय महते महापुरुषा य समर्पयंतीति ॥ ७ ॥ तृणवीरुधश्च तव पादौ स्पृशंतीति तथा करजाभिमृष्टाः नखैः स्पृष्टाः सदयैरवलोकनैः श्रीरपि यस्मै स्पृहयति केवलं ते भुजयोरं

सतत्र तत्रारुणपल्लवश्रिया फलप्रसूनोरुभरेण पादयोः ॥ स्पृशच्छिखान्वीक्ष्य वनस्पतीन्मुदा स्मयन्निवाहाग्रजमादिपूरु षः ॥ ४ ॥ श्रीभगवानुवाच ॥ अहो अमी देववराऽमरार्चितं पादांबुजं ते सुमनःफलार्हणम् ॥ नमंत्युपादाय शिखाभिरात्मन स्तमोपहत्यै तरुजन्म यत्कृतम् ॥ ५ ॥ एतेऽलिनस्तव यशोऽखिललोकतीर्थं गायंत आदिपुरुषानुपदं भजंते ॥ प्रायो अ मी मुनिगणा भवदीयमुख्या गूढं वनेऽपि न जहत्यनघात्मदैवम् ॥ ६ ॥ नृत्यंत्यमी शिखिन ईड्य मुदा हरिण्यः कुर्वन्ति गोप्य इव ते प्रियमीक्षणेन ॥ सूक्तैश्च कोकिलगणा गृहमागताय धन्या वनौकस इयान्हि सतां निसर्गः ॥ ७ ॥ धन्येयमद्य धरणी तृणवीरुधस्त्वत्पादस्पृशो द्रुमलताः करजाभिमृष्टाः ॥ नद्योऽद्रयः खगमृगाः सदयावलोकैर्गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीः ॥ ८ ॥ श्रीशुक उवाच ॥ एवं वृन्दावनं श्रीमत्कृष्णः प्रीतमनाः पशून् ॥ रेमे संचारयन्नद्रेः सरिद्रोधःसु सानुगः ॥ ९ ॥ क्वचिद्गा यति गायत्सु मदांधालिष्वनुव्रतैः ॥ उपगीयमानचरितः स्रग्वी संकर्षणान्वितः ॥ १० ॥ क्वचिच्च कलहंसानामनुकूजति कूजि तं ॥ अभिनृत्यति नृत्यंतं बर्हिणं हासयन्क्वचित् ॥ ११ ॥ मेघगंभीरया वाचा नामभिर्दूरगान्पशून् ॥ क्वचिदाह्वयति प्रीत्या गोगो पालमनोज्ञया ॥ १२ ॥ चकोरक्रौञ्चचक्राह्वभारद्वाजांश्च बर्हिणः ॥ अनुरौति स्म सत्त्वानां भीतवद्व्याघ्रसिंहयोः ॥ १३ ॥ क्वचित्क्री डापरिश्रांतं गोपोत्संगोपबर्हणम् ॥ स्वयं विश्रमयत्यार्य्यं पादसंवाहनादिभिः ॥ १४ ॥ रेण वक्षसा गोप्यो धन्या इति ॥ ८ ॥ एवं श्रीम

द्वृंदावनं प्रति प्रीतः सन् अद्रेः समीपवर्तिसरित्तटेषु पशून्संचारयन् सानुगः गोपैः सहवर्तमानः प्रीतमना रेमे ॥ ९ ॥ तामेव रतिमाह क्वचिदित्या दिदशभिः ॥ १० ॥ बर्हिणं नृत्यंतमनु अभिनृत्यति बर्हिणं अभिमुखो नृत्यतीति वा सखीन् हासयन् ॥ ११ ॥ १२ ॥ चकोरादीननुकृत्य रौति कदाचिच्च स त्त्वानां मध्ये व्याघ्रसिंहयोस्ताभ्यां भीतवद्भवति सत्त्वेषु पलायमानेषु पलायत इत्यर्थः तयोः सत्त्वानां बलोद्रेकाणां भीतवद्भवतीति वा ॥ १३ ॥ आर्य्यं अग्रजं

T

मिथोनृत्यादीन्कुर्वतोगोपान्प्रशशंसतुः॥१५॥१६॥व्यजनैःपल्लवादिनिर्मितैः॥१७॥१८॥ईशचेष्टितइतिनिगूढस्वभावत्वेपिअंतरांतराईशस्यै
वचेष्टितानिदृश्यंतेयस्मिन्सः॥१९॥२०॥ईशचेष्टितत्वमेवदर्शयितुमाहश्रीदामेतिस्तोककृष्णःकश्चित्॥२०॥तालालिसंकुलम्तालानांपङ्क्तिभिः



नृत्यतोगायतःक्वापिवल्गतोयुध्यतोमिथः।गृहीतहस्तौगोपालान्हसंतौप्रशशंसतुः॥१५॥क्वचित्पल्लवतल्पेषुनि
युद्धश्रमकर्शितः।वृक्षमूलाश्रयःशेतेगोपोत्संगोपबर्हणः॥१६॥पादसंवाहनंचक्रुःकेचित्तस्यमहात्मनः।अपरेहतपा
प्मानोव्यजनैःसमवीजयन्॥१७॥अन्येतदनुरूपाणिमनोज्ञानिमहात्मनः।गायंतिस्ममहाराजस्नेहक्लिन्नधियःशनैः॥
॥१८॥एवंनिगूढात्मगतिःस्वमाययागोपात्मजत्वंचरितैर्विडंबयन्।रेमेरमालालितपादपल्लवोग्राम्यैःसमंग्राम्यवदीश
चेष्टितः॥१९॥श्रीदामानामगोपालोरामकेशवयोःसखा।सुबलस्तोककृष्णाद्यागोपाःप्रेम्णेदमब्रुवन्॥२०॥रामराम
महाबाहोकृष्णदुष्टनिबर्हण।इतोविदूरेसुमहद्वनंतालालिसंकुलम्॥२१॥फलानितत्रभूरीणिपतंतिपतितानिच।संति
किंत्ववरुद्धानिधेनुकेनदुरात्मना॥२२॥सोतिवीर्योसुरोरामहेकृष्णखररूपधृक्।आत्मतुल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृ
तः॥२३॥तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन्।नसेव्यतेपशुगणैःपक्षिसंघैर्विवर्जितम्॥२४॥विद्यंतेऽभुक्तपूर्वाणिफ
लानिसुरभीणिच।एषवैसुरभिर्गंधोविषूचीनोवगृह्यते॥२५॥प्रयच्छतानिनःकृष्णगंधलोभितचेतसां।वांछास्तिमह
तीरामगम्यतांयदिरोचते॥२६॥एवंसुहृद्वचःश्रुत्वासुहृत्प्रियचिकीर्षया।प्रहस्यजग्मतुर्गोपैर्वृतौतालवनंप्रभू॥२७॥ब
लःप्रविश्यबाहुभ्यांतालान्संपरिकंपयन्।फलानिपातयामाससमतंगजइवौजसा॥२८॥फलानांपततांशब्दंनिशम्यासुर
रासभः।अभ्यधावत्क्षितितलंसनगंपरिकंपयन्॥२९॥समेत्यतरसाप्रत्यग्द्वाभ्यांपद्भ्यांबलंबली।निहत्योरसिकाशब्दंमुंच
न्पर्यसरत्खलः॥३०॥पुनरासाद्यसंरब्धउपक्रोष्टापराक्स्थितः।चरणावपरौराजन्बलायप्राक्षिपद्रुषा॥३१॥

र्व्याप्तम्॥२१॥२२॥२३॥२४॥विषूचीनःसर्वतःप्रसृतः॥२५॥२६॥२७॥२८॥सनगंसवृक्षम्॥२९॥प्रत्यग्द्वाभ्यांपश्चिमाभ्यांद्वाभ्यांकाशब्दमिति
गर्दभजातिस्वभावात्करणंपर्यसरत्परितोधावतिस्मेत्यर्थः॥३०॥उपक्रोष्टागर्दभःपराक्प्रतिमुखःअपरौपश्चिमौबलायबलंहंतुम्॥३१॥

तृणराजस्तालः ॥३२॥३३॥ उत्सृष्टेनखरदेहेनहृतैराहताः चकंपिरे अकंपंत ॥३४॥ यस्मिन्निदं विश्वमोतं ऊर्द्ध्वंतंतुषुपटइवग्रथितंप्रोतंतिर्यक्तंतुषुपटवदेवसंग्रथितंसर्वतोऽनुस्यूतंवर्त्ततइत्यर्थः ॥३५॥३६॥३७॥ घनैर्नभस्तलमिवभूःरराजतत्रफलप्रकरसंकीर्णेतिदैत्यदेहैःफलतालाग्रैश्च संकीर्णाइत्यरुणश्वेतनीलघनसादृश्यसंपादनम् ॥३८॥३९॥ आदन्नभक्षयन् ॥४०॥४१॥ गोरजोभिः छुरितेषुकुंतलेषुबद्धंबर्हंवन्यानिप्रसूनानिच



सतंगृहीत्वाप्रपदोर्भ्रामयित्वैकपाणिना। चिक्षेपतृणराजाग्रेभ्रामणत्यक्तजीवितं ॥३२॥ तेनाहतोमहातालोवेपमानोबृहच्छिराः। पार्श्वस्थंकंपयन्भग्नःसचान्यंसोपिचापरं ॥३३॥ बलस्यलीलयोत्सृष्टखरदेहहताहताः। तालाश्चकंपिरे सर्वेमहावातेरिताइव ॥३४॥ नैतच्चित्रंभगवतिह्यनन्तेजगदीश्वरे। ओतप्रोतमिदंयस्मिन्तंतुष्वङ्गयथापटः ॥३५॥ ततः कृष्णंचरामंचज्ञातयोधेनुकस्यये। क्रोष्टारोऽभ्यद्रवन्सर्वेसंरब्धाहतबांधवाः ॥३६॥ तांस्तानापततःकृष्णोरामश्चनृपलीलया ॥ गृहीतपश्चाच्चरणान्प्राहिणोत्तृणराजसु ॥३७॥ फलप्रकरसंकीर्णंदैत्यदेहैर्गतासुभिः। रराजभूःसतालाग्रैर्घनैरिवनभस्तलम् ॥३८॥ तयोस्तत्सुमहत्कर्मनिशम्यविबुधादयः। मुमुचुःपुष्पवर्षाणिचक्रुर्वाद्यानितुष्टुवुः ॥३९॥ अथतालफलान्यादन्मनुष्यागतसाध्वसाः। तृणंचपशवश्चेरुर्हतधेनुककानने ॥४०॥ कृष्णःकमलपत्राक्षःपुण्यश्रवणकीर्तनः। स्तूयमानोऽनुगैर्गोपैःसाग्रजोव्रजमाव्रजत् ॥४१॥ तंगोरजश्छुरितकुंतलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासम्। वेणुंक्वणन्तमनुगैरनुगीतकीर्तिंगोप्योदिदृक्षितदृशोऽभ्यगमन्समेताः ॥४२॥ पीत्वामुकुंदमुखसारघमक्षिभृङ्गैस्तापंजहुर्विरहजंव्रजयोषितोऽह्नि। तत्सत्कृतिंसमधिगम्यविवेशगोष्ठंसव्रीडहासविनयंयदपांगमोक्षं ॥४३॥ तयोर्यशोदारोहिण्यौपुत्रयोःपुत्रवत्सले। यथाकामंयथाकालंव्यधत्तांपरमाशिषः ॥४४॥ गताध्वानश्रमौतत्रमज्जनोन्मर्दनादिभिः। नीवींवसित्वारुचिरांदिव्यस्रग्गंधमण्डितौ ॥४५॥

१ यस्यरुचिरमीक्षणंचारुहासश्चयस्यतंचतंचदिदृक्षितदृशः दिदृक्षिताः दर्शनोत्कंठाग्रस्तादृशोयासांताः ॥४२॥ मुकुन्दस्यमुखपद्मगतंसारघंमधुअन्हियोविरहस्तस्माज्जातंतापंसचतासांसत्कृतिंपूजांकांसत्कृतिंकथंवाकृतांतामाह सव्रीडेतिसव्रीडेनसलज्जेनहासेनविनयोयथाभवति तथायदेततकिंततअपाङ्गमोक्षंकटाक्षदर्शनंतथातासांसत्कृतिंप्राप्येति ॥४३॥ ४४ ॥ ४५ ॥

T

॥४६॥४७॥४८॥४९॥५०॥ संप्रतिलब्ध एव दृत्ताप्राणाः स्मृतिर्यैस्ते संप्रतीतस्मृतयः यद्वा सम्यक्प्रतीता प्रतिप्राप्ता स्मृतिर्यैस्ते तथा इति ॥५१॥५२॥ इति दशमे पंचदशोऽध्यायः ॥१५॥ षोडशे कालियस्योक्तो निग्रहो यमुनाह्रदे। तत्पत्नीभिः स्तुतेनाथ कृष्णेनानुग्रहः कृतः ॥१॥ हलायासभदैतेया न्लब्धा तालफलान्यलं। प्रीतोऽनृत्यत्फणारंगे कालियस्य कलानिधिः ॥२॥ उद्वासयत् निःसारितवान् ॥१॥ बहूनि युगान्यावासो यस्य तमहिं सर्व अहिः अजलचरोऽपि तस्मिन्नंतर्जले यथा येन प्रकारेणासीत् अथवा बहूनि युगान्यावासो यथा भवति तथा तेन प्रकारेण स यत्रासीदिति कथ्यतां ॥२॥ गोपाले



जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ। संविश्य वरशय्यायां सुखं सुषुपतुर्व्रजे ॥४६॥ एवं स भगवान्कृष्णो वृंदावनचरः क्वचित्। ययौ राममृते राजन् कालिंदीं सखिभिर्वृतः ॥४७॥ अथ गावश्च गोपाश्च निदाघातपपीडिताः। दुष्टं जलं पपुस्तस्यास्तृषार्ता विषदूषितं ॥४८॥ विषांभस्तदुपस्पृश्य दैवोपहतचेतसः। निपेतुर्व्यसवः सर्वे सलिलांते कुरूद्वह ॥४९॥ वीक्ष्य तान्वै तथाभूतान्कृष्णो योगेश्वरेश्वरः। ईक्षयाऽमृतवर्षिण्या स्वनाथान्समजीवयत् ॥५०॥ ते संप्रतीतस्मृतयः समुत्थाय जलांतिकात्। आसन्सुविस्मिताः सर्वे वीक्षमाणाः परस्परं ॥५१॥ अन्वमंसत तद्राजन्गोविंदानुग्रहेक्षितम्। पीत्वा विषं परेतस्य पुनरुत्थानमात्मनः ॥५२॥ इति श्रीभागवते म॰ दशमस्कन्धे धेनुकवधो नाम पञ्चदशोऽध्यायः ॥१५॥ श्रीशुक उवाच ॥ विलोक्य दूषितां कृष्णां कृष्णः कृष्णाहिना विभुः। तस्या विशुद्धिमन्विच्छन्सर्पं तमुदवासयत् ॥१॥ राजोवाच ॥ कथमंतर्जलेऽगाधे न्यगृह्णाद्भगवानहिम्। स वै बहुयुगावासं यथासीद्विप्र कथ्यतां ॥२॥ ब्रह्मन्भगवतस्तस्य भूम्नः स्वच्छंदवर्तिनः। गोपालोदारचरितं कस्तृप्येतामृतं जुषन् ॥३॥ श्रीशुक उवाच ॥ कालिंद्यां कालियस्यासीद्ध्रदः कश्चिद्विषाग्निना। श्रप्यमाणपया यस्मिन् पतंत्युपरिगाः खगाः ॥४॥ विप्रुष्मता विषोदोर्मिमारुतेनाभिमर्शिताः। म्रियंते तीरगा यस्य प्राणिनः स्थिरजंगमाः ॥५॥ तं चंडवेगविषवीर्यमवेक्ष्य तेन दुष्टां नदीं च खलसंयमनावतारः ॥ ॥

न यदुदारमाचरितं तदेवामृतं अतः कथ्यतामिति ॥३॥ श्रप्यमाणं पच्यमानं पयो यस्य सः अत उपरि गच्छंतः खगा यस्मिन् पतंति ॥४॥ किंच विप्रुष्मता अंबुकणयुक्तेन विषोदकतरंगस्पर्शिमारुतेन स्पृश्यमानाः तीरगा म्रियंते स ह्रद आसीदिति ॥५॥ तं कालियं चंडो वेगो यस्य तद्विषमेव वीर्यं यस्य तं कदंब [illegible]

पुराणांतरं आस्फोट्य बाहुं करतलेनाहत्य गाढा दृढा बद्धा रशना कटिबंधनवस्त्रं येन सः॥६॥ तदा सर्पस्य ह्रदः पुरुषश्रेष्ठस्य पतनभारेण संक्षोभिताना
सुरगाणां विषैरुन्नतो ऽम्बुराशिर्यस्य सः विषेण कषायी ... भीषणाः ऊर्मयो यस्य सः पर्यक्प्लुतः धनुःशतं प्लुतः प्रसृतः नैतच्चित्रमित्याह अनंतब

लस्येति॥७॥ ह्रदे विहरतः भुजदंडाहतोदकघोषं श्रुत्वा ततः स्वसदनाभिभवं निरीक्ष्य तदसहमानः सर्पः समसरत्समाजगाम॥८॥ प्रेक्षणीयश्चासुकु

कृष्णः कदंबमधिरुह्य ततो ऽतितुंगमास्फोट्य गाढरशनो न्यपतद्विषोदे॥६॥ सर्पह्रदः पुरुषसारनिपातवेगसंक्षोभितोर
गविषोच्छ्वसितांबुराशिः। पर्यक्प्लुतो विषकषायबिभीषणोर्मिर्धावन्धनुःशतमनंतबलस्य किं तत्॥७॥ तस्य ह्रदे विहर
तो भुजदंडघूर्णवार्घोषमङ्ग वरवारणविक्रमस्य। आश्रुत्य तत्स्वसदनाभिभवं निरीक्ष्य चक्षुःश्रवाः समसरत्तदमृष्यमा
णः॥८॥ तं प्रेक्षणीयसुकुमारघनावदातं श्रीवत्सपीतवसनं स्मितसुंदरास्यम्। क्रीडंतमप्रतिभयं कमलोदरांघ्रिं संद
श्य मर्मसु रुषा भुजया चछाद॥९॥ तं नागभोगपरिवीतमदृष्टचेष्टमालोक्य तत्प्रियसखाः पशुपा भृशार्ताः॥ कृष्णेऽर्पि
तात्मसुहृदर्थकलत्रकामा दुःखानुशोकभयमूढधियो निपेतुः॥१०॥ गावो वृषा वत्सतर्यः क्रंदमानाः सुदुःखिताः
॥ कृष्णे न्यस्तेक्षणा भीता रुदंत्य इव तस्थिरे॥११॥ अथ व्रजे महोत्पातास्त्रिविधा ह्यतिदारुणाः। उत्पेतुर्भुवि दिव्यात्मन्या
ऽऽसन्नभयशंसिनः॥१२॥ तानालक्ष्य भयोद्विग्ना गोपा नंदपुरोगमाः। विना रामेण गाः कृष्णं ज्ञात्वा चारयितुं गतम्॥१३॥
तैर्दुर्निमित्तैर्निधनं मत्वा प्राप्तमतद्विदः। तत्प्राणास्तन्मनस्कास्ते दुःखशोकभयातुराः॥१४॥ आबालवृद्धवनिताः सर्वे
ऽङ्ग पशुवृत्तयः। निर्जग्मुर्गोकुलाद्दीनाः कृष्णदर्शनलालसाः॥१५॥ तांस्तथा कातरान्वीक्ष्य भगवान्माधवो बलः॥ प्रहस्य किं
चिन्नोवाच प्रभावज्ञोऽनुजस्य सः॥१६॥ तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः। भगवल्लक्षणैर्जग्मुः पदव्या यमुनातट
म्॥१७॥

९ मारश्च घनवदुज्ज्वलश्च तं श्रीवत्सपीतवसनं श्रीवत्सेन संयुक्तमुज्ज्वलत्पीतं वस्त्रं यस्य तं भुजया भोगेन चछाद अवेष्टयत्॥१०॥ स
प्रियो येषां ते तत्प्रियास्ते च ते सखायश्चेति तथा॥१०॥११॥ भुविभूकंपादयः दिवि उल्कापातादयः आत्मनि वामनेत्रस्फुरणादयः आसन्नभयं शंसितुं शीलं
येषां ते॥१२॥ तानालक्ष्य गोकुलान्निर्जग्मुरिति तृतीयेनान्वयः भयोद्विग्नाः भयहेतुभ्यो भीताः भयेन कंपमाना इति वा॥१३॥ न तं विदंतीति अतद्वि
दः॥१४॥ पशुवृत्तयः अतिवत्सलाः॥१५॥ कातरान्भीतान्॥१६॥ भगवंतं लक्षयंति यानि पदानि तैः पदैः सूचितया पदव्या मार्गेण ॥ १७ ॥

भा॰द॰
पू॰
५०

पदैर्मार्गज्ञानप्रकारमाह तइतिविश्पतेः श्रीकृष्णस्य अन्येषांपदानामंतरांतरे मध्येमध्येतत्तदपोहेनगवांश्रुतीनांमार्गेसत्वराअप्रमत्ताःयोगिनस्त दुपाध्यपवादेनयथापरंतत्वंमृगयंतेतद्वदितिभावः॥१८॥ततश्चसर्पशरीरवेष्टितंकृष्णंदूरान्निरीक्ष्यगोपांश्चपशूंश्चतथानिरीक्ष्यार्ताःपरमकश्मलं परंमोहंप्रापुः॥१९॥प्रियेणश्रीकृष्णेनव्यतिहृतंविरहितंत्रैलोक्यंशून्यंददृशुः॥२०॥२१॥२२॥अनन्यगतिमात्मानमित्थंनिरीक्ष्यअतएवात्महेतोःस्वगोकु लमतिदुःखितमाज्ञायउरगबंधात्उदतिष्ठदित्यन्वयः॥२३॥तस्यप्रथ्यमानेनवपुषाव्यथितात्मशरीरोभुजंगःकुंडलीमुन्मुच्यतंत्यक्त्वाकुपितःस्वफणा

तंतत्रतत्राऽब्जयवांकुशाशनिध्वजोपपन्नानिपदानिविश्पतेः।मार्गेगवामन्यपदांतरांतरेनिरीक्षमाणाययुरङ्गसत्वराः॥१८॥
अंतर्ह्रदेभुजगभोगपरीतमारात्कृष्णंनिरीहमुपलभ्यजलाशयांते।गोपांश्चमूढधिषणान्परितःपशूंश्चसंक्रंदतःपरमकश्मल
मापुरार्ताः॥१९॥गोप्योऽनुरक्तमनसोभगवत्यनंतेतत्सौहृदस्मितविलोकगिरःस्मरंत्यः।ग्रस्तेऽहिनाप्रियतमेभृशदुःख
तप्ताःशून्यंप्रियव्यतिहृतंददृशुस्त्रिलोकम्॥२०॥ताःकृष्णमातरमपत्यमनुप्रविष्टांतुल्यव्यथाःसमनुगृह्यशुचःस्रवंत्यः।
तास्ताःप्रियव्रजकथाःकथयंत्यआसन्कृष्णाननेऽर्पितदृशोमृतकप्रतीकाः॥२१॥कृष्णप्राणान्निर्विशतोनंदादीन्वीक्ष्यतंह्रदं।
प्रत्यषेधत्सभगवान्रामःकृष्णानुभाववित्॥२२॥इत्थंस्वगोकुलमनन्यगतिंनिरीक्ष्यसस्त्रीकुमारमतिदुःखितमात्महेतोः।
आज्ञायमर्त्यपदवीमनुवर्त्तमानःस्थित्वामुहूर्तमुदतिष्ठदुरंगबंधात्॥२३॥तत्प्रथ्यमानवपुषाव्यथितात्मभोगस्त्यक्त्वोन्नमय्य
कुपितःस्वफणान्भुजङ्गः।तस्थौश्वसन्श्वसनरन्ध्रविषांबरीषस्तब्धेक्षणोल्मुकमुखोहरिमीक्षमाणः॥२४॥तंजिह्वयाद्विशि
खयापरिलेलिहानंद्वेसृक्किणीह्यऽतिकरालविषाग्निदृष्टिं।क्रीडन्नमुंपरिससारयथाखगेंद्रोबभ्रामसोऽप्यवसरंप्रसमीक्षमा
णः॥२५॥एवंपरिभ्रमहतौजसमुन्नतांसमानम्यतत्पृथुशिरःस्वऽधिरूढआद्यः।तन्मूर्द्धरत्ननिकरस्पर्शातिताम्रपादांबुजोऽ
खिलकलादिगुरुर्ननर्त॥२६॥

ऽनुन्नमय्यश्वसनकेवलमीक्षमाणस्तस्थौकथंभूतःश्वसनरंध्रेषुनासाविवरेषुविषंयस्यसःतथाअंबरीषोमंड कपाकभाजनंतद्वत्संतप्तानिस्तब्धानिईक्षणानियस्यसःतथाउल्मुकानिमुखेषुयस्यसचसच॥२४॥हरिश्चक्रीडन्तमग्रंसर्पंपरिससारपरितोब भ्रामअतिकरालाविषाग्नियुक्तादृष्टिर्यस्यतंजिह्वयाद्विशिखयेतिप्रतिमुखमेव॥२५॥एवंपरिभ्रमेणैवहतमोजोयस्यतंउन्नतावंसौयस्यतं

अ॰
१६

रामः

उपसेदुः प्राप्ताः॥२७॥शतैकशीर्ष्णः शतं एकानि मुख्यानि शीर्षाणि यस्य तस्य क्षीणायुषोऽपि पुनर्भ्रमतः यद्यच्छिरो न नमते स्तब्धतां न जहाति नृत्य
च्छलेनांघ्रिपातैस्तत्तन्ममर्द तदा च आस्यतो मुखेभ्यो नस्तो नासाविवरेभ्यश्च असृग्वमन्॥२८॥पुनरपि रुषा उच्चैर्निःश्वसतो यद्यदुत्समुन्नमति तत्तत्
पादाघातेनानुनमयन् इह अस्मिन्नवसरे हृष्टैर्गंधर्वादिभिः शेषासनः पुराणपुरुष इव यशोदानंदनः पुष्पैः प्रपूजितः यद्वा तदा गंधर्वादिभिः पुष्पैः प्रपू
जितो गोपैः पुराणः पुमानिव दृष्ट इति यद्वा पुष्पैः प्रपूजित इव प्रसन्नः सन् दमयांबभूव हितं कृतवानित्यर्थः॥२९॥अरणं शरणं॥३०॥गर्भे जगंति य
स्य तस्य अतिभरेण अवसन्नं आक्रांतं पार्ष्णिः पादपृष्ठम् आद्यं श्रीकृष्णं स्रस्यंतो विस्रंसमाना वसनादयो यासां ताः॥३१॥ताः शरणं प्रपन्नाः सत्य

तं नर्तुमुद्यतमवेक्ष्य तदा तदीयगंधर्वसिद्धसुरचारणदेववध्वः। प्रीत्या मृदंगपणवानकवाद्यगीतपुष्पोपहारनुतिभिः
सहसोपसेदुः॥२७॥ यद्यच्छिरो न नमतेऽङ्ग शतैकशीर्ष्णस्तत्तन्ममर्द खलदंडधरोंघ्रिपातैः। क्षीणायुषो भ्रमत उल्बणमा
स्यतोऽसृङ्नस्तो वमन्परमकश्मलमाप नागः॥२८॥ तस्याक्षिभिर्गरलमुद्वमतः शिरस्सु यद्यत्समुन्नमति निःश्वसतो रुषो
च्चैः। नृत्यत्पदाऽनुनमयन्दमयांबभूव पुष्पैः प्रपूजित इवेह पुमान्पुराणः॥२९॥ तच्चित्रतांडवविरुग्णफणातपत्रो
रक्तं मुखैरुरु वमन्नृप भग्नगात्रः। स्मृत्वा चराचरगुरुं पुरुषं पुराणं नारायणं तमरणं मनसा जगाम॥३०॥ कृष्णस्य
गर्भजगतोऽतिभरावसन्नं पार्ष्णिप्रहारपरिरुग्णफणातपत्रम्। दृष्ट्वाहिमाद्यमुपसेदुरमुष्य पत्न्य आर्ताः श्लथद्वसन
भूषणकेशबंधाः॥३१॥ तास्तं सुविग्नमनसोऽथ पुरस्कृतार्भाः कायं निधाय भुवि भूतपतिं प्रणेमुः। साध्व्यः कृतांजलि
पुटाः शमलस्य भर्तुर्मोक्षेप्सवः शरणदं शरणं प्रपन्नाः॥३२॥ नागपत्न्य ऊचुः। न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिंस्त
वावतारः खलनिग्रहाय॥ रिपोः सुतानामपि तुल्यदृष्टेर्धत्से दमं फलमेवानुशंसन्॥३३॥ अनुग्रहोऽयं भवता कृतो हि नो
दंडोऽसतां ते खलु कल्मषापहः॥

॥ स्तं प्रणेमुः सुविग्नमनसः अतिविह्वलचित्ताः भुवीति तस्मिन्स्थाने जलादधस्ताद्वा तीरे वा शमलस्य
पापात्मनोऽपि भर्तुर्मोक्षेप्सवः भर्तुर्यं च्छमलं तस्य वा भूतपतिं प्राणिमात्रस्य पतिं शरणदं आश्रयप्रदम्॥३२॥ प्रथमं तावत्कुपितं भगवंतं दंडानुमो
दनेनोपशमयंत्यः स्तुवंति न्याय्यो हीति तत्र। दंडानुमोदनं षड्भिर्दशभिश्च हरेः स्तुतिः॥ प्रार्थनं पंचभिः श्लोकैः स्तुतः पन्नगयोषितां। न च निग्रहानुग्र
हलक्षणं वैषम्यं तवास्तीत्याहुः धत्से दममिति अनुशंसन् आलोचयन्॥३३॥ निग्रहोऽप्यनुग्रहायेत्युक्तं इदानीमनुग्रह एवायं न निग्रह ॥ ॥

इत्याहुः अनुग्रह इति नः अस्माकं यस्मादमुष्य सर्पत्वं दृश्यते अतस्तन्मूलपापनिवर्तको दण्डोनुग्रह एव क्रोधत्वेन प्रतीयमानोपीत्यर्थः॥३४॥ महांश्चायमनुग्रह इति तस्य पूर्वपुण्यमभिनंदंति तप इति स्वयं मानरहितेन अन्येभ्यो मानदेन च सर्वजीवयतीति सर्वजीवः॥३५॥ न तप आदिनिमित्त एष भाग्योदयः किंतु विलसितवरूपावैभवमित्याहुः श्लोकत्रयेण कस्यानुभाव इति तप आदिना ब्रह्मादयोऽपि यस्याः श्रियः प्रसादमिच्छंति सा श्रीरेव ललना उत्तमास्त्री यस्य त्वदंघ्रिस्पर्शाधिकारस्य वांछया तप आचरत् अस्य सर्पस्य स किं कृतवान् इति कोवेत्तीत्यर्थः॥३६॥ यत्तव पादरजः प्रपन्नाः प्राप्ताः पारमेष्ठ्याद्यपि तुच्छं मन्यन्ते॥३७॥ अहो तदेष अयत्नत एव प्राप अन्यैः श्र्यादिभिरपि पुनः कथंभूतं पादरजः यदिच्छतः सेव्यमेव भवत्विति प्रार्थयमानस्यैव समक्षः प्रत्यक्ष एव विभवः अपेक्षितार्थं संपद्भवति॥३८॥ नमस्तुभ्यं भगवते अचिंत्यैश्वर्यादिगुणाय तदुपपादनाय दशभिः श्लोके विशेषणा

यद्दंदशूकत्वममुष्य देहिनः क्रोधोपि तेनुग्रह एव संमतः॥३४॥ तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन। धर्मोथवा सर्वजनानुकंपया यतो भवांस्तुष्यति सर्वजीवः॥३५॥ कस्यानुभावोऽस्य न देव विद्महे तवांघ्रिरेणुस्पर्शाधिकारः। यद्वांछया श्रीर्ललनाऽचरत्तपो विहाय कामान्सुचिरं धृतव्रता॥३६॥ न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम्। न योगसिद्धीरपुनर्भवं वा वांछंति यत्पादरजः प्रपन्नाः॥३७॥ तदेष नाथाप दुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः। संसारचक्रे भ्रमतः शरीरिणो यदिच्छतः स्याद्विभवः समक्षः॥३८॥ नमस्तुभ्यं भगवते पुरुषाय महात्मने। भूतावासाय भूताय पराय परमात्मने॥३९॥ ज्ञानविज्ञाननिधये ब्रह्मणेऽनंतशक्तये। अगुणायाविकाराय नमस्ते प्राकृताय च॥४०॥ कालाय कालनाभाय कालावयवसाक्षिणे। विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे॥४१॥

॥ निपुरुषाय पूर्षु अंतर्यामिरूपेण वर्त्तमानाय महात्मने एवमपि नातिपरिच्छिन्नाय कुतः भूतावासाय आकाशाद्याश्रयाय एतदपि कुतः भूताय पूर्वमपि सते कुतः पराय कारणाय किंच परमात्मने कारणातीताय॥३९॥ कारणत्वं कारणातीतत्वं च समर्थयितुमाह ज्ञानविज्ञाननिधये ज्ञानं ज्ञप्तिः विज्ञानं चिच्छक्तिः उभयोर्निधये ताभ्यां पूर्णाय कथं तथात्वं अत उक्तं ब्रह्मणे अनंतशक्तये कथंभूताय ब्रह्मणे अगुणाय अविकाराय पुनः कथंभूताय अनंतशक्तये प्राकृताय प्रकृतिप्रवर्तकाय अप्राकृताय इति वा अप्राकृतायात्मने नम इति॥४०॥ अनंतशक्तित्वात् कालशक्त्या विश्वस्रष्टृत्वादिरूपेण नमस्यंति कालाय कालस्वरूपाय कालनाभाय कालशक्त्याश्रयाय कालावयवानां क्षणादिसमयानां साक्षिणे तत्स्रष्ट्रे विश्वाय विश्वरूपाय तर्हि किं जडोऽहं नहि तदुपद्रष्ट्रे न च द्रष्टृमात्रं किंतु तत्कर्त्रे न च कर्तृमात्रं विश्वहेतवे

तदेवाह भूतमात्रेंद्रियप्राणमनोबुध्याशयात्मने

तदेवाहुः भूतमात्रेंद्रियप्राणमनोबुध्याशयात्मने आशयश्चित्तं भूतादिरूपाय अतः सर्वकारकरूपायेति अहंकारात्मतयानमस्यंति त्रिगुणेनेति एवं सप्र
कार्येपरस्त्रिगुणोऽभिमानस्तेनगूढानांस्वांशभूतानामात्मनांजीवानामनुभूतिर्येनतस्मै॥४२॥  एवंस्वाहंकारेणावृतत्वादितिस्तुवंतिनमोऽनंतायअहंकारापरि
च्छेदात् अतः सूक्ष्माय अदृश्यत्वात् अतएवकूटस्थाय उपाधिकृतविकाराभावात् अतएवविपश्चितेसर्वज्ञायएवंवस्तुतः सुखोऽपि त्वमायात्वेनस्तुवंतिना
नावादानुरोधाय अस्तिनास्तिसर्वज्ञः किंचिज्ज्ञः बद्धः मुक्तः एक अनेक इत्यादीन्नानावादाननुरुणद्धि मायया अनुवर्त्ततेयः तस्मै किंचवाच्यवाचकशक्तयेअभि
धानाभिधेयशक्तिभेदादपिनानात्वेनप्रतीयमानायेत्यर्थः॥४३॥ अनावृतत्वमेवहेत्वंतरेणापिसूचयंतः स्तुवंतिनमः प्रमाणमूलायचक्षुरादीनांचक्षुरादिरू
पाय अतएवकवये स्वयंतन्निरपेक्षज्ञानाय कुतः शास्त्रयोनये वेदात्मकनिःश्वासाय किंच प्रवृत्ताय निवृत्ताय निगमाय नमोनमः॥४४॥ किंच अनावृतत्वमेव
देवचतुर्मूर्तिरूपेण सर्वोपास्यत्वेन नमंति नमः कृष्णायेति श्लोकेन रामायसंकर्षणाय वसुदेवसुताय च वसुदेवशब्दितं शुद्धसत्त्वं तत्र प्रकाशमानाय वासुदे
वायेत्यर्थः सात्वतामुपासकानां पतये सालोक्यादिनापालकाय एवं चतुर्मूर्तये कृष्णाय तुभ्यं नम इति॥४५॥ कथं चतुर्मूर्तितेति तदाहुः नमोगुणप्रदीपायेति

भूतमात्रेन्द्रियप्राणमनोबुध्याशयात्मने। त्रिगुणेनाभिमानेनगूढस्वात्मानुभूतये॥४२॥ नमोऽनंताय सूक्ष्माय कूटस्थाय विपश्चिते।
नानावादानुरोधाय वाच्यवाचकशक्तये॥४३॥ नमः प्रमाणमूलाय कवये शास्त्रयोनये। प्रवृत्ताय निवृत्ताय निगमाय नमोनमः॥
॥४४॥ नमः कृष्णाय रामाय वसुदेवसुताय च॥ प्रद्युम्नायानिरुद्धाय सात्वतांपतये नमः॥४५॥ नमो गुणप्रदीपाय गुणात्मच्छा
दनाय च॥ गुणवृत्त्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे॥४६॥ अव्याकृतविहाराय सर्वव्याकृतसिद्धये। हृषीकेश नमस्तेस्तु मुनये
मौनशीलिने॥४७॥ परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः। अविश्वाय च विश्वाय तद्द्रष्ट्रेस्य च हेतवे॥४८॥

गुणा अंतःकरणानि ता
निप्रदीपयति प्रकाशयतीति तथा तस्मै चित्ताद्यधिष्ठातृत्वेन चतुर्मूर्तितेत्यर्थः ननु तथाप्येकस्यैव कथं चतुष्ट्वं अत आहुः गुणात्मच्छादनाय तैरेव गुणैरु पा
सकानां फलवैचित्र्याय आत्मानमाच्छाद्य नानात्वेन प्रकाशमानायेत्यर्थः ननु कथं तर्हि प्रतीतिरत उक्तं गुणवृत्त्युपलक्ष्याय चित्तादीनां चेतनास्य व्यवसाया
दिवृत्तिभिरुपलक्ष्याय उपलक्षणमेवाहुः गुणद्रष्ट्रे तत्साक्षिणे कथंचिदुपलक्ष्य एव न ज्ञेय इत्याहुः स्वसंविदे अगोचरायेत्यर्थः॥४६॥ अगोचरत्वमुपलक्ष्यत्वं
तत्साहुः हे हृषीकेश करणप्रवर्तक किं विषयलिप्सया न मुनये आत्मारामाय किं साधनवशेन वा न हि मौनशीलिने मौनमात्मारामता तत्स्वभावाय॥४७॥
कुतः परावरगतिज्ञाय स्थूलसूक्ष्माणां गतिज्ञत्वेन न क्वापि सज्जमानायेत्यर्थः अपि च सर्वाध्यक्षाय सर्वस्याधिष्ठात्रे कुत एतत् अविश्वाय न विश्वं य
स्मात्तन्निषेधावधये विश्वाय च तद्विवर्ताधिष्ठानायेत्यर्थः किंच तद्द्रष्ट्रे अध्यासापवादसाक्षिणे अपि च अस्य च विश्वाध्यासस्य तदपवादस्य विद्याः॥

T

विद्याभ्यां हेतवे यद्वा अविश्वाय विश्वतैजसाद्यवस्थारहिताय विश्वाय च मायया स्वांशैः तत्तदवस्थाय तद्द्रष्ट्रे तासामवस्थानां भावाभावसाक्षिणे अन्यस्य मानम् तस्मात्सर्वगतित्वं सर्वाधिष्ठातृत्वात् आत्मारामत्वादिभिर्निरतिशयैश्वर्याय तुभ्यं नम इति। विशेषणैरसंकीर्णैः पञ्च पंचाशता नुतः। अहिस्त्रीभिः प्रसन्नो वस्तासामिव भवेद्धरिः॥४८॥ एवं तावद्दण्डानुमोदनेन नमस्कारैश्च भगवन्तं प्रसाद्येदानीं त्वदधीनानां प्राणिनां कोऽपराध इत्याशयवत्यः प्रार्थयंते त्वं हीति अस्य लोकस्य जन्मादि त्वमेवाकृत अकरोः ततश्च तांस्तान्संस्काररूपेण सतः स्वभावान् घोरत्वादीन् प्रतिबोधयन् ईहसे क्रीडसि यद्वा अस्य जन्मादींस्त्वमीहसे इत्यन्वयः कथंभूतः अकृता अनादिर्या कालशक्तिस्तां धारयतीति तथा अन्यत्समानम्॥४९॥ अतस्तस्य तवैव अमूस्तनवस्त



त्वं ह्यस्य जन्मस्थितिसंयमान्प्रभो गुणैरनीहोऽकृतकालशक्तिधृक्। तत्तत्स्वभावान्प्रतिबोधयन्सतः समीक्षयाऽमोघविहार ईहसे॥४९॥ तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शान्ता अशान्ता उत मूढयोनयः। शान्ताः प्रियास्ते ह्यधुनाऽवितुं सतां स्थातुश्च ते धर्मपरीप्सयेहतः॥५०॥ अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः। क्षन्तुमर्हसि शान्तात्मन्मूढस्य त्वामजानतः॥५१॥ अनुगृह्णीष्व भगवन्प्राणांस्त्यजति पन्नगः। स्त्रीणां नः साधुशोच्यानां पतिः प्राणः प्रदीयताम्॥५२॥ विधेहि नः किंकरीणामनुष्ठेयं तवाज्ञया। यच्छ्रद्धयाऽनुतिष्ठन्वै मुच्यते सर्वतो भयात्॥५३॥ श्रीशुक उवाच॥ इत्थं स नागपत्नीभिर्भगवान्समभिष्टुतः। मूर्च्छितं भग्नशिरसं विससर्जाङ्घ्रिकुट्टनैः॥५४॥ प्रतिलब्धेन्द्रियप्राणः कालियः शनकैर्हरिम्। कृच्छ्रात्समुच्छ्वसन्दीनः कृष्णं प्राह कृताञ्जलिः॥५५॥ कालिय उवाच॥ वयं खलाः सहोत्पत्त्या तामसा दीर्घमन्यवः। स्वभावो दुस्त्यजो नाथ लोकानां यदसद्ग्रहः॥५६॥ त्वया सृष्टमिदं विश्वं धातर्गुणविसर्जनम्। नानास्वभाववीर्यौजोयोनिबीजाशयाकृति॥५७॥ वयं च तत्र भगवन्सर्पा जात्युरुमन्यवः। कथं त्यजामस्त्वन्मायां दुस्त्यजां मोहिताः स्वयम्॥५८॥ भवान्हि कारणं तत्र सर्वज्ञो जगदीश्वरः। अनुग्रहं निग्रहं वा मन्यसे तद्विधेहि नः॥५९॥

॰स्यं तव इति तनवः क्रीडोपस्कारास्तत्रापि तवाधुना शान्ताः प्रियाः कुतः सतां धर्मपरिपालनेच्छया ईहतः प्रवर्तमानस्य अतस्तानवितुं स्थातुः स्थितस्य॥५०॥ एवं तवाप्रियाचरणाद्योऽपराधस्तर्हि सोढव्य इति॥५१॥५२॥ युष्मदनुग्रहेऽन्येषां मत्युरेवेति चेत्तत्राहुः विधेहीति त्वदाज्ञया प्राणिनो नाद्याम इति भावः॥५३॥५४॥५५॥ यदसद्ग्रह इति यतः स्वभावोऽसद्ग्रहरूपः यद्वा यतः स्वभावादसन्निदेहादावाग्रहः सद्दुस्त्यज इति॥५६॥ गुणैर्विविधतया सृज्यत इति गुणविसर्जनं तत्रापि नानास्वभावादयो यस्य तत्॥५७॥ जात्या जन्मनैव उ॰

॥ ६० ॥ यतो गोभिर्न भिक्ष्यनदी भुज्यतामिति ॥ ६१ ॥ न सुपर्णात्तो भयमाप्नुयात्तस्य सुपर्णाभिर्भयं नोत्पादनीयमित्याज्ञाइतोपि त्वया निर्गंतव्यमित्याह यो स्मि न्निति त्वयि स्थिते तन्न संभवतीति भावः ॥ ६२ ॥ नव तनवा गरुडाय भवेदित्याह द्वीपमिति ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ इति श्रीभागवते दशमे टीकायां षोडशो ऽध्यायः ॥ १६ ॥ नागं सप्तदशे नागालयं तं निरयापयत् । बंधून्वदुःखतः श्रांतान्सुप्तांस्तत्र दवादपात् ॥ १ ॥ असमंजसं अप्रियं ॥ १ ॥ उपहार्यैः भक्ष्यैः सर्पजनैः स

श्रीशुक उवाच ॥ इत्याकर्ण्य वचः प्राह भगवान्कार्यमानुषः ॥ नात्र स्थेयं त्वया सर्प समुद्रं याहि मा चिरम् ॥ ६० ॥ स्वज्ञात्यपत्य दाराढ्यो गोनृभिर्भुज्यतां नदी ॥ य एतत्संस्मरेन्मर्त्यस्तुभ्यं मदनुशासनम् ॥ ६१ ॥ कीर्तयन्नुभयोः संध्योर्न युष्मद्भयमाप्नुयात् ॥ योस्मिन्स्नात्वा मदाक्रीडे देवादींस्तर्पयेज्जलैः ॥ ६२ ॥ उपोष्य मां स्मरन्नर्चेत्सर्वपापैः प्रमुच्यते ॥ द्वीपं रमणकं हित्वा ह्रदमेत मुपाश्रितः ॥ यद्भयात्स सुपर्णस्त्वां नाद्यान्मत्पादलांछितम् ॥ ६३ ॥ श्रीशुक उवाच ॥ एवमुक्तो भगवता कृष्णेनाद्भुतकर्मणा ॥ तं पूजयामास मुदा नागपत्न्यश्च सादरम् ॥ ६४ ॥ दिव्यांबरस्रङ्मणिभिः परार्ध्यैरपि भूषणैः ॥ दिव्यगंधानुलेपैश्च महत्योत्पल मालया ॥ ६५ ॥ पूजयित्वा जगन्नाथं प्रसाद्य गरुडध्वजम् ॥ ततः प्रीतोभ्यनुज्ञातः परिक्रम्याभिवाद्य तम् ॥ ६६ ॥ सकलत्रसु हृत्पुत्रो द्वीपमब्धेर्जगाम ह ॥ तदैव सामृतजला यमुना निर्विषाभवत् ॥ अनुग्रहाद्भगवतः क्रीडामानुषरूपिणः ॥ ६७ ॥ इ ति श्रीभागवते महापुराणे दशमस्कंधे कालियनिर्यापणं नाम षोडशोऽध्यायः ॥ १६ ॥ राजोवाच ॥ नागालयं रमणकं कस्मा त्तत्याज कालियः ॥ कृतं किं वा सुपर्णस्य तेनैकेनासमंजसम् ॥ १ ॥ श्रीशुक उवाच ॥ उपहार्यैः सर्पजनैर्मासि मासीह यो ब लिः ॥ वानस्पत्यो महाबाहो नागानां प्राङ्निरूपितः ॥ २ ॥ स्वं स्वं भागं प्रयच्छंति नागाः पर्वणि पर्वणि ॥ गोपीथायात्मनः सर्वे सुपर्णाय महात्मने ॥ ३ ॥ विषवीर्यमदाविष्टः काद्रवेयस्तु कालियः ॥ कदर्थीकृत्य गरुडं स्वयं तं बुभुजे बलिम् ॥ ४ ॥ तच्छ्रुत्वा कुपितो राजन्भगवान्भगवत्प्रियः ॥ विजिघांसुर्महावेगः कालियं समुपाद्रवत् ॥ ५ ॥

१ प्राप्यैस्तैर्जनैः वानस्पत्यः वनस्पतेर्मूले देयः नागानां तद्बाधापरिहाराय यो बलिर्निरूपितः उपकल्पितः ॥ २ ॥ ते च नागाः स्वं स्वं भागं जनैर्दत्तं सुपर्णाय प्रयच्छंति ततो भीताः गोपीथाय रक्षणाय ॥ ३ ॥ वि षवीर्याभ्यां यो मदस्तेनाविष्टः काद्रवेयः कद्रुपुत्रः गरुडं कदर्थीकृत्य अविगणय्य यद्वा उपहार्यैः सुपर्णभक्ष्यैः सर्पा एव जनास्तेनागानां संबंधी यस्मिन्नेकै को नागो दीयते तथाभूतो यो बलिः सुपर्णाय निरूपितः तत्र स्वं स्वं भागं सर्वे नागाः प्रयच्छंति कालियस्तु न प्रयच्छति किं त्वन्यैर्दत्तमपि तं बलिं स्वयमे

T

विषमेवायुधंयस्यसः प्रत्यभ्ययात् योद्धुंप्रतिजगाम उच्छ्रितनैकमस्तकः उन्नमितानेकफणः दद्दायुधः दंतायुधः करालजिह्वश्चासावुच्छ्वसितोग्र लोचनश्च उच्छ्वसितानि उज्जृंभितानि उग्राणिलोचनानियस्यसः॥६॥तार्क्ष्यपुत्रो गरुडः मधुसूदनस्य आसनंयस्मिन्सः॥७॥तस्यगरुडस्यागम्यम गाधतयाचदुरासदं॥८॥तदगम्यत्वेकारणमाह तत्रेतिनिवारितोपि॥९॥१०॥११॥लेलिहः सर्पः अतस्तत्रावात्सीत॥१२॥जांबूनदंसुवर्णंतेना



तमापतंतंतरसाविषायुधः प्रत्यभ्ययादुच्छ्रितनैकमस्तकः। दद्भिःसुपर्णंव्यदशद्ददायुधः करालजिह्वोच्छ्वसितोग्रलोचनः॥६॥ तंतार्क्ष्यपुत्रः सनिरस्यमन्युमान्प्रचण्डवेगोमधुसूदनासनः। पक्षेणसव्येनहिरण्यरोचिषाजघानकद्रूसुतमुग्रविक्रमः॥७॥ सुपर्णपक्षाभिहतः कालियोऽतीवविह्वलः। ह्रदंविवेशकालिंद्यास्तदगम्यंदुरासदम्॥८॥ तत्रैकदाजलचरंगरुडोभक्ष्यमीप्सितम्। निवारितः सौभरिणाप्रसह्यक्षुधितोऽहरत्॥९॥ मीनान्सुदुःखितान्दृष्ट्वादीनान्मीनपतौहते। कृपयासौभरिःप्राहतत्रत्यक्षेममाचरन्॥१०॥ अत्रप्रविश्यगरुडोयदिमत्स्यान्सखादति। सद्यःप्राणैर्वियुज्येतसत्यमेतद्ब्रवीम्यहम्॥११॥ तंकालियः परंवेदनान्यःकश्चनलेलिहः। अवात्सीद्गरुडाद्भीतःकृष्णेनचविवासितः॥१२॥ कृष्णंह्रदाद्विनिष्क्रान्तंदिव्यस्रग्गंधवाससम्। महामणिगणाकीर्णंजांबूनदपरिष्कृतम्॥१३॥ उपलभ्योत्थिताःसर्वेलब्धप्राणाइवासवः। प्रमोदनिभृतात्मानोगोपाःप्रीत्याऽभिरेभिरे॥१४॥ यशोदारोहिणीनन्दोगोप्योगोपाश्चकौरव। कृष्णंसमेत्यलब्धेहाआसँल्लब्धमनोरथाः॥१५॥ रामश्चाच्युतमालिङ्ग्यजहासास्यानुभाववित्। नगागावोवृषावत्सालेभिरेपरमांमुदम्॥१६॥ नंदंविप्राःसमागत्यगुरवःसकलत्रकाः। ऊचुस्तेकालियग्रस्तोदिष्ट्यामुक्तस्तवात्मजः॥१७॥ देहिदानंद्विजातीनांकृष्णनिर्मुक्तिहेतवे। नन्दःप्रीतमनाराजन्गाःसुवर्णंतदाऽदिशत्॥१८॥ यशोदापिमहाभागानष्टलब्धप्रजासती। परिष्वज्यांकमारोप्यमुमोचाश्रुकलांमुहुः॥१९॥ तांरात्रिंतत्रराजेन्द्रक्षुत्तृड्भ्यांश्रमकर्शिताः। ऊषुर्व्रजौकसोगावःकालिंद्याउपकूलतः॥२०॥ तदाशुचिवनोद्भूतोदावाग्निःसर्वतोव्रजम्। सुप्तंनिशीथआवृत्यप्रदग्धुमुपचक्रमे ॥ २१ ॥ ॥ ॥ ॥



लंकृतम्॥१३॥असवः इन्द्रियाणिप्रमोदनिभृतात्मानः आनंदपूर्णमनसः॥१४॥लब्धेहाः लब्धचेष्टाः॥१५॥नगाः वृक्षा अपिपूर्वंशुष्काः सन्तः स

२२॥२३॥कालाग्नेः मृत्युरूपादग्नेर्नमृत्योर्बिभीमः किंतु त्वच्चरणवियोगादित्याहुः नशक्नुमइति॥२४॥२५॥विमोहानहिदण्डेनततःस्वशरणंगतान्॥गोपा
नपादनंतोऽसावनंतवनवन्हितः॥१॥इतिदशमेटीकायांसप्तदशोऽध्यायः॥१७॥अष्टादशेततोग्रीष्मेवसंतगुणलक्षिते।अघातयत्प्रलंबेनालंप्रलंबंबली
लयाहरिः॥१॥कृत्वानृत्यंफणाग्रेषुकालियस्यस्वकौतुकम्॥बलंप्रलंबतुंगांऽसमारोहयदरातिहा॥२॥१॥गोपालच्छद्ममाययागोपालनमेवछद्म
यस्यांतयामायया॥२॥३॥वसंतसाम्यमाहचतुर्भिःयत्रग्रीष्मेऽपिनिर्झराणांनिर्ह्रादेनघोषेणनिवृत्तस्वनाःप्रच्छन्नध्वनयोझिल्लिकाःकठोरध्वनिस्

ततउत्थायसंभ्रांतादह्यमानाव्रजौकसः।कृष्णंययुस्तेशरणंमायामानुषमीश्वरम्॥२२॥कृष्णकृष्णमहाभागहेरामामित
विक्रम।एषघोरतमोवन्हिस्तावकान्ग्रसतेहिनः॥२३॥सुदुस्तरान्नःस्वान्याहिकालाग्नेःसुहृदःप्रभो।नशक्नुमस्त्वच्चरणं
संत्यक्तुमकुतोभयम्॥२४॥इत्थंस्वजनवैक्लव्यंनिरीक्ष्यजगदीश्वरः।तमग्निमपिबत्तीव्रमनन्तोऽनंतशक्तिधृक्॥२५॥इ
तिश्रीभागवतेमहापुराणेदशमस्कन्धेकालियदमनोनामसप्तदशोऽध्यायः॥१७॥श्रीशुकउवाच॥अथकृष्णःपरिवृतो
ज्ञातिभिर्मुदितात्मभिः।अनुगीयमानोन्यविशद्व्रजंगोकुलमण्डितम्॥१॥व्रजेविक्रीडतोरेवंगोपालच्छद्ममायया।ग्री
ष्मोनामर्तुरभवन्नातिप्रेयाञ्छरीरिणाम्॥२॥सचवृन्दावनगुणैर्वसन्तइवलक्षितः।यत्रास्तेभगवान्साक्षाद्रामेणसह
केशवः॥३॥यत्रनिर्झरनिर्ह्रादनिवृत्तस्वनझिल्लिकम्।शश्वत्तच्छीकरर्जीषद्रुममंडलमण्डितम्॥४॥सरित्सरःप्रस्रव
णोर्मिवायुनाकल्हारकंजोत्पलरेणुहारिणा।नविद्यतेयत्रवनौकसांदवोनिदाघवन्ह्यर्कभवोऽतिशाद्वले॥५॥अगाधतो
यह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याःपुलिनैःसमंततः।नयत्रचंडांशुकराविषोल्बणाभुवोरसंशाद्वलितंचगृह्णते॥६॥वनं
कुसुमितंश्रीमन्नदच्चित्रमृगद्विजम्।गायन्मयूरभ्रमरंकूजत्कोकिलसारसम्॥७॥

ःस्तस्मात्कीटायस्मिंस्तथाभूतंवृंदावनंभवतिकिं
चशश्वततेषांनिर्झराणांशीकरैरंबुकणैःऋजीषाःस्निग्धायेद्रुमास्तेषांमंडलैर्मण्डितम्॥४॥यत्रग्रीष्मेवनेवानिदाघोग्रीष्मःतेनतत्कालीनवन्ह्यर्को
र्भ्यांसभवतियोदवस्तापःअतिशाद्वलेअतिहरिततृणाकीर्णेयद्वाअतिक्रान्तशाद्वलेऽपिस्थाने॥५॥ननुशाद्वलमेवकुतस्त्यंतत्राहअगाधेतिअगाधा
नितोयानियासांतासांह्रदिनीनांतटस्पर्शिभिरूर्मिभिःपुलिनैःसहद्रवत्पुरीषंपंकोयस्यास्तस्याभुवःरसंशाद्वलितंशाद्वलरूपतांचविषवदुल्बणाअपि
सूर्यरश्मयोनगृण्हतेनहरंति॥६॥तद्वनमविशदित्युत्तरेणान्वयःनदंतःचित्रामृगद्विजाश्चयस्मिन्गायन्तोमयूराभ्रमराश्चयस्मिन्कूजंतःकोकिलाःसा

॥८॥९॥१०॥११॥काकपक्षाःचूडाकरणात्प्राक्तनकेशाःभ्रमणादिप्रकारैर्नियुद्धेनबाहुयुद्धेनविक्रीडतुः॥१२॥१३॥कुंभैःकुंभवृक्षफलैःअस्पृश्यत्वंनेत्र
बन्धश्चतदाद्यैर्मृगाणांखगानांचचेष्टया॥१४॥दर्दुरप्लावैःमण्डूकप्लुतिभिःसंदोलिकयादोलालम्बनेननृपाणामिवलीलया॥१५॥नद्यःअद्रिद्रोण्यःकु



क्रीडिष्यमाणस्तत्कृष्णोभगवान्बलसंयुतः।वेणुंविरणयन्गोपैर्गोधनैःसंवृतोऽविशत्॥८॥प्रवालबर्हस्तबकस्रग्धातुकृ
तभूषणाः।रामकृष्णादयोगोपाननृतुर्युयुधुर्जगुः॥९॥कृष्णस्यनृत्यतःकेचिज्जगुःकेचिदवादयन्।वेणुपाणितलैःशृङ्गैः
प्रशशंसुरथापरे॥१०॥गोपजातिप्रतिच्छन्नादेवागोपालरूपिणः।ईडिरेकृष्णरामौचनटाइवनटंनृप॥११॥भ्रामणैर्लं
घनैःक्षेपैरास्फोटनविकर्षणैः।चिक्रीडतुर्नियुद्धेनकाकपक्षधरौक्वचित्॥१२॥क्वचिन्नृत्यत्सुचान्येषुगायकौवादकौस्वय
म्।शशंसतुर्महाराजसाधुसाध्वितिवादिनौ॥१३॥क्वचिद्बिल्वैःक्वचित्कुम्भैःक्वचामलकमुष्टिभिः।अस्पृश्यनेत्रबंधाद्यैः
क्वचिन्मृगखगेहया॥१४॥क्वचिच्चदर्दुरप्लावैर्विविधैरुपहासकैः।कदाचित्स्पंदोलिकयाकर्हिचिन्नृपचेष्टया॥१५॥एवन्तौ
लोकसिद्धाभिःक्रीडाभिश्चेरतुर्वने।नद्यद्रिद्रोणिकुञ्जेषुकाननेषुसरस्सुच॥१६॥पशूंश्चारयतोर्गोपैस्तद्वनेरामकृष्णयोः॥
गोपरूपीप्रलंबोगादसुरस्तज्जिहीर्षया॥१७॥तंविद्वानपिदाशार्होभगवान्सर्वदर्शनः।अन्वमोदततत्सख्यंवधंतस्यवि
चिन्तयन्॥१८॥तत्रोपहूयगोपालान्कृष्णःप्राहविहारवित्।हेगोपाविहरिष्यामोद्वन्द्वीभूययथायथम्॥१९॥तत्र
चक्रुःपरिवृढौगोपारामजनार्दनौ॥कृष्णसंघट्टिनःकेचिदासन्रामस्यचापरे॥२०॥आचेरुर्विविधाःक्रीडावाह्यवा
हकलक्षणाः।यत्रारोहंतिजेतारोवहन्तिचपराजिताः॥२१॥वहंतोवाह्यमानाश्चचारयंतश्चगोधनम्॥भांडीरकंना
मवटंजग्मुःकृष्णपुरोगमाः॥२२॥रामसंघट्टिनोयर्हिश्रीदामवृषभादयः।क्रीडायांजयिनस्तांस्तानूहुःकृष्णादयोनृप
॥२३॥उवाहकृष्णोभगवान्श्रीदामानंपराजितः।वृषभंभद्रसेनस्तुप्रलंबोरोहिणीसुतम्॥१४॥अविषह्यंमन्यमानः
कृष्णंदानवपुंगवः।वहन्द्रुततरंप्रागादवरोहणतःपरम्॥२५॥ १ज्ञानिचएतेषु॥१६॥चारयतोःसतोस्तद्वनेतस्मिन्वनेतयो

जिहीर्षया॥१७॥१८॥यथायथंवयोबलाद्यनुरूपंद्वन्द्वीभूय॥१९॥परिवृढौनायकौतत्रकेचनकृष्णसंघट्टिनःकृष्णपक्षीयाः॥२०॥२१॥
वाह्यमानाःपृष्ठेनोह्यमानाः॥२२॥२३॥२४॥कृष्णात् [illegible] ॥२५॥

धरणिधरेन्द्रवद्गौरवंयस्यतंनिजंआसुरंवपुरास्थितःपुरटपरिच्छदःसुवर्णालंकारःतडितद्युमान्विद्युद्दीप्तिमानित्यलंकारोपमाउडुपतिवा
डितिरामोपमाउडुपतिंवहतीत्युडुपतिवाट्यदिव्योऽपिसस्थानेसुस्थितोविद्युतोमध्यतोउपरिचोडुपतिस्तदासौऽम्बुदोयथाभातितद्वद्भावित्यर्थः
॥२६॥अलमतिवेगेनप्रदीप्ते दृशौयस्मिन्वपुषितत्भ्रुकुटितटेसंलग्नाउग्रादंष्ट्रायस्मिन्तत्प्रदीप्तदृक्भ्रुकुटितटंयस्मिन्उग्रादंष्ट्रायस्मिन्त
च्चतच्चेतिवाज्वलंत्यःशिखाःकेशायस्मिन्तत्॥२७॥आगतस्मृतिरभयइवआत्मनःसार्थङ्गोपसमूहंविहायहरंतंरिपुंअहनत्यद्वाविहायसाआ

तमुद्वहन्धरणिधरेन्द्रगौरवंमहासुरोविगतरयोनिजंवपुः।सआस्थितःपुरटपरिच्छदोबभौतडिद्द्युमानुडुपतिवाडि
वांबुदः॥२६॥निरीक्ष्यतद्वपुरलमंबरेचरत्प्रदीप्तदृग्भ्रुकुटितटोग्रदंष्ट्रकम्।ज्वलच्छिखंकटककिरीटकुंडललि
षाद्भुतंहलधरईषदत्रसत्॥२७॥अथागतस्मृतिरभयोरिपुंबलोविहायसार्थमिवहरंतमात्मनः।रुषाऽहनच्छिर
सिदृढेनमुष्टिनासुराधिपोगिरिमिववज्ररंहसा॥२८॥सआहतःसपदिविशीर्णमस्तकोमुखाद्वमन्रुधिरमपस्मृतोऽ
सुरः।महारवंव्यसुरपतत्समीरयन्गिरिर्यथामघवतआयुधाहतः॥२९॥दृष्ट्वाप्रलंबंनिहतंबलेनबलशालिना।गो
पाःसुविस्मिताआसन्साधुसाध्वितिवादिनः॥३०॥आशिषोऽभिगृणंतस्तंप्रशशंसुस्तदर्हणम्।प्रेत्यागतमिवालिंग्यप्रे
मविह्वलचेतसः॥३१॥पापेप्रलंबेनिहतेदेवाःपरमनिर्वृताः।अभ्यवर्षन्बलंमाल्यैःशशंसुःसाधुसाध्विति॥३२॥इति
श्रीभागवतेमहापुराणेदशमस्कन्धेप्रलंबवधोनामाऽष्टादशोऽध्यायः॥१८॥श्रीशुकउवाच॥क्रीडासक्तेषुगोपेषुतद्गा
वोदूरचारिणीः।स्वैरंचरन्त्योविविशुस्तृणलोभेनगह्वरम्॥१॥अजागावोमहिष्यश्चनिर्विशन्त्योवनाद्वनम्।इषीकाटवींवि
विशुःक्रंदंत्योदावतर्षिताः॥२॥तेऽपश्यन्तःपशून्गोपाःकृष्णरामादयस्तदा।जातानुतापानविदुर्विचिन्वन्तोगवांगतिम्॥३॥

१ काद्यमार्गेणआत्मनःप्राप्तंअर्थमिवहरन्तमितिवज्ररंहसावज्रवेगेनमुष्टिना॥२८॥अपस्मृतःगतस्मृतिःमहारवंसमीरयन्नुरथ
॥३०॥तदर्हणंप्रशंसार्हम्॥३१॥३२॥इतिदशमेष्टादशोऽध्यायः॥१८॥ऊनविंशेनिविष्टेतुगोपगोकुलमच्युतः।मुंजारण्यमरण्याग्नेरस्मतन्निपान
तः॥१॥दूरचारिणीःदूरचारिण्यः॥।वनाद्वनांतरंनिर्विशन्त्योदावेनतर्षिताःतृषिताःक्रंदंत्यःइषीकाटवींअसुच्छिन्नतघनतृणविशेषारण्यंनिर्विविशुः।कृष्ण



T

तासां गवां खुरैर्द्विच्छिन्नैः तृणैर्गोष्पदैरङ्कितेष्वभूप्रदेशेषु तृणैर्वा गवां मार्गमन्वगमन् नष्टाजीव्या गतजीविकासाधनाः॥४॥मुञ्जाटव्यपि सैव दृष्टीकाऽटवी॥५॥६॥गोपानां नाशहेतुर्वनवह्निः सर्वतः प्रादुरभूत् सारथिना वायुना॥७॥८॥९॥१०॥११॥कृच्छ्रात् गह्वरप्रवेशसुतदुःश्रमादिजनितात्॥१२॥क्षणेनैव भांडीरं प्रापिताः ततः अक्षीण्युन्मील्य विस्मिताः॥१३॥१४॥१५॥१६॥श्रीदामादिस्वगोपानां साङ्गमारुह्याहृष्यता। सैन्यमाविर



तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरङ्कितैर्गवाम्।मार्गमन्वगमन्सर्वे नष्टाजीव्या विचेतसः॥४॥मुञ्जाटव्यां भ्रष्टमार्गं क्रन्दमानं स्वगोधनम्।संप्राप्य तृषिताः श्रान्तास्ततस्ते संन्यवर्तयन्॥५॥ता आहूता भगवता मेघगंभीरया गिरा।स्वनाम्नां निनदं श्रुत्वा प्रतिनेदुः प्रहर्षिताः॥६॥ततः समन्ताद्वनधूमकेतुर्यदृच्छयाऽभूत्क्षयकृद्वनौकसाम्।समीरितः सारथिनोल्बणोल्मुकैर्विलेलिहानः स्थिरजंगमान्महान्॥७॥तमापतन्तं परितो दवाग्निं गोपाश्च गावः प्रसमीक्ष्य भीताः।ऊचुश्च कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः॥८॥कृष्ण कृष्ण महावीर्य हे रामामितविक्रम।दावाग्निना दह्यमानान्प्रपन्नांस्त्रातुमर्हथः॥९॥नूनं त्वद्बान्धवाः कृष्ण न चार्हन्त्यवसीदितुम्।वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः॥१०॥श्रीशुक उवाच॥वचो निशम्य कृपणं गोपानां भगवान्हरिः।निमीलयत माभैष्ट लोचनानीत्यभाषत॥११॥तथेति मीलिताक्षेषु भगवानग्निमुल्बणम्।पीत्वा मुखेन तान्कृच्छ्राद्योगाधीशो व्यमोचयत्॥१२॥ततश्च तेऽक्षीण्युन्मील्य पुनर्भाण्डीरमापिताः॥निशम्य विस्मिता आसन्नात्मानं गाश्च मोचिताः॥१३॥कृष्णस्य योगवीर्यं तद्योगमायानुभावितम्॥दावाग्नेरात्मनः क्षेमं वीक्ष्य ते मेनिरेऽमरम्॥१४॥गाः सन्निवर्त्य सायाह्ने सहरामो जनार्दनः।वेणुं विरणयन्गोष्ठमगाद्गोपैरभिष्टुतः॥१५॥गोपीनां परमानंद आसीद्गोविन्ददर्शने।क्षणं युगशतमिव यासां येन विनाऽभवत्॥१६॥इति श्रीभागवते महापुराणे दशमस्कन्धे दावाग्निपानं नामैकोनविंशोऽध्यायः॥१९॥श्रीशुक उवाच॥तयोस्तदद्भुतं कर्म दावाग्नेर्मोक्षमात्मनः।गोपाः स्त्रीभ्यः समाचख्युः प्रलंबवधमेव च॥१॥ ॥ ॥ ॥ ॥

करोद्वनवह्निनिपानतः॥१॥ इति दशमे टीकायामेकोनविंशोऽध्यायः॥१९॥ विंशे प्रावृट् शरच्छोभावर्णनेन वनोचिताः।प्रावृट्क्रीड

॥२॥तत्र प्रावृड्वर्णनं ततआदिह्य विंशत्या सर्वेषां प्राणिनां समुद्भव उत्पत्तिर्जीवनं तस्य यस्यां सा प्रावृट् विद्योतमानाः परिधयः परिवेषा दिशो वा यस्यां सा विस्फूर्जितं संक्षुभितं नभस्तलं यस्यां सा॥३॥सांद्रैर्निबिडैर्नीलाम्बुदैर्विद्युद्गर्जितसहितैराच्छन्नं संगुणं गुणैराच्छन्नं जीवाख्यं विद्युद्गर्जितां बुदानां सत्वरजस्तमोभिरुपमा॥४॥पर्जन्यः सूर्यः स्वगोभिः रश्मिभिः कालेयथोचितसमये अन्नराजोपमा करादानतः समये पुनर्दानतश्च सूचिता॥ ॥५॥अस्य विश्वस्य प्रीणनं आप्यायनकरं जीवनमुदकं मुमुचुः कृपालवो यथा तत्प्रजननं निरीक्ष्यानुकंपमानाः तदाप्यायनाय स्वजीवनमपि त्यजंति तद्वन्म हांतो मेघास्तडित्वन्तो विश्वं तप्तं निरीक्ष्य वायुभिर्वेपिताः संतो जीवनं मुमुचुरिति॥६॥तपसा ग्रीष्मेण कृशा देवमीढा पर्जन्यसिक्ता वर्षीयसी उच्छूनापुष्टाका

गोपवृद्धाश्च गोप्यश्च तदुपाकर्ण्य विस्मिताः। मेनिरे देवप्रवरौ कृष्णरामौ व्रजं गतौ॥१॥ततः प्रावर्तत प्रावृट् सर्वस त्वसमुद्भवा। विद्योतमानपरिधिर्विस्फूर्जितनभस्तला॥२॥सांद्रनीलांबुदैर्व्योम सविद्युत्स्तनयित्नुभिः। अस्पष्टज्योतिरा च्छन्नं ब्रह्मेव सगुणं बभौ॥३॥अष्टौ मासान्निपीतं यद्भूम्याश्चोदमयं वसु। स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते॥४॥ तडित्वन्तो महामेघाश्चंडश्वसनवेपिताः। प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव॥५॥तपःकृशा देवमीढा आसीद्वर्षी यसी मही। यथैव काम्यतपसस्तनुः संप्राप्य तत्फलम्॥६॥निशामुखेषु खद्योतास्तमसा भांति न ग्रहाः। यथा पापेन पाख ण्डा न हि वेदाः कलौ युगे॥७॥श्रुत्वा पर्जन्यनिनदं मंडूकाव्यसृजन्गिरः। तूष्णीं शयानाः प्राग्यद्वद्ब्राह्मणा नियमात्यये॥८॥ आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः। पुंसो यथाऽस्वतंत्रस्य देहद्रविणसंपदः॥९॥हरिता हरिभिः शष्पैरिंद्रगोपै श्च लोहिता। उच्छिलींध्रकृतच्छाया नृणां श्रीरिव भूरभूत्॥१०॥क्षेत्राणि सस्यसंपद्भिः कर्षकाणां मुदं ददुः। धनिनामुपतापं च दैवाधीनमजानताम्॥११॥जलस्थलौकसः सर्वे नववारिनिषेवया। अबिभ्रद्रुचिरं रूपं यथा हरिनिषेवया॥१२॥

९सं तपो य

स्य तस्य तनुः कामान् संप्राप्य यथेति॥७॥८॥नित्यकर्मावसाने आचार्यनिनदं श्रुत्वा तच्छिष्याः यथा अधीयन्ते तद्वदिति॥९॥ अनुशुष्यतीः अनुशुष्यंत्यः अस्वतंत्रस्य इंद्रियपरतंत्रस्य स्वतंत्रस्य निरंकुशस्येति वा॥१०॥हरिभिर्नीलैः शष्पैर्बालतृणैर्नीलवर्णा क्वचिदिंद्रगोपैः कीटविशेषैः लोहिता तत्र तत्र उ च्छिलींध्रैः छत्राकारैः उद्भिदैः कृतच्छाया नृणां राज्ञां श्रीः सेनासंपदिव॥११॥क्षेत्राणीति तदा हि वृष्टेरविच्छेदे ल संतः प्रियंवदा ये मुदं ददति विच्छेदे शु ष्यन्तोऽनुतापं चेति॥१२॥अबिभ्रत् अबिभरुः यथा हरिनिषेवयेति हरिसेवायां प्रवृत्ता हि सद्य एव सर्वे रुचिरा भवंति तस्याः परमधर्मत्वात् परमसुखत्वाच्च

T

कामात्तं कामवासनायुक्तमितिश्वसनोर्मिसाम्यं गुणैर्विषयैर्युज्यत इति सरित्संगतिसाम्यम्॥१४॥ अधोक्षज एव चेतो येषां ते॥१५॥ असंस्कृता अक्षुण्णाः नाभ्यस्यमाना इत्यसंस्कृतसाम्यं कालेन चाहता इति तृणाच्छादनसाम्यम्॥१६॥ यथा कामिन्यः पुंश्चल्यः॥१७॥ निर्गुणं ज्यारहितमपि गुणिनि राजित शक्रधनुः अभात् अशोभत गुणव्यतिकरात्मके व्यक्ते प्रपंचे अगुणवान् निर्गुणः पुरुषो यथेति॥१८॥ स्वभासा भासितया अहंमत्येति स्वचैतन्येनैव प्रकाशितेनाहंकारेण छन्नो जीवो यथा यद्वा अहं विद्वान् दाता वेत्ता शूर इति स्वप्रतीत्यैवारोपितया इति॥१९॥ मेघागमेनोत्सवो येषां अतो हृष्टाः

सरिद्भिः संगतः सिंधुश्चुक्षुभे श्वसनोर्मिमान्। अपक्वयोगिनश्चित्तं कामात्तं गुणयुग्यथा॥१४॥ गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः। अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः॥१५॥ मार्गा बभूवुः सन्दिग्धास्तृणैश्छन्ना ह्यसंस्कृताः। नाभ्यस्यमानाः श्रुतयो द्विजैः कालहता इव॥१६॥ लोकबंधुषु मेघेषु विद्युतश्चलसौहृदाः। स्थैर्यं न चक्रुः कामिन्यः पुरुषेषु गुणिष्विव॥१७॥ धनुर्वियति माहेन्द्रं निर्गुणं च गुणिन्यभात्। व्यक्ते गुणव्यतिकरेऽगुणवान्पुरुषो यथा॥१८॥ न रराजोडुपश्छन्नः स्वज्योत्स्ना राजितैर्घनैः। अहंमत्या भासितया स्वभासा पुरुषो यथा॥१९॥ मेघागमोत्सवा हृष्टाः प्रत्यनन्दन् शिखंडिनः। गृहेषु तप्ता निर्विण्णा यथाऽच्युतजनागमे॥२०॥ पीत्वापः पादपाः पद्भिरासन्नानात्ममूर्तयः। प्राक्क्षामास्तपसा श्रान्ता यथा कामानुसेवया॥२१॥ सरःस्वशांतरोधःसु न्यूषुरंगापि सारसाः। गृहेष्वशांतकृत्येषु ग्राम्या इव दुराशयाः॥२२॥ जलौघैर्निरभिद्यंत सेतवो वर्षतीश्वरे। पाखंडिनामसद्वादैर्वेदमार्गाः कलौ यथा॥२३॥ व्यमुंचन्वायुभिर्नुन्ना भूतेभ्योऽथामृतं घनाः। यथाशिषो विश्पतयः काले काले द्विजेरिताः॥२४॥ एवं वनं तद्वर्षिष्ठं पक्वखर्जूरजंबुमत्। गोगोपालैर्वृतो रंतुं सबलः प्राविशद्धरिः॥२५॥ धेनवो मंदगामिन्य ऊधोभारेण भूयसा। ययुर्भगवताहूता द्रुतं प्रीत्या स्नुतस्तनीः॥२६॥

॥२०॥ नानात्ममूर्तयः अनेकरूपदेहाः॥२१॥ अशांतानि पंककंटकादियुक्तानि रोधांसि तटानि येषां तेष्वपि न्यूषुः नितरामवसन् सारसाः चक्रवाकाः अशांतानि घोराणि अनुपरतानि वा कृत्यानि येषु तेष्वपि गृहेषु॥२२॥ ईश्वरे इंद्रे॥२३॥ नुन्नाः प्रेरिताः आशिषः कामान् विश्पतयो रा[illegible]॥२४॥ प्राव[illegible] वर्षयति एवं वनमिति [illegible] वर्षिष्ठं सम[illegible]॥ २५॥ २६॥



वनौकसः पुलिंदीः प्रमुदिताः भगवान्[illegible]

वनौकसः पुलिंदीः प्रमुदिताः भगवान्ददृशे तथा वनराजीर्मधुच्युतः मधुस्रवाः ददृशे गिरेः सकाशाज्जलधाराश्च तासां नादान् आसन्नानि कटवर्ति नीर्गुहाश्च यद्वा वनौकसः प्रमुदिता आसन्

... मधुच्युत आसन् गिरेर्जलधारा आसन् तानेवंभूतान् आददृशे सर्वतो ददर्श तथा भगवान् धाराणां नादान् गुहाश्चेति ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ शरदं वर्णयति एवं निवसतोरित्यष्टादशभिः विगतानि अभ्राणि यस्यां सा स्वच्छानि अंबूनि यस्यां सा अपरुषः शांतोऽनिलो यस्यां सा च सा च ॥ ३२ ॥ नीरजानां उत्पत्तिर्यया तया शरदा कुलानीरजानामुत्पत्त्या वा ॥ ३३ ॥ व्योम्नइति व्योमादीनां चतुर्णां चतुरो मलान् शरदहरत् आश्रमिणां चतुर्णां कृष्णे जाता भक्तिर्यथाऽशुभमसुखं हरति तथा हि ब्रह्मचारिणो गुर्वर्थोदकाहरणश्रमं य

वनौकसः प्रमुदिता वनराजीर्मधुच्युतः । जलधारा गिरेर्नादानाऽऽसन्ना ददृशे गुहाः ॥ २७ ॥ क्वचिद्वनस्पतिक्रोडे गुहायां चाभिवर्षति । निर्विश्य भगवान् रेमे कंदमूलफलाशनः ॥ २८ ॥ दध्योदनं समानीतं शिलायां सलिलांतिके । संभोजनीयैर्बुभुजे गोपैः संकर्षणान्वितः ॥ २९ ॥ शाद्वलोपरि संविश्य चर्वतो मीलितेक्षणान् । तृप्तान्वृषान्वत्सतरान्गाश्च स्वोधोभरश्रमाः ॥ ३० ॥ प्रावृट्श्रियं च तां वीक्ष्य सर्वभूतमुदावहाम् । भगवान्पूजयांचक्रे आत्मशक्त्युपबृंहिताम् ॥ ३१ ॥ एवं निवसतोस्तस्मिन् रामकेशवयोर्व्रजे । शरत्समभवद्व्यभ्रा स्वच्छांब्वपरुषानिला ॥ शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः । भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया ॥ ३३ ॥ व्योम्नोऽब्दं भूतशाबल्यं भुवः पंकमपां मलम् । शरज्जहाराश्रमिणां कृष्णे भक्तिर्यथाऽशुभम् ॥ ३४ ॥ सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः । यथा त्यक्तैषणाः शान्ता मुनयो मुक्तकिल्बिषाः ॥ ३५ ॥ गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम् । यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा ॥ ३६ ॥ नैवाविदन्क्षीयमाणं जलं गाधजलेचराः । यथाऽऽयुरन्वहं क्षय्यं नरा मूढाः कुटुंबिनः ॥ ३७ ॥

१ या भक्तिर्हरति तथा पूर्णस्य तेनाद्युपयोगात् गुरुभिरपितस्य कृतार्थस्यानियोगात् एवं व्योम्नोऽब्दं शरज्जहार यथा च गृहिणोऽपत्यादिसांकर्यं भक्तिर्हरति विविक्तवासरुच्युत्पत्तेः तथाभूतानां शाबल्यं सांकर्यं शरत् वर्षासु दृष्टिभियासंकुलानि वसं तिर्यथा च वनस्थस्य मलधारणक्लेशं भक्तिर्हरति एवं भुवः पंकं शरत् यथा च यतीनां कामादिवासनामलं श्रीकृष्णभक्तिर्हरति एवमपां मलं शरदिति ॥ ३४ ॥ त्यक्तैषणाः त्यक्ताः पुत्रवित्तलोकैषणा यैस्ते ॥ ३५ ॥ गिरयइति अयं भावः नह्युपाध्यायाः कर्मविद्यामिव ज्ञानिनो ज्ञानामृतम् सर्वतो वितरंति अपि तु रूपया क्वचिदेव एवं गिरयः शिवं निर्मलं तोयं क्वचित् क्वचित् मुमुचुः क्वचित्क्वचिन्न न पुनः प्रावृषीव सर्वत इति ॥ ३६ ॥ गाधे स्वल्पे जले चरंतीति तथा

॥३८॥ शनैः शनैरिति तत्र ममतामिव पंकम् अहन्तामिव आमताम् अपक्वताञ्जहुरिति॥३९॥ आत्मन्युपरते त्यक्तक्रियो मुनिरिव निश्चलांबुः स एव व्युपरतागमः निवृत्तवेदघोष इव तूष्णीमभूदिति॥४०॥ केदारेभ्यो बद्धशालिक्षेत्रेभ्यो दृढैः सेतुभिरपोऽगृह्णन् ततः परं वृष्ट्यभावात् प्राणैरिन्द्रियैस्तन्निरोधेन इन्द्रियप्रत्याहारेण॥४१॥ देहाभिमानजं बोध इव व्रजयोषितां मुकुन्द इव चेत्यर्थः॥४२॥ शरदा विमलतारका यस्मिन् तत् शब्दब्रह्मणो वेदस्यार्थान् पूर्वोत्तरमीमांसानिर्णीतान् दर्शयतीति तथा तद्वत्॥४३॥४४॥ समः अन्यूनाधिकः शीतश्चोष्णश्च तं न तु गोप्यः कृष्णापहृतचेतस्त्वेन तासां संतापो दुःसह इति यद्वा नकार उपमार्थः तदा कृष्णहृतचेतस इति चेतसा कृष्णमाश्लिष्य यथेत्यर्थः॥४५॥ पुष्पिण्यो गर्भिण्यः अन्वीयमानाः स्ववृषैः स्वपतिभिर्

गाधवारिचरास्तापमविन्दन्शरदर्कजम्। यथा दरिद्रः कृपणः कुटुंब्यविजितेन्द्रियः॥३८॥ शनैः शनैर्जहुः पंकं स्थलान्यामं च वीरुधः। यथाऽहंममतां धीराः शरीरादिष्वनात्मसु॥३९॥ निश्चलांबुरभूत्तूष्णीं समुद्रः शरदागमे। आत्मन्युपरते सम्यक् मुनिर्व्युपरतागमः॥४०॥ केदारेभ्यस्त्वपोऽगृह्णन्कर्षका दृढसेतुभिः। यथा प्राणैः स्रवज्ज्ञानं तन्निरोधेन योगिनः॥४१॥ शरदर्कांशुजांस्तापान्भूतानामुडुपोऽहरत्। देहाभिमानजं बोधो मुकुन्दो व्रजयोषिताम्॥४२॥ खमशोभत निर्मेघं शरद्विमलतारकम्। सत्वयुक्तं यथा चित्तं शब्दब्रह्मार्थदर्शनम्॥४३॥ अखंडमण्डलो व्योम्नि रराजोडुगणैः शशी। यथा यदुपतिः कृष्णो वृष्णिचक्रावृतो भुवि॥४४॥ आश्लिष्य समशीतोष्णं प्रसूनवनमारुतम्। जनास्तापं जहुर्गोप्यो न कृष्णहृतचेतसः॥४५॥ गावो मृगाः खगा नार्यः पुष्पिण्यः शरदाऽभवन्। अन्वीयमानाः स्ववृषैः फलैरीशक्रिया इव॥४६॥ उदहृष्यन्वारिजानि सूर्योत्थाने कुमुद्विना। राज्ञा तु निर्भया लोका यथा दस्यून्विना नृप॥४७॥ पुरग्रामेष्वाग्रयणैरिन्द्रियैश्च महोत्सवैः। बभौ भूः पक्वसस्याढ्या कलाभ्यां नितरां हरेः॥४८॥ वणिङ्मुनिनृपस्नाता निर्गम्यार्थान्प्रपेदिरे। वर्षरुद्धा यथा सिद्धाः स्वपिंडान्काल आगते॥४९॥

१ निच्छन्त्योऽपि बलादनुगम्यमाना ईश्वराराधनार्थाः क्रियाः बलात् फलैरनुगम्यमानाः समस्तभोगगर्भा यथेति॥४६॥ कुमुत् कुमुदं कं सितामृतं यस्य इति दस्युसाम्यम्॥४७॥ आग्रयणैर्नवान्नप्राशनार्थैर्वैदिकैर्यागैरिन्द्रियैरिन्द्रियार्थैर्लौकिकैश्च महोत्सवैः कलाभ्यां रामकृष्णाभ्यां दर्शनादिमहोत्सवाभ्याम्॥४८॥ वणिजो यतयो नृपाः स्नातकाश्च दृष्टादृष्टाभ्यां वर्षरुद्धाः सन्तो निर्गम्यार्थान् वाणिज्यस्वाध्ययदिग्विजयविद्यादीन्प्रपेदिरे प्रापुः यथा मंत्रयोगादिसिद्धाः आयुषा रुद्धाः काले आगते स्वपिंडान् योगादिप्राप्यान् देवादिदेहानिति॥४९॥

॥इतिदशमेविंशोऽध्यायः॥२०॥एकविंशेशरद्रम्यवृंदावनगतेहरौ॥तद्वेणुरवनमाकर्ण्यगोपीभिर्गीतमीर्यते॥१॥इत्थमेवंभूतंवनमतद्देवाह शरदास्वच्छानिजलानियस्मिन्ततवायुनावातम् अनुगतमूर्ध्वाश्रमित्यर्थः॥१॥ततश्चकुसुमितवनराजिषुशुष्मिणोमत्ताःभृंगाःद्विजाःखगाश्चतेषांकु लानितैर्घुष्टाःसरांसिसरितःमहीध्राश्चयस्मिन्तद्वनंकृष्णोऽवगाह्यप्रविश्यवेणुमवादयत्॥२॥तत्कृष्णस्यवेणुगीतंस्मरस्यउदयोयस्मात्तत् आश्रुत्य श्रुत्वापरोक्षंयथाभवतितथा॥३॥व्रजेस्थितत्वात्विक्षिप्तमनसःव्याकुलचित्ताः॥४॥यादृशंकृष्णस्मरणंतासांमनसःक्षोभकंजातंतदाहबर्हापीडमिति नटवत्वरंवपुर्बिभ्रत्वृन्दावनंप्राविशत्कथंभूतंवनम्स्वपदैरंकितैःरमणंरतिजनकंगोपवृन्दैर्गीतकीर्तिःतथाबर्हमयमापीडंशिरोभूषणंबिभ्रत्

इतिश्रीभागवतेमहापुराणेदशमस्कन्धेशरद्वर्णनन्नामविंशतितमोऽध्यायः॥२०॥ श्रीशुकउवाच॥ इत्थंशरत्स्वच्छ जलंपद्माकरसुगंधिना।न्यविशद्वायुनावातंसगोगोपालकोऽच्युतः॥१॥कुसुमितवनराजिशुष्मिभृंगद्विजकुलघुष्टस रःसरिन्महीध्रम्।मधुपतिरवगाह्यचारयन्गाःसहपशुपालबलश्चुकूजवेणुम्॥२॥तद्व्रजस्त्रियआश्रुत्यवेणुगीतंस्मरो दयम्।काश्चित्परोक्षंकृष्णस्यस्वसखीभ्योऽन्ववर्णयन्॥३॥तद्वर्णयितुमारब्धाःस्मरन्त्यःकृष्णचेष्टितम्।नाशकन्स्मरवे गेनविक्षिप्तमनसोनृप॥४॥बर्हापीडंनटवरवपुःकर्णयोःकर्णिकारंबिभ्रद्वासःकनककपिशंवैजयंतींचमालाम्।रन्ध्रान्वे णोरधरसुधयापूरयन्गोपवृन्दैर्वृन्दारण्यंस्वपदरमणंप्राविशद्गीतकीर्तिः॥५॥इतिवेणुरवंराजन्सर्वभूतमनोहरम्।श्रु त्वाव्रजस्त्रियःसर्वावर्णयन्त्योऽभिरेभिरे॥६॥गोप्यऊचुः॥ अक्षण्वतांफलमिदंनपरंविदामःसख्यःपशूननुविवेशय तोर्वयस्यैः।वक्त्रंव्रजेशसुतयोरनुवेणुजुष्टंयैर्वानिपीतमनुरक्तकटाक्षमोक्षम्॥७॥चूतप्रवालबर्हस्तबकोत्पला ब्जमालानुपृक्तपरिधानविचित्रवेषौ॥ ९ बर्हमापीडोयस्मिन्नितिवपुषोविशेषणंवावेणुवादनमुख्येसंतेरंध्रान्वेणोरिति अतोनूनंअधर सुधैवपूर्णाद्वेणोरुच्चलंतीगीतवत्प्रसर्पितुमर्हतीतिभावः॥५॥अभिरेभिरेवर्णयन्त्यःपदेपदेपरमानंदस्फूर्तिंश्रीकृष्णसंपरिरब्धवत्यः॥६॥अनुवर्णन मेवाहअक्षण्वतामितित्रयोदशभिःश्लोकैर्वदन्तिहेसख्यःअक्षण्वतांचक्षुष्मतांतावदिदमेवफलंप्रियदर्शनंपरमन्यन्नविदामःनविद्मइत्यर्थःतच्च फलंसखिभिःसहपशून्वनंप्रवेशयतोरामकृष्णयोर्वक्त्रंयैर्निपीतंतैरेवजुष्टंसेवितंनान्यैरित्यर्थःकथंभूतंवक्त्रंअनुवेणुवेणुमनुवर्तमानं तंवादयत्तथाअनुरक्तकटाक्षमोक्षंस्निग्धकटाक्षविसर्गंअथवायैर्निपीतंतयोर्वक्त्रंतैर्जुष्टंइदमेवाक्षण्वतामक्ष्णोःफलमिति॥७॥अन्या आहुःचूतेतिचूतप्रवालादीनांविचित्राभिर्मालाभिःअनुपृक्तेईषदंतरांतरलःसंयुक्तेपरिधानेनीलपीताम्बरेताभ्यांविचित्रोवेषोययो ॥

T

स्तौकचकदाचित् पशुपालगोष्ठ्यांगोपालसभायांमध्येअलंअत्यर्थंविरेजतुः अहोगोपानांपुण्यमितिभावः॥८॥अन्याऊचुः हेगोप्यः अयंवेणुःकिं स्मपुण्यमाचरत् कृतवान्कथंयद्यस्माद्गोपिकानामेवभोग्यांसतीमपिदामोदराधरसुधांस्वयंस्वातंत्र्येणयथेष्टंभुङ्क्ते कथम् अवशिष्टरसंकेवलंअव शिष्टंरसमात्रंयथाभवतियतः यासांह्रदिनीनांपयसापुष्टस्तामातृतुल्याह्रदिन्यः हृष्यत्त्वचः विकसितकमलवनमिषेणरोमांचितास्यन्तेयेषांवं शेजातस्तेतरवोमधुधारामिषेणआनंदाश्रुमुमुचुः यथाआर्य्याःकुलवृद्धाःस्ववंशेभगवत्सेवकंदृष्ट्वाहृष्यत्त्वचोऽश्रुमुञ्चन्तितद्वदिति॥९॥काश्चिदा हुःहेसखिवृन्दावनंभुवःकीर्तिंस्वर्गादपिविशेषेणवितनोतिकथंभूतंयद्देवकीसुतस्यपदाम्बुजाभ्यांलब्धालक्ष्मीःशोभासंपद्येनततःकिञ्चगोविन्द स्यवेणुमनुवेणुनिनादंश्रुत्वाऽनंतरंमंदगर्जितंनीलमेघंमत्वामत्तायेमयूरास्तेषांनृत्यंप्रेक्ष्यसंघशस्तत्रतत्रअद्रिसानुषुअपरतानिउपरतक्रिया

मध्येविरेजतुरलंपशुपालगोष्ठ्यांरंगेयथानटवरौक्वचगायमानौ॥८॥गोप्यःकिमाचरदयंकुशलंस्मवेणुर्दामोदराधरसु धामपिगोपिकानाम्।भुङ्क्तेस्वयंयदवशिष्टरसंह्रदिन्योहृष्यत्त्वचोऽश्रुमुमुचुस्तरवोयथार्य्याः॥९॥वृन्दावनंसखिभुवोवित नोतिकीर्तिंयद्देवकीसुतपदांबुजलब्धलक्ष्मि।गोविन्दवेणुमनुमत्तमयूरनृत्यंप्रेक्ष्याद्रिसान्वपरतान्यसमस्तसत्त्वम्॥१०॥ धन्याःस्ममूढमतयोपिहरिण्यएतायानंदनंदनमुपात्तविचित्रवेषम्।आकर्ण्यवेणुरणितंसहकृष्णसाराःपूजान्दधुर्विरचि तांप्रणयावलोकैः॥११॥कृष्णंनिरीक्ष्यवनितोत्सवरूपशीलंश्रुत्वाचतत्क्वणितवेणुविचित्रगीतम्।देव्योविमानगतयःस्मर नुन्नसाराभ्रश्यत्प्रसूनकबराममुहुर्विनीव्यः॥१२॥गावश्चकृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैःपिबन्त्यःशा वाःस्नुतस्तनपयःकवलाःस्मतस्थुर्गोविन्दमात्मनिदृशाऽश्रुकलाःस्पृशन्त्यः॥१३॥ (णिअन्यानिसमस्तानिसत्वानियस्मिन्ततस्तै

तदन्येषुलोकेषुविद्यतेअतोभुवःकीर्तिंवितनोतीत्यर्थः॥१०॥अपराआहुःहेसखिमूढमतयःतिर्य्यग्जातयोपिएताहरिण्योधन्याःकृतार्थाःयावेणु रणितंवेणुनादमाकर्ण्यनंदनंदनंप्रतिप्रणयसहितैरवलोकनैर्विरचितांपूजांसन्मानंदधुःकृतवत्यःकिञ्चकृष्णसारैःस्वपतिभिःसहिताएवद धुःअस्मत्पतयस्तुगोपाःसुद्रास्समक्षन्तन्नसहन्तइतिभावः॥११॥अन्याऊचुःहेगोप्यःआश्चर्य्यंशृणुतवनितानामुत्सवोयस्मात्तद्रूपंशीलंचयस्य तंश्रीकृष्णान्निरीक्ष्यतेनवादितवेणोःसंकीर्णगीतंचश्रुत्वाविमानैर्गच्छंत्योदेव्योदेवानामंकेषुस्थिताअपिस्मरेणनुन्नसाराःपरिक्षिप्तधैर्य्यामुहुः मोहंलिंगमाहः भ्रश्यत्प्रसूनाःकबराश्चूडायासांताःविगतानीव्योयासांताःअत्रसर्वेत्रवस्त्रभेदान्नावीवसंगतिर्वेचक्या॥१२॥स्मरणशंकयेवोत्तभितैः [illegible] कर्णपुटैःपिबंत्यःस्वयं [illegible] स्नुतस्तनपयःसमनंतरमेववेणुगीतंश्रुत्वासदेवपीयूषमुत्तभितकर्णपुटैःपिबंतःस्नुतस्तन

नेभ्यः स्रवितक्षीरग्रासाः मुखेषु येषां ते तस्थुः विस्मृतक्रिया बभूवुरित्यर्थः तत्र हेतुः गोविंदं दृशा मार्गेण आत्मनि मनसि स्पृशंत्यः आलिंगंत्यः अत एव अश्रूणां कलाः लेशाः लोचनयोर्यासां ताः गावस्ते च शावाः वत्साः ॥ १३ ॥ भो अंब मातः अस्मिन् वने ये विहगाः पक्षिणस्ते प्रायेण मुनयो भवितुमर्हंति कुतः कृष्णेक्षितं कृष्णदर्शनं पुष्पफलाद्यन्तरं विना यथा भवति तथा रुचिराः प्रवालाः येषां तान् द्रुमभुजान् वृक्षाणां शाखा आरुह्य तेन श्रीकृष्णेन उदितं प्रकटितं कलवेणुगीतं केनापि सुखेन निमीलितदृशः त्यक्तान्यवाचः संतः ये शृण्वन्तीति तथा हि मुनयः श्रीकृष्णदर्शनं यथा भवति तथा वेदोक्तकर्मफलपरित्यागेन वेदद्रुमशाखारूढाः रुचिरप्रवालस्थानीयानि कर्माण्येवोपाददानाः सुखिनः संतः श्रीकृष्णगीतमेव शृण्वंति अतस्त एवैते भवितुमर्हंतीति भावः ये भगवद्गीतं भागवतं शृण्वंति ते वासुदेवरूपा भवन्तीत्यर्थः ॥ १४ ॥ आस्तां चेतनानां कथा नद्योऽपि आवर्तैः परिभ्रमैः लक्षितेन सूचितेन मनोभवेन कामेन भग्नो वेगो यासां ताः आलिंगनेन स्थगितमाच्छादितं यथा भवति तथा ऊर्मय एव भुजास्तैः कमलोपहाराः कमलान्युपहरंत्यः मुरारेः पादयुगलं गृण्हंति

प्रायो बताम्ब विहगा मुनयो वनेऽस्मिन् कृष्णेक्षितं तदुदितं कलवेणुगीतम्। आरुह्य ये द्रुमभुजान् रुचिरप्रवालाञ्छृण्वन्ति मीलितदृशो विगतान्यवाचः ॥ १४ ॥ नद्यस्तदा तदुपधार्य मुकुन्दगीतमावर्तलक्षितमनोभवभग्नवेगाः। आलिङ्गनस्थगितमूर्मिभुजैर्मुरारेर्गृण्हन्ति पादयुगलं कमलोपहाराः ॥ १५ ॥ दृष्ट्वातपे व्रजपशून् सह रामगोपैः सञ्चारयन्तमनु वेणुमुदीरयन्तम्। प्रेमप्रवृद्ध उदितः कुसुमावलीभिः सख्युर्व्यधात्स्ववपुषाऽम्बुद आतपत्रम् ॥ १६ ॥ पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुंकुमेन दयितास्तनमंडितेन। तद्दर्शनस्मररुजस्तृणरूषितेन लिंपन्त्य आननकुचेषु जहुस्तदाधिम् ॥ १७ ॥ हन्तायमद्रिरबला हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः। मानं तनोति सहगोगणयोस्तयोर्यत्पानीयसूयवसकंदरकंदमूलैः ॥ १८ ॥ ...धारयंति ॥ १५ ॥ लोका

र्तिहरणशीलत्वादिसाम्यात्सख्युः श्रीकृष्णस्य अंबुदस्तदुपरि उदितः पुनः प्रेम्णा प्रवृद्धः सन् कुसुमावलीभिः पुष्पसमूहैस्तत्तुल्यैस्तुषारैर्वा सह स्ववपुषा छत्रं विहितवान् ॥ १६ ॥ साहंकारमाहुः पूर्णाः कृतार्थाः पुलिंद्यः शबरांगनाः कथमित्यत आहुः प्रथमं दयितानां स्तनेषु मंडितेन अनुलिप्तेन पुनः स्मरातिसमये उरुगायस्य श्रीकृष्णस्य पदाब्जयोः रागेण आरुण्येन श्रीः कांतिर्यस्य तेन कुंकुमेन पुनस्तस्य वनस्थलीषु चंक्रमणेन तृणेषु रूषितेन लग्नेन तद्दर्शनेन तथाभूतस्य कुंकुमस्य दर्शनेन स्मरकृता रुक् तापो यासां ताः तेन कुंकुमेन आननेषु कुचेषु च कामतप्तेषु लिंपंत्यः तदाधिं कामव्यथां जहुः अतस्ताः कृतार्थाः धिगन्या मादृश्यः या एवंभूतमपि मन्मथाधिशमनं न लभन्त इति भावः ॥ १७ ॥ हंतेति हर्षे हे सख्यः अयमद्रिर्गोवर्द्धनो ध्रुवं हरिदासेषु श्रेष्ठः कुत इत्यत आहुः यस्मात् रामकृष्णयोश्चरणस्पर्शेन प्रमोदो यस्य सः तृणाद्युद्गमच्छलेन रोमहर्षदर्शनात् किंच यत् यस्मात् मानं तनोति सह गोभिर्गणेन सखिसमूहेन च वर्तमानयोस्तयोः कैः पानीयैः सूयवसैः शोभनतृणैः कंदरैश्च कंदमूलैश्च यथोचितं अतोऽयमतिधन्य इत्यर्थः ॥ १८ ॥

हे सख्यः इदं लतिचित्रं गोपैः सह वने वने गाः संचारयतोस्तयोः रामकृष्णयोर्मधुरपदैर्महावेणुनादैः शरीरिषु येगतिमंतस्तेषां स्पंदनं स्थावरधर्मस्तरूणां पुलकः जंगमधर्म इति निर्युज्यंते गावः आभिरिति निर्योगाः पादबंधनरज्जवः अधृष्यगवाकर्षणार्थाः पाशाश्चतैः कृतलक्षणं चिन्हयोः शिरसि निर्योगवेष्टनेन स्कंधस्य पाशेन च गोपपरिवृढश्रिया विराजमानयोरित्यर्थः ॥१९॥ गोपीनां कामतः कृसेनिःसीमप्रेमसंगमः कात्यायन्यर्चनोद्भूततत्प्रसादमहोदयः ॥२०॥ इति दशमे टीकायामेकविंशतितमोऽध्यायः ॥२१॥ द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया वरं ददौ

गा गोपकैरनुवनं नयतोरुदारवेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः। अस्पंदनं गतिमतां पुलकस्तरूणां निर्योगपाशकृतलक्षणयोर्विचित्रम् ॥१९॥ एवंविधा भगवतो या वृंदावनचारिणः। वर्णयंत्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः ॥२०॥ इति श्रीभागवते म॰ दशमस्कंधे एकविंशतितमोऽध्यायः ॥२१॥ श्रीशुक उवाच ॥ हेमन्ते प्रथमे मासि नंदव्रजकुमारिकाः। चेरुर्हविष्यं भुंजानाः कात्यायन्यर्चनव्रतम् ॥१॥ आप्लुत्यांभसि कालिंद्या जलांते चोदितेऽरुणे। कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप सैकतीम् ॥२॥ गंधैर्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः। उच्चावचैश्चोपहारैः प्रवालफलतंडुलैः ॥३॥ कात्यायनि महामाये महायोगिन्यधीश्वरि। नंदगोपसुतं देवि पतिं मे कुरु ते नमः ॥४॥ इति मंत्रं जपंत्यस्ताः पूजां चक्रुः कुमारिकाः। एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः ॥५॥ भद्रकालीं समानर्चुर्भूयान्नंदसुतः पतिः। उषस्युत्थाय गोत्रैः स्वैरन्योन्याबद्धबाहवः ॥६॥ कृष्णमुच्चैर्जगुर्यांत्यः कालिंद्यां स्नातुमन्वहम्। नद्यां कदाचिदागत्य तीरे निक्षिप्य पूर्ववत् ॥७॥ वासांसि कृष्णं गायंत्यो विजह्रुः सलिले मुदा ॥ भगवांस्तदभिप्रेत्य कृष्णो योगेश्वरेश्वरः ॥८॥ वयस्यैरागतस्तत्र वृतस्तत्कर्मसिद्धये। तासां वासांस्युपादाय नीपमारुह्य सत्वरः ॥९॥ हसद्भिः प्रहसन्बालैः परिहासमुवाच ह। अत्रागत्याबलाः कामं स्वं स्वं वासः प्रगृह्यताम् ॥१०॥ सत्यं ब्रवाणि नो नर्म यद्यूयं व्रतकर्शिताः। न मयोदितपूर्वं वा अनृतं तदिमे विदुः ॥११॥

९ ततः कृष्णो यज्ञशालामितीर्यते ॥११॥ प्रथमे मासि मार्गशीर्षे ॥१॥२॥३॥ महामाये इत्यादिसंबोधनैस्त्वं न किंचिद्दुःशकमिति सूचयन्त्यः प्रत्येकं प्रार्थयन्ते ॥४॥५॥ कृष्णचेतसस्त्वमेवाह भूयान्नंदसुतः पतिरित्यानर्चुरिति व्रतस्य पूर्वोङ्गमाह उषसीति गोत्रैर्नामभिः अन्योन्याबद्धबाहवः परस्परगृहीतपाणयः ॥६॥७॥ योगेश्वराणामीश्वर इति प्रत्येकं तादृक्मनोरथपूरणसामर्थ्यं सूचयति ॥८॥ तासां नु ... ॥९॥ ... ॥१०॥ नो नर्म न परिहासः यस्माद्यूयं व्रतकर्शिताः

एकैकशोवाआगत्यस्वीकुरुतसहैववानतत्रास्माकमायाहहत्यर्थः स्वेलितंउत्पयरिहासःप्रेमपरिप्लुताःप्रेमरसनिमग्नाः॥१२॥१३॥तत्रमुग्धाऊचुः अङ्गभोःश्रीकृष्णअनयमन्यायंमाकृथाः॥१४॥प्रौढाऊचुःनोचेद्राज्ञेनन्दायकंसायवाब्रुवामहेहेकृष्णेतिवा॥१५॥१६॥प्रोत्तेरुर्निर्गताः॥१७॥आहताःईषद्धसतयोनीवीस्य॥१८॥धृतव्रताःसत्योविवस्त्राःअपोव्यगाहतअप्सुस्नाताइतियत्तदेतत्उएवदेवहेलनंअपराधएवेत्यर्थःव्रतवैगुण्यभीतानांप्रायश्चित्तमिवाहअस्यांऽहसअपनुत्तयेपापस्यनिवृत्तयेमूर्ध्न्यञ्जलिंबध्वाऽधोनमःप्रणामङ्कुर्वेति॥१९॥इतिदोषत्वेनअच्युतेनाभिहितंवि

एकैकशःप्रतीच्छध्वंसहैवोतसुमध्यमाः।तस्यतत्क्ष्वेलितंदृष्ट्वागोप्यःप्रेमपरिप्लुताः॥१२॥व्रीडिताःप्रेक्ष्यचान्योन्यंजातहासानिर्ययुः।एवंब्रुवतिगोविन्देनर्मणाक्षिप्तचेतसः॥१३॥आकंठमग्नाःशीतोदेवेपमानास्तमब्रुवन्।माऽनयंभोःकृथास्त्वान्तुनन्दगोपसुतंप्रियम्।जानीमोऽङ्गव्रजश्लाघ्यंदेहिवासांसिवेपिताः॥१४॥श्यामसुन्दरतेदास्यःकरवामतवोदितम्।देहिवासांसिधर्मज्ञनोचेद्राज्ञेब्रुवामहे॥१५॥श्रीभगवानुवाच॥भवत्योयदिमेदास्योमयोक्तंवाकरिष्यथ।अत्रागत्यस्ववासांसिप्रतीच्छन्तुशुचिस्मिताः॥१६॥ततोजलाशयात्सर्वादारिकाःशीतवेपिताः।पाणिभ्यांयोनिमाच्छाद्यप्रोत्तेरुःशीतकर्शिताः॥१७॥भगवानाहतावीक्ष्यशुद्धभावप्रसादितः।स्कन्धेनिधायवासांसिप्रीतःप्रोवाचसस्मितम्॥१८॥यूयंविवस्त्रायदपोधृतव्रताव्यगाहतैतत्तदुदेवहेलनम्।बध्वाऽञ्जलिंमूर्ध्न्यपनुत्तयेंऽहसःकृत्वानमोऽधोवसनम्प्रगृह्यताम्॥१९॥इत्यच्युतेनाभिहितंव्रजाबलामत्वाविवस्त्राप्लवनंव्रतच्युतिम्।तत्पूर्तिकामास्तदशेषकर्मणांसाक्षात्कृतंनेमुरवद्यमृग्यतः॥२०॥तास्तथाऽवनतादृष्ट्वाभगवान्देवकीसुतः।वासांसिताभ्यःप्रायच्छत्करुणस्तेनतोषितः॥२१॥दृढंप्रलब्धास्त्रपयाचहापिताःप्रस्तोभिताःक्रीडनवच्चकारिताः।वस्त्राणिचैवापहृतान्यथाऽप्यमुंतानाभ्यसूयन्प्रियसङ्गनिर्वृताः॥२२॥परिधायस्ववासांसिप्रेष्ठसङ्गमसज्जिताः।गृहीतचित्तानोचेलुस्तस्मिंल्लज्जायितेक्षणाः॥२३॥

विवस्त्राप्लवनंव्रतस्यच्युतिहेतुंमत्वातस्यव्रतस्यपूर्तिकामाःतदशेषकर्मणांतस्यव्रतस्यअन्येषामशेषकर्मणांचसाक्षात्कृतंफलभूतंतमेवनेमुःयतःसएवावद्यमृक्पापमार्जकः॥२०॥२१॥दृढमत्यर्थंप्रलब्धावञ्चिताःयूयंविवस्त्राइत्यादिनात्रपयालज्जयाचहापितास्त्याजिताःअत्रागत्यस्ववासांसीत्याग्रहेणप्रस्तोभिताःउपहसिताःसत्यंब्रवाणिनोनर्मेत्यादिनाक्रीडनवत्कारिताश्चबध्वाऽञ्जलिमित्यादिनाप्रायश्चित्तच्छलेननताःनाभ्यसूयन्दोषदृष्ट्यानापश्यत्॥२२॥प्रेष्ठसङ्गमेनसज्जिताःवशीकृ

चिताः सत्यो नो चेलुः गृहीतचित्तत्वमाह तस्मिन् कृष्णे लज्जायितेक्षणाः लज्जाविलसितमीक्षणं यासां तास्तादृश्य इत्यर्थः ॥२३॥ दामोदर इति भक्तवात्सल्यं दर्शयति अबलाः प्रति ॥२४॥ भो साध्व्यः भवतीनां मदर्चनमेव संकल्पो मनोरथः स च लज्जया युष्माभिरकथितोपि मया विदितः स मयाऽनुमोदितः अतः सत्यो भवितुमर्हति अर्हतीति च संभावनोक्त्या आत्यंतिको न भविष्यतीति सूचितम् ॥२५॥ तत् कुत इत्यत आह न मयीति कामाय पुनः कामभोगाय विषयमहिम्ना कामस्यापि शांतिहेतुत्वादिति भावः कामाप्ररोहे दृष्टांतः भर्जिता दग्धा क्वथिता पक्वा धाना यवादि बीजाय अंकुरोद्गमाय न

तासां विज्ञाय भगवान्स्वपादस्पर्शकाम्यया। धृतव्रतानां सङ्कल्पमाह दामोदरोऽबलाः ॥२४॥ संकल्पो विदितः साध्व्यो भवतीनां मदर्चनम्। मयाऽनुमोदितः सोऽसौ सत्यो भवितुमर्हति ॥२५॥ न मय्यावेशितधियां कामः कामाय कल्पते। भर्जिता क्वथिता धाना प्रायो बीजाय नेष्यते ॥२६॥ याताबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः। यदुद्दिश्य व्रतमिदं चेरुरार्यार्चनं सतीः ॥२७॥ श्रीशुक उवाच ॥ इत्यादिष्टा भगवता लब्धकामाः कुमारिकाः। ध्यायंत्यस्तत्पदांभोजं कृच्छ्रान्निर्विविशुर्व्रजम् ॥२८॥ अथ गोपैः परिवृतो भगवान्देवकीसुतः। वृन्दावनाद्गतो दूरं चारयन्गाः सहाग्रजः ॥२९॥ निदाघार्कातपे तिग्मे छायाभिः स्वाभिरात्मनः। आतपत्रायितान्वीक्ष्य द्रुमानाह व्रजौकसः ॥३०॥ हे स्तोककृष्ण हे अंशो श्रीदामन्सुबलार्जुन। विशाल वृषभ तेजस्विन्देवप्रस्थ वरूथप ॥३१॥ पश्यतैतान्महाभागान्परार्थैकान्तजीविनः। वातवर्षातपहिमान्सहन्तो वारयंति नः ॥३२॥ अहो एषां वरं जन्म सर्वप्राण्युपजीवनम्। सुजनस्येव येषां वै विमुखा यांति नार्थिनः ॥३३॥ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः। गंधनिर्यासभस्मास्थितोक्मैः कामान्वितन्वते ॥३४॥ एतावज्जन्मसाफल्यं देहिनामिह देहिषु। प्राणैरर्थैर्धिया वाचा श्रेय एवाचरेत्सदा ॥३५॥ इति प्रवालस्तबकफलपुष्पदलोत्करैः। तरूणां नम्रशाखानां मध्येन यमुनां गतः ॥३६॥

ऽप्राप इति स्वेच्छया पुनः प्ररोहमपि सूचयति धुवादीनां तथादर्शनात् ॥२६॥ सिद्धाः पूर्णमनोरथाः तदाह इमा आगामिनी रात्रीः मया रंस्यथेति आर्यां कात्यायनीं सतीः सत्यः ॥२७॥२८॥२९॥३०॥३१॥ भक्त्यानुकंपकन्यास्तास्तद्विवर्जितयज्वनाम्। पत्न्यनुग्रहतस्तेषामहन्कर्म महामदम् ॥१॥ विप्रभार्यानुग्रहाय यज्ञवाटं गच्छन् विप्राणां काठिन्यमभिप्रेत्य तेभ्योपि द्रुमाः श्रेष्ठा इति तानभिनंदति चतुर्भिः पश्यतेति हे स्तोककृष्णादयो गोपाः एतान् द्रुमान् पश्यत परार्थमेव एकान्तेन जीवनं येषां तान् तदाह वातवर्षादीन् स्वयं सहन्तः सहमानाः अस्मान् वारयंति ॥३२॥ सुजनस्य कृपालोः अर्थिन इव ॥३३॥ निर्यासो घनरसः तोक्माः पल्लवाङ्कुराः ॥३४॥३५॥ इत्यभिनन्दन् प्रवालादिसमूहैः

॥२७॥कुमारिकाभ्यः पूर्वमेवतन्नर्मीकुलतया अगृहीतभोज्यत्वात्तासामेवनिर्गमातसुधार्तावित्युक्तम्॥२८॥इतिश्रीभा०दशमस्कंधेटीकायांद्वाविंशोऽध्यायः॥२२॥त्रयोविंशेततोगोपैरन्नयाच्ञाऽपदेशतः।तत्पत्न्यनुग्रहात्कृष्णोदीक्षितानन्वतापयत्॥१॥१॥भक्तायाइत्येकवचनंसद्यःसायुज्याभिप्रायेण॥२॥३॥अस्माद्भिःसज्जिताः आवाभ्यांप्रहिताः संतोयाचध्वंयुष्माकंकातत्रलज्जानन्ततश्चाप्यपात्रत्वादस्माकंकिमितिदास्यंतीतिचेत्तत्राहकीर्तयंतइति॥४॥पूर्वं अविदूरेवर्तमानौसंतौवोयदन्नंतल्लषतः अभिलषतइच्छतः वःओदनमश्रद्धाचयद्यस्तितर्हियच्छतेति॥७॥दीक्षितावयमभोज्यान्नाइतिवदिष्यन्तो

तत्रगाःपाययित्वाऽपःसुमृष्टाःशीतलाःशिवाः।ततोनृपस्वयङ्गोपाःकामंस्वादुपपुर्जलम्॥२७॥तस्याउपवनेकामंचारयं तःपशून्नृप।कृष्णरामावुपागम्यक्षुधार्ताइदमब्रुवन्॥२८॥इतिश्रीभागवतेम०दशमस्कंधेद्वाविंशोऽध्यायः॥२२॥गोपाऊ चुः।रामरामहावीर्यकृष्णदुष्टनिबर्हण।एषावैबाधतेक्षुन्नस्तच्छांतिंकर्तुमर्हथः॥१॥श्रीशुकउवाच॥इतिविज्ञापितो गोपैर्भगवान्देवकीसुतः।भक्तायाविप्रभार्यायाःप्रसीदन्निदमब्रवीत्॥२॥प्रयातदेवयजनंब्राह्मणाब्रह्मवादिनः।सत्रमाङ्गिर सन्नामह्यासतेस्वर्गकाम्यया॥३॥तत्रगत्वौदनंगोपायाचतास्मद्विसर्जिताः।कीर्तयन्तोभगवतआर्यस्यममचाभिधाम्॥४॥इत्या दिष्टाभगवतागत्वायाचन्ततेतथा।कृतांजलिपुटाविप्रान्दंडवत्पतिताभुवि॥५॥हेभूमिदेवाःशृणुतकृष्णस्यादेशकारिणः।प्राप्ता ञ्जानीतभद्रंवोगोपान्नोरामचोदितान्॥६॥गाश्चारयंतावविदूरओदनंरामाच्युतौवोलषतोबुभुक्षितौ।तयोर्द्विजाओदनमर्थि नोर्यदिश्रद्धाचवोयच्छतधर्मवित्तमाः॥७॥दीक्षायाःपशुसंस्थायाःसौत्रामण्याश्चसत्तमाः।अन्यत्रदीक्षितस्यापिनान्नमश्नन्हिदु ष्यति॥८॥इतितेभगवद्याच्ञांशृण्वन्तोपिनशुश्रुवुः।क्षुद्राशाभूरिकर्माणोबालिशावृद्धमानिनः॥९॥देशःकालःपृथग्द्रव्यं मंत्रतन्त्रर्त्विजोऽग्नयः।देवतायजमानश्चक्रतुर्धर्मश्चयन्मयः॥१०॥तंब्रह्मपरमंसाक्षाद्भगवन्तमधोक्षजम्।मनुष्यदृष्ट्यादुष्प्र ज्ञामर्त्यात्मानोनमेनिरे॥११॥नतेयदोमितिप्रोचुर्ननेतिचपरन्तप।गोपानिराशाःप्रत्येत्यतथोचूरामकृष्णयोः॥१२॥ ९तिस्वयमेवाशं

क्याहुःदीक्षायाइतिदीक्षायाआरभ्याग्नीषोमीयपश्वालंभनात्पूर्वन्दोषःनततोऽन्यत्रतथासौत्रामण्याश्चान्यत्रअन्यदा॥८॥क्षुद्रेस्वर्गादावाशामात्रंयेषां तेभूरीणिक्लेशाधिकानिकर्माणियेषान्तेअतोऽश्वावृथाज्ञानवृद्धाइतिमानवन्तः॥९॥नन्वकर्माङ्गमनुल्लंघ्यादेशकालेऽन्यार्थमन्नमन्यस्मैकथंदे यंतत्राहदेशइतिपृथक्चरुपुरोडाशादिद्रव्यंतन्त्रंप्रयोगःधर्मोऽपूर्वम्॥१०॥मनुष्योयमितिदृष्ट्यामर्त्यात्मानोदेहाभिमानिनोब्राह्मणावयंमहांतइति

लौकिकीं गतिमिति नहि कार्यार्थिनो निर्विघ्नं ते कोवा याचको न पराभूयत इत्यादि लोकस्थितिं दर्शयन् ॥ १३ ॥ केवलं देहेनरहेवसंतिधियाचमय्येवोषिताः यतो मयि स्निग्धा अतो दास्यंतीति ॥ १४ ॥ १५ ॥ ईषिताः प्रेषिताः ॥ १६ ॥ सश्रीकृष्णो गोपालैः सह ॥ १७ ॥ तत्कथाक्षिप्तमनस्त्वात्तद्दर्शनोत्सुकाः अतएव तमुपागतं श्रुत्वा जातसंभ्रमा बभूवुरिति ॥ १८ ॥ भक्ष्यभोज्यलेह्यचोष्यभेदैश्चतुर्विधम् बहुगुणं संस्कारविशेषैर्बहवो गुणा रससौरस्यादयो यस्मिन् तत्भाजनैः अमत्रैः पत्यादिभिर्वार्य्यमाणा अपि प्रियं श्रीकृष्णं अभिसस्रुः अभिजग्मुः अप्रतिबंधे दृष्टान्तः समुद्रं निम्नगा नद्य इवेति ॥ १९ ॥ अत्र हेतुः भगवतीति दीर्घं बहुकालं श्रुतेन श्रवणेन धृत आशयो याभिस्ताः ॥ २० ॥ तथागताः सत्यो ददृशुः ॥ २१ ॥ हिरण्यवत्परिधिः परिधानं यस्य तं पीतांबरमित्यर्थः वनमाल्यैर्बर्हैः

तदुपाकर्ण्य भगवान्प्रहस्य जगदीश्वरः । व्याजहार पुनर्गोपान्दर्शयँल्लौकिकीङ्गतिम् ॥ १३ ॥ मां ज्ञापयत पत्नीभ्यः ससंकर्षणमागतम् । दास्यंति काममन्नं वः स्निग्धा मय्युषिता धिया ॥ १४ ॥ गत्वाऽथ पत्नीशालायां दृष्ट्वासीनाः स्वलंकृताः । नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रुवन् ॥ १५ ॥ नमो वो विप्रपत्नीभ्यो निबोधत वचांसि नः । इतोऽविदूरे चरता कृष्णेनेहेषिता वयम् ॥ १६ ॥ गाश्चारयन्स गोपालैः सरामो दूरमागतः । बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीयताम् ॥ १७ ॥ श्रुत्वाऽच्युतमुपायातं नित्यं तद्दर्शनोत्सुकाः । तत्कथाक्षिप्तमनसो बभूवुर्जातसंभ्रमाः ॥ १८ ॥ चतुर्विधं बहुगुणमन्नमादाय भाजनैः । अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः ॥ १९ ॥ निषिध्यमानाः पतिभिर्भ्रातृभिर्बंधुभिः सुतैः । भगवत्युत्तमश्लोके दीर्घश्रुतधृताशयाः ॥ २० ॥ यमुनोपवनेऽशोकनवपल्लवमंडिते । विचरंतं वृतं गोपैः साग्रजं ददृशुः स्त्रियः ॥ २१ ॥ श्यामं हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे । विन्यस्तहस्तमितरेण धुनानमब्जं कर्णोत्पलालककपोलमुखाब्जहासम् ॥ २२ ॥ प्रायःश्रुतप्रियतमोदयकर्णपूरैर्यस्मिन्निमग्नमनसस्तमथाक्षिरंध्रैः । अन्तः प्रवेश्य सुचिरं परिरभ्य तापं प्राज्ञं यथाऽभिमतयो विजहुर्नरेन्द्र ॥ २३ ॥

धातुभिः प्रवालैश्च नटवद्वेषो यस्य तं अनुव्रतस्य सख्युः अंसे विन्यस्तो निहितो हस्तो येन तं इतरेण हस्तेन लीलया अब्जं धुनानं भ्रामयंतं कर्णयोरुत्पले यस्य अलकाः कपोलयोर्यस्य मुखाब्जे हासो यस्य तं च तत्कर्णोत्पलालकेत्यादि ॥ २२ ॥ वृत्तेरपि लयेन सारस्यमाह प्राय इति बहुशः श्रुता ये प्रियतमस्य उदया उत्कर्षास्त एव कर्णपूराः कर्णौ पूरयन्तीति कृता येकुर्वंतीति तथा तैः कर्णाभरणैरिति वा यस्मिन् श्रीकृष्णे निमग्नमनसः आविष्टचेतसः तं केवलमक्षिरंध्रैः अन्तः प्रवेश्य सुचिरं परिरभ्य तापं विजहुः अभिमतयो देहादयः प्राज्ञं सुषुप्तिसाक्षिणं परिरभ्य तत्सुखेन तापं यथा जहतीति ॥ २३ ॥

अखिलदृक्द्रष्टा सर्वबुद्धिसाक्षी तास्तथा प्राप्ता विज्ञाय आदिलक्ष्ये येतद्विवृणोति त्यक्तसर्वाशाः त्यक्ताः सर्वा आशा याभिस्ताः केवलमात्मनः स्वस्यैव दि
दृक्षयेति॥२४॥ हे महाभागाः वः स्वागतम् शुभमागमनम् तदेवाह यद्यस्मात् प्रतिबन्धतिरस्कारेण अस्माकं दिदृक्षया प्राप्ता इतीदं वः उपपन्नं संपन्नं यु
क्तमितिवा॥२५॥ युक्तत्वमाह नन्विति आत्मप्रिये आत्मा च प्रियश्च तस्मिन्मयि कुशलाः विवेकिनो तत एव स्वस्यात्मनोर्थं पुरुषार्थं पश्यंतीति ये ते यथा यथा
वद्धा किं कुर्वंतीति यथात्वमाह अद्धा साक्षात् अन्यहेतुः अहैतुकी अव्यवहितां फलाभिसंधिरहितां अतएवाव्यवहितां निरंतराम्॥२६॥ आत्मनः सर्वतः प्रे
ष्ठत्वमुपपादयति प्राणेति स्वाज्ञातयः आत्मा देहः एते सर्वे यत्संपर्कात् यत्साध्यासेन उपकरणत्वेन वा॥२७॥ तत्तस्मात् कृतार्था यूयं तद्देवयजनं यज्ञवाटं

तास्तथा त्यक्तसर्वाशाः प्राप्ता आत्मदिदृक्षया॥ विज्ञायाखिलदृग्द्रष्टा प्राह प्रहसिताननः॥२४॥ स्वागतं वो महाभागा आस्यतां क
रवाम किम्। यन्नो दिदृक्षया प्राप्ता उपपन्नमिदं हि वः॥२५॥ नन्वद्धा मयि कुर्वन्ति कुशलाः स्वार्थदर्शिनाः। अहैतुक्यव्यवहितां भ
क्तिमात्मप्रिये यथा॥२६॥ प्राणबुद्धिमनःस्वात्मदारापत्यधनादयः। यत्संपर्कात्प्रिया आसंस्ततः को न्वपरः प्रियः॥२७॥ तद्यात
देवयजनं पतयो वो द्विजातयः। स्वसत्रं पारयिष्यन्ति युष्माभिर्गृहमेधिनः॥२८॥ विप्रपत्न्य ऊचुः। मैवं वैचोर्हति भवान्गदितुं नृ
शंसं सत्यं कुरुष्व निगमं तव पादमूलम्। प्राप्ता वयं तुलसिदाम पदावसृष्टं केशैर्निवोढुमतिलंघ्य समस्तबन्धून्॥२९॥ गृह्णन्ति
नो न पतयः पितरौ सुता वा न भ्रातृबंधुसुहृदः कुत एव चान्ये। तस्माद्भवत्प्रपदयोः पतितात्मनां नो नान्या भवेद्गतिररिन्दम त
द्विधेहि॥३०॥ श्रीभगवानुवाच॥ पतयो नाभ्यसूयेरन् पितृभ्रातृसुतादयः। लोकाश्च वो मयोपेता देवा अप्यनुमन्वते॥३१॥ न प्री
तयेऽनुरागाय ह्यङ्गसङ्गो नृणामिह। तन्मनो मयि युञ्जाना अचिरान्मामवाप्स्यथ॥३२॥ श्रीशुक उवाच॥ इत्युक्ता द्विजपत्न्यस्ता
यज्ञवाटं पुनर्गताः। ते चानसूयवः स्वाभिः स्त्रीभिः सत्रमपारयन्॥३३॥ तत्रैका विधृता भर्त्रा भगवन्तं यथाश्रुतम्। हृदोपगुह्य वि
जहौ देहं कर्मानुबंधनम्॥३४॥

((यात गच्छत ननु कृतार्थाः किमिति यास्याम इति चेत्तत्राह पतय इति पारयिष्यंति समापयिष्यन्ति पतीनामनुग्र
हायेत्यर्थः॥२८॥ नृशंसं परुषं निगमं प्रतिज्ञां न मे भक्तः प्रणश्यतीति वेदवान् न स पुनरावर्तत इति पदावसृष्टं भवत्पदयापि दत्तं बहुमानेन केशैर्निवोढुं दासीभ
वितुम्॥२९॥ किञ्च न गृह्णंतीति नोऽस्मान् हे अरिंदम कामक्रोधपापादिदमन भवतः प्रपदयोः पादाग्रयोर्निपतितदेहानां अन्या स्वर्गादिगतिरपि न भवेत्
मा भूत् तस्माद्दास्यमेव विधेहीति॥३०॥ मया उपेता अनुज्ञाताः प्रत्यक्षं देवाश्चदर्शी ह देवा अपीति॥३१॥ तथापि लांपत्यं कथं न शक्नुम इति चेत्तत्राह नेति
प्रीतये सुखाय अनुरागाय स्नेहदृद्धये अङ्गसङ्गः अङ्गाभ्यासङ्गः॥३२॥ अनसूयवः अदोषदृष्टयः॥३३॥ देहमिति तदीयं देहं तत्र विहाय चैतन्येन भगवन्तं

विभो

भा०स्कं०१०॥२३॥

॥३५॥ अनुशीलयन् अनुकुर्वन्गोगोपगोपीनामिति कर्मणि षष्ठी रूपवाक्कृतैः रूपेण वाचा कृतैश्चरित्रैश्च रमयन्तान् स्वमपितु रेमइत्यर्थः॥३६॥ अनुस्मृति प्रकारमाहन राजुकरणवतो विश्वेश्वरयोर्याञ्चां यत् अहन्म हतवन्तः तत्कृतागसो वयमित्यनुस्मृत्येत्यर्थः॥३७॥ तदा च स्वभार्या गृहे निवारयन्तो भगवद्भक्तिरहितमात्मानं व्यनिन्दन्नित्याहुः दृष्ट्वेति अलौकिकीं लोकातीताम्॥३८॥ त्रिवृत् शौक्रं सावित्रं दैक्ष्यमिति त्रिगुणितं जन्म व्रतं ब्र



भगवानपि गोविन्दस्तेनैवान्नेन गोपकान्। चतुर्विधेनाशयित्वा स्वयञ्च बुभुजे प्रभुः॥३५॥ एवं लीलानरवपुर्नृलोकमनुशीलयन्। रेमे गोगोपगोपीनां रमयन् रूपवाक्कृतैः॥३६॥ अथानुस्मृत्य विप्रास्ते अन्वतप्यन्कृतागसः। यद्विश्वेश्वरयोर्याञ्चामहन्म नृविडंबयोः॥३७॥ दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम्। आत्मानञ्च तया हीनमनुतप्ता व्यगर्हयन्॥३८॥ धिग्जन्म नस्त्रिवृद्विद्यां धिग्व्रतं धिग्बहुज्ञताम्। धिक्कुलं धिक्क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे॥३९॥ नूनं भगवतो माया योगिनामपि मोहिनी। यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः॥४०॥ अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ। दुरंतभावं योऽविध्यन्मृत्युपाशान्गृहाभिधान्॥४१॥ नासां द्विजातिसंस्कारो न निवासो गुरावपि। न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः॥४२॥ अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे। भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि॥४३॥ ननु स्वार्थविमूढानां प्रमत्तानां गृहेहया॥ अहो नः स्मारयामास गोपवाक्यैः सतां गतिः॥४४॥ अन्यथा पूर्णकामस्य कैवल्याद्याशिषां पतेः। ईशितव्यैः किमस्माभिरीशस्यैतद्विडंबनम्॥४५॥ हित्वाऽन्यान्भजते यं श्रीः पादस्पर्शाशयाऽसकृत्। आत्मदोषापवर्गेण यद्याञ्चा जनमोहिनी॥४६॥ देशः कालः पृथग्द्रव्यं मंत्रतंत्रर्त्विजोऽग्नयः। देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः॥४७॥ स एष भगवान्साक्षाद्विष्णुर्योगेश्वरेश्वरः। जातो यदुष्वित्यशृण्म ह्यपि मूढा न विद्महे॥४८॥ अहो वयं धन्यतमा येषान्नस्तादृशीः स्त्रियः। भक्त्या यासां मतिर्जाता अस्माकं निश्चला हरौ॥४९॥ नमस्तुभ्यं भगवते कृष्णायाकुंठमेधसे। यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु॥५०॥ ब्रह्मचर्यं क्रियाः कर्माणि दाक्ष्यं च क्रियादाक्ष्यमित्येकं वा पदं धिगित्यधिक्षेपे ये वयं त्वधोक्षजे विमुखास्तेषां जन्मादि तत्सर्वं धिगिति क्रमगर्हयन्नित्यर्थः॥३९॥४०॥ योऽविध्यत् अच्छिनत् तं दुरंतभावं भक्तिं पश्यतेति॥४१॥ द्विजातिसंस्कारः उपनयनं क्रियाः संध्योपासनाद्[illegible]॥४२॥४३॥४४॥४५॥ आत्मदोषापवर्गेण [illegible] गर्वादित्यागेन॥४६॥४७॥ [illegible] एवं सर्वत्र श्रुतवन्तो वयं हि [illegible]॥४८॥४९॥५०॥

॥५१॥ नचाचलन्नतयोर्दर्शनार्थं नजग्मुः॥५२॥ इतिश्रीभागवतेटीकायांत्रयोविंशोऽध्यायः॥२३॥ चतुर्विंशेमहेंद्रस्यमखंव्यावर्त्यहेतुभिः॥ कृष्णःप्रव

र्तयामासगोवर्द्धनमखोत्सवम्॥१॥ भूसुराणांक्रियावर्गानिरस्यस्वःसुरेषुचामघवन्मदभंगायतन्मखंसमवारयत्॥२॥ ब्राह्मणाःकंसाद्भीताःस्वा
श्रमस्थाएवभगवंतमभजन्भगवानपितत्रैवनिवसन् इंद्रयागकृतोद्यमान् गोपान् अपश्यदितिसंबंधः॥१॥२॥ वृथासंभ्रमोनभवतिमखोऽयमितिप्र
पंचेति किमत्रफलंकादेवतावांनाधिकारिणाकेनवासाधनेनसाध्यते॥३॥ एतद्ब्रूहिमहान्कामोममश्रवणेवर्त्ततेयद्वातवमहान्कामोदृश्यइतितूष्णीं
स्थितंप्रत्याहनेतिसर्वात्मनांसर्वत्रात्मदृष्टीनाम्॥४॥ अतएवनविद्यतेस्वःपरइतिदृष्टिर्येषांइतिस्वपरदृष्ट्यभावादेवतत्तद्भेदादमित्रादयोपियेषांनस

सवैनआद्यःपुरुषःस्वमायामोहितात्मनाम्। अविज्ञातानुभावानांसंतु महेत्यतिक्रमं॥५१॥ इतिस्वाघमनुस्मृत्यकृष्णेतेकृ
तहेलनाः॥ दिदृक्षवोऽप्यच्युतयोःकंसाद्भीतानचाचलन्॥५२॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेयज्ञपत्न्युद्धरणंनाम
त्रयोविंशोऽध्यायः॥२३॥ श्रीशुकउवाच॥ भगवानपितत्रैवबलदेवेनसंयुतः॥ अपश्यन्निवसन्गोपानिन्द्रयागकृतोद्यमा
न्॥१॥ तदभिज्ञोऽपिभगवान्सर्वात्मासर्वदर्शनः॥ प्रश्रयावनतोऽपृच्छद्वृद्धान्नंदपुरोगमान्॥२॥ कथ्यतांमेपितःकोऽयंसंभ्र
मोवउपागतः॥ किंफलंकस्यचोद्देशःकेनवासाध्यतेमखः॥३॥ एतद्ब्रूहिमहान्कामोमह्यंशुश्रूषवेपितः॥ नहिगोप्यंहिसाधू
नांकृत्यंसर्वात्मनामिह॥४॥ अस्त्यस्वपरदृष्टीनाममित्रोदास्तविद्विषाम्॥ उदासीनोऽरिवद्वर्ज्यआत्मवत्सुहृदुच्यते॥५॥ ज्ञा
त्वाऽज्ञात्वाचकर्माणिजनोयमनुतिष्ठति॥ विदुषःकर्मसिद्धिःस्यात्तथानाऽविदुषोभवेत्॥६॥ तत्रतावत्क्रियायोगोभवतां
किंविचारितः॥ अथवालौकिकस्तन्मेपृच्छतःसाधुभण्यताम्॥७॥ नन्दउवाच॥ पर्जन्योभगवानिन्द्रोमेघास्तस्यात्ममूर्तयः॥ ते
ऽभिवर्षन्तिभूतानांप्राणनंजीवनंपयः॥८॥ तन्तातवयमन्येचवार्मुचांपतिमीश्वरम्॥ द्रव्यैस्तद्रेतसासिद्धैर्यजंतेक्रतुभिर्नराः॥९॥

न्तीत्याह अमित्रेतिनमित्रमुदास्तउदासीनोविद्विट् येषांतेषांकृत्यंसर्वंकुर्मनगोपनीयंकिंचिदस्तीत्यर्थः सत्यपिभेददर्शनेउदासीनःशत्रुवद्वर्ज्यःआ
त्मतुल्यत्वात् सुहृन्मित्रंचपुनर्वर्ज्जनीयइत्याह उदासीनइति॥५॥ किंचसुहृद्भिःसहविचार्यज्ञात्वैवकर्मकर्त्तव्यंनतुगतानुगतिकमात्रेणेत्याहज्ञा
त्वेति अज्ञात्वाचतत्रविदुषोयथावत्कर्म्मफलंस्यात्तथा अविदुषोन॥६॥ भवतामयंक्रियायोगःशास्त्रतःकिंविचारितःप्रवृत्तोलौकिकआचार
प्राप्तोवेतिसाधुसोपपत्तिकंभण्यतांकथ्यतामिति॥७॥ आचारप्राप्तएवेतिसहेतुकमाह पर्ज्जन्यइति आत्ममूर्त्तयःप्रियमूर्त्तयः॥८॥ ततःकिं
मतआहतमितितमिंद्रंवार्मुचांमेघानांपतिंस्वामिनंईश्वरंनियंतारंतद्रेतसातद्वृष्टिपयसा॥९॥ ॐ॥ शैश्चंदितिपुस्तकांतरपाठः॥४॥

उपजीवन्ति उपजीविकां कल्पयंति धर्मार्थकामसिद्धये ननु कृष्यादिभिर्जीवन्तीति किमिन्द्रेण तत्राह पुंसामिति फलभावनः फलसाधकः पर्जन्यं विना कृष्यादि वैफल्यादित्यर्थः॥१०॥११॥इंद्रायमन्युञ्जनयन्निति कोपजननद्वारा गर्वं पर्वतादिद्रूमवतारयितुं देवतानिराकरणं न त्वयमेवाभिप्राय इत्यर्थः॥१२॥प्रथमं तावत्कर्मवादेन देवान्निराकरोति कर्मणेति॥१३॥ननु जडात्कर्मणः केवलात्कथं फलसिद्धिः स्यादिति चेत् अहो अशीलितमीमांसानां स्वमतिविलसितश्रद्धा कर्मणां फलकारणत्ववचनतोऽवगते किं ततोऽनुपपन्नं नाम केचित्तु नरतिसाहसभीताः कर्मतन्त्रपरमीश्वरं मन्यंते तन्मतमनूद्य निराकरोति अस्ति चेदिति स्वयं कर्मभिरलिप्तोऽन्येषां जीवानां कर्मणां फलरूपी फलदाता कर्तारं भजते तत्तत्कर्मफलदानेन॥१४॥अ

तच्छेषेणोपजीवन्ति त्रिवर्गफलहेतवे। पुंसां पुरुषकाराणां पर्जन्यः फलभावनः॥१०॥य एवं विसृजेद्धर्मं पारंपर्यागतं नरः। कामाल्लोभाद्भयाद्द्वेषात्स वै नाप्नोति शोभनम्॥११॥श्रीशुक उवाच॥वचो निशम्य नन्दस्य तथान्येषां व्रजौकसाम्। इन्द्राय मन्युं जनयन्पितरं प्राह केशवः॥१२॥श्रीभगवानुवाच॥कर्मणा जायते जन्तुः कर्मणैव विलीयते। सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते॥१३॥अस्ति चेदीश्वरः कश्चित्फलरूप्यन्यकर्मणाम्। कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः॥१४॥किमिन्द्रेणेह भूतानां स्वस्वकर्मानुवर्तिनाम्। अनीशेनान्यथा कर्तुं स्वभावविहितं नृणाम्॥१५॥स्वभावतन्त्रो हि जनः स्वभावमनुवर्तते। स्वभावस्थमिदं सर्वं सदेवासुरमानुषम्॥१६॥देहानुच्चावचाञ्जन्तुः प्राप्योत्सृजति कर्मणा। शत्रुर्मित्रमुदासीनः कर्मैव गुरुरीश्वरः॥१७॥तस्मात्संपूजयेत्कर्म स्वभावस्थः स्वकर्मकृत्। अंजसा येन वर्तेत तदेवास्य हि दैवतम्॥१८॥आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति। न तस्माद्विन्दते क्षेमं जारं नार्यसती यथा॥१९॥वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः। वैश्यस्तु वार्तया जीवेत्शूद्रस्तु द्विजसेवया॥२०॥

तः कर्मण एव फलसिद्धेस्तत्पारतंत्र्येण अजागलस्तनतुल्यत्वान्न देवतया कृत्यमित्याह किमिंद्रेणेति ननु कर्मणोऽपि प्रवृत्तिरंतर्यामिन्यपेक्षैव कथं सर्वथा देवताया अनुपयोग इत्याशंक्याह स्वभावविहितमिति स्वभावेन प्राक्तनसंस्कारेणैव विहितं यत्कर्म तदन्यथा कर्तुमनीशेन॥१५॥एतद्विवृणोति स्वभावतंत्र इति प्रवृत्तेः संस्काराधीनत्वात् किमंतर्यामिणेत्यर्थः॥१६॥तस्मात्स्वभावतो निष्पन्नस्य कर्मण एव सर्वकारणत्वात्कर्मैव पूज्यमित्याह देहानिति सार्द्धेन॥१७॥संपूजयेत्संमानयेत् न तु देवतोद्देशेन द्रव्यत्यागात्मकत्वात् कर्मणः कथं देवतां विना सिद्धिरित्याशंक्य कर्माङ्गमात्रं देवतेति पक्षमुपसंहरन्निव हेतुवादमाश्रित्यान्यामेव शैलगवादिरूपां देवतां समर्थयते अंजसेति

[illegible]

वैश्यवृत्तेश्चातुर्विध्यमाह कृषीति कृषिवाणिज्यसहिता गोरक्षा एवं त्रयं कुसीदं वृद्धिजीवनं तुर्यं चतुर्थं ॥ २१ ॥ ननु गवामपि वृत्तिर्महेंद्राधीनैवेत्याशं
क्य निरीश्वरसांख्यमताश्रयेण निराकरोति सत्त्वमिति श्लोकद्वयेन अन्योन्यं स्त्रीपुरुषयोगेन ॥ २२ ॥ सर्वत इति समुद्रशिलोषरादिष्वपि वृष्टिदर्शना
न्नप्रेक्षावत् पूर्वकत्वं वृष्टेरिति भावः तैरेव मेघैरेव सिद्ध्यंति जीवंतीति ॥ २३ ॥ तथापि योगक्षेमार्थं देवतापेक्षेति चेदत आह न नः पुर इति पुरः पत्तनानि
जनपदा देशाः अस्माकं योगक्षेमहेतुर्वनशैलादय एवेति भावः ॥ २४ ॥ ब्राह्मणानपि संगृण्हन् निगमयति तस्मादिति स्वयमुत्प्रेक्षितयागप्रयोग

कृषिवाणिज्यगोरक्षा कुसीदं तुर्यमुच्यते । वार्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ॥ २१ ॥ सत्त्वं रजस्तम इति स्थित्युत्पत्त्यं तहेतवः । रजसोत्पद्यते विश्वमन्योऽन्यं विविधं जगत् ॥ २२ ॥ रजसा चोदिता मेघा वर्षंत्यंबूनि सर्वतः । प्रजास्तैरेव सिद्ध्यंति महेंद्रः किं करिष्यति ॥ २३ ॥ न नः पुरो जनपदा न ग्रामा न गृहा वयम् । नित्यं वनौकसस्तात वनशैलनिवासिनः ॥ २४ ॥ तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः । य इन्द्रयागसंभारास्तैरयं साध्यतां मखः ॥ २५ ॥ पच्यन्तां विविधाः पाकाः सूपांताः पायसादयः । संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम् ॥ २६ ॥ हूयंतामग्नयः सम्यक् ब्राह्मणैर्ब्रह्मवादिभिः । अन्नं बहुविधं तेभ्यो देयं वो धेनुदक्षिणाः ॥ २७ ॥ अन्येभ्यश्चाश्वचांडालपतितेभ्यो यथार्हतः । यवसं च गवां दत्त्वा गिरये दीयतां बलिः ॥ २८ ॥ स्वलंकृता भुक्तवंतः स्वनुलिप्ताः सुवाससः । प्रदक्षिणं च कुरुत गोविप्रानलपर्वतान् ॥ २९ ॥ एतन्मम मतं तात क्रियतां यदि रोचते । अयं गोब्राह्मणाद्रीणां मह्यं च दयितो मखः ॥ ३० ॥ श्रीशुक उवाच ॥ कालात्मना भगवता शक्रदर्पं जिघांसता । प्रोक्तं निशम्य नंदाद्याः साध्वगृण्हंत तद्वचः ॥ ३१ ॥ तथा च व्यदधुः सर्वं यथाह मधुसूदनः । वाचयित्वा स्वस्त्ययनं तद्द्रव्येण गिरिद्विजान् ॥ ३२ ॥ उपहृत्य बलीन्सर्वानादृता यवसं गवाम् । गोधनानि पुरस्कृत्य गिरिं चक्रुः प्रदक्षिणम् ॥ ३३ ॥ अनांस्यऽनडुद्युक्तानि ते चारुह्य स्वलङ्कृताः । गोप्यश्च कृष्णवीर्याणि गायंत्यः स द्विजाशिषः ॥ ३४ ॥

९कल्पनामाह य इंद्रयागसंभारा इति सार्द्धपंचभिः संभाराः साधनानि ॥ २५ ॥ सूपैर्मौद्गं पायसं केवले पयसि पक्वं संयावादयो गोधूमादिविक्रियाः क्रमश्च सूपपायसयोः श्रुत्यादोहस्यार्थतोऽन्येषां पाठतः ॥ २६ ॥ या
गशोभार्थं श्रद्धोत्सादनार्थं चाह हूयन्तामिति धेनुदक्षिणाः धेनुसहिता दक्षिणाः ता एव वा दक्षिणाः वः युष्माभिः ॥ २७ ॥ यवसं तृणम् ॥ २८
॥ २९ ॥ सर्वान् शिरःकंपेनानुमोदयन्नाह गोब्राह्मणाद्रीणामिति मह्यं मम ॥ ३० ॥ ३१ ॥ तद्द्रव्येण तेन महेंद्रमखद्रव्येण गिरिं द्विजांश्चेति यथाय
थम् ॥ ३२ ॥ बलीनुपहृत्य दत्त्वा आदृताः सादराः ॥ ३३ ॥ अनडुद्युक्तानि उत्तमाऽनडुद्भिर्युक्तानि सद्विजाशिषः द्विजाशीर्भिः सहिताः ॥ ३४ ॥

T

गोपविश्रंभणंगोपानांविश्वासजनकंरूपंगतःप्राप्तःसन्बलिमुपहारंआदत्तअभक्षयत॥३५॥तस्मैआत्मनेआत्मनास्वयंव्रजजनैः सहनमश्चक्रेअहोइतिसार्द्धश्लोकंपठन्॥३६॥कामरूपीसर्पादिरूपःअस्मैअद्रयेशर्मणेक्षेमाय॥३७॥कंमैवालंप्राक्स्वभावोगुणोवाकर्माङ्गत्वातद्दृशोवामहेशःवार्त्ताकर्त्रीदेवतेतीयमुक्तादेवस्तोभेषणमतीनत्वभीष्टा॥३८॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेचतुर्विंशोऽध्यायः॥२४॥पञ्चविंशेरुषाशक्रेव्रजनाशायवर्षति।उद्धृत्यगिरिमासारादरक्षद्गोकुलंप्रभुः॥१॥कृष्णोनाथोयेषान्तेभ्यः॥१॥क्रुद्धःसन्निन्द्रःसांवर्तकन्नामसंवर्तःप्रलयःतत्कर्तारंमेघानांप्रसिद्धंगणंप्राचोदयत्प्रेषयामासननुकृष्णनाथानांघातेकथंप्रवृत्तइत्याशंक्यात्मसंभावनयानिरस्तविवेकत्वादित्याशयेनाहवाक्यञ्चाहेत्यादिपञ्चभिः

कृष्णस्त्वन्यतमंरूपंगोपविश्रंभणंगतः।शैलोस्मीतिब्रुवन्भूरिबलिमादद्बृहद्वपुः॥३५॥तस्मैनमोव्रजजनैःसचक्रेआत्मनात्मने।अहोपश्यतशैलोऽसौरूपीनोऽनुग्रहंव्यधात्॥३६॥एषोऽवजानतोमर्त्यान्कामरूपीवनौकसः।हन्तिह्यस्मैनमस्यामःशर्मणेआत्मनोगवाम्॥३७॥इत्यद्रिगोद्विजमखंवासुदेवप्रणोदिताः।यथाविधायतेगोपाःसहकृष्णाव्रजंययुः॥३८॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेचतुर्विंशतितमोऽध्यायः॥२४॥श्रीशुकउवाच॥इन्द्रस्तदात्मनःपूजांविज्ञायविहतांनृप।गोपेभ्यःकृष्णनाथेभ्योनंदादिभ्यश्चुकोपसः॥१॥गणंसांवर्तकंनाममेघानांचान्तकारिणाम्।इन्द्रःप्राचोदयत्क्रुद्धोवाक्यंचाहेशमान्युत॥२॥अहोश्रीमदमाहात्म्यंगोपानांकाननौकसाम्।कृष्णंमर्त्यमुपाश्रित्यये चक्रुर्देवहेलनम्॥३॥यथादृढैःकर्ममयैःक्रतुभिर्नामनौनिभैः।विद्यामान्वीक्षिकींहित्वातितीर्षन्तिभवार्णवम्॥४॥वाचालंबालिशंस्तब्धमज्ञंपंडितमानिनम्।कृष्णंमर्त्यमुपाश्रित्यगोपामेचक्रुरप्रियम्॥५॥एषांश्रियावलिप्तानांकृष्णेनाध्मायितात्मनाम्।धुनुतश्रीमदस्तंभंपशून्नयतसंक्षयम्॥६॥ १ ईशमानीअहमेवेश्वरइतिगर्ववान्॥२॥देवहेलनंदेवस्यममावज्ञाम्॥३॥अदृढैःअसमर्थैःकर्ममयैःक्रियानिर्वर्त्यैःअतएवनामनौनिभैःनाममात्रेणयानौरितिव्यवह्रियतेतत्सदृशैःआन्वीक्षिकीमात्मानुस्मृतिरूपां॥४॥तथावाचालंबहुभाषिणंबालिशंशिशुंपंडितमानिनंपंडितंमन्यंअतःस्तब्धमविनीतमितिनिंदायांयोजिताःपींदूस्यभारतीश्रीकृष्णंस्तौतितथाहिवाचालंशास्त्रयोनिंबालिशंएवमपिशिशुवन्निरभिमानिनंस्तब्धंअन्यस्यवंद्यस्याभावात्अनम्रंअज्ञंनास्तिज्ञोयस्मात्तंसर्वज्ञमित्यर्थःपंडितमानिनंपंडितैर्विद्वद्भिर्बहुमाननीयंकृष्णंसदानंदरूपंपरंब्रह्ममर्त्यंतथापिभक्तवात्सल्येनमनुष्यत्वात्प्रतीयमानमिति॥५॥अवलिप्तानांमत्तानांआध्मायितात्मनांदर्पितदेहानां...श्रीमदेनयःस्तंभोगर्वस्तम्॥६॥

बिभ्यतस्तान्प्रत्याह अहमिति अनुव्रजे अनु अनन्तरमेवागमिष्यामि मरुद्गणैर्देवगणैः सह॥७॥ मघवता इन्द्रेण निर्मुक्तं बंधनं येषान्ते प्रलयाभिप्रायेण बद्धा आसंस्तदा निर्मुक्तबन्धनाः सन्तः आसारैर्धारासंपातैः पीडयामासुः॥८॥ स्तनयित्नुभिरशनीभिः स्तनंतः गर्जन्तः मरुद्गणैः आवहप्रवाहादिवायुसमूहैः नुन्नाः प्रेरिताः जलशर्कराः जलोपलान्॥९॥ स्थूणावत्स्थूलाः अभ्रेषु मुंचत्सु सत्सु नतोन्नतम् निम्नमुन्नतं तद्विपरीतं यथा भवति तथा भूर्नादृश्यत॥१०॥ जातवेपनाः जातकंपाः॥११॥ तत्र पशूनां यानं विशिनष्टि शिरइति॥१२॥ गोपगोपीनां प्रार्थनामाह कृष्णकृष्णेति त्वमेव नाथो यस्य तद्गोकुलं गवां कुलं वंशम् अस्मांश्च देवादिन्द्रात्त्रातुं रक्षितुम् अर्हसि॥१३॥ विज्ञापनात्पूर्वमेव कुपितेनेन्द्रेण कृतं तद्दृष्ट्वा मेने॥१४॥ कथं मेने तदाह अपर्तु

अहं चैरावतं नागमारुह्यानुव्रजे व्रजम्। मरुद्गणैर्महावीर्यैर्नन्दगोष्ठजिघांसया॥७॥ ऋषिरुवाच॥ इत्थं मघवताज्ञप्ता मेघा निर्मुक्तबंधनाः। नन्दगोकुलमासारैः पीडयामासुरोजसा॥८॥ विद्योतमाना विद्युद्भिः स्तनन्तः स्तनयित्नुभिः। तीव्रैर्मरुद्गणैर्नुन्ना ववृषुर्जलशर्कराः॥९॥ स्थूणास्थूला वर्षधारा मुञ्चत्स्वभ्रेष्वभीक्ष्णशः। जलौघैः प्लाव्यमाना भूर्नादृश्यत नतोन्नतं॥१०॥ अत्यासारातिवातेन पशवो जातवेपनाः। गोपा गोप्यश्च शीतार्ता गोविंदं शरणं ययुः॥११॥ शिरः सुतांश्च कायेन प्रच्छाद्यासारपीडिताः। वेपमाना भगवतः पादमूलमुपाययुः॥१२॥ कृष्ण कृष्ण महाभाग त्वन्नाथं गोकुलं प्रभो॥ त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सल॥१३॥ शिलावर्षनिपातेन हन्यमानमचेतनम्। निरीक्ष्य भगवान्मेने कुपितेंद्रकृतं हरिः॥१४॥ अपर्त्त्वत्युल्बणं वर्षमतिवातं शिलामयम्। स्वयागे निहतेऽस्माभिरिंद्रो नाशाय वर्षति॥१५॥ तत्र प्रतिविधिं सम्यगात्मयोगेन साधये। लोकेशमानिनां मौढ्याद्धरिष्ये श्रीमदं तमः॥१६॥ नहि सद्भावयुक्तानां सुराणामीशविस्मयः। मत्तोऽसतां मानभङ्गः प्रशमायोपकल्पते॥१७॥ तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम्। गोपाये स्वात्मयोगेन सोयं मे व्रत आहितः॥१८॥ इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्द्धनाचलम्। दधार लीलया कृष्णश्छत्राकमिव बालकः॥१९॥ इति अपगत ऋतुर्यस्मिन् तद्वर्षं अतिशयितो वातो यस्मिंस्तदतिवातं शिलामयं शिलाप्रचुरम्॥१५॥ तत्र प्रतिज्ञापूर्वं गोवर्द्धनोद्धरणमाह तत्रेति तत्र प्रतिविधिं प्रतीकारं स्वसामर्थ्येन साधयिष्यामि तेन च मौढ्याल्लोकेशमानिनां श्रीमदलक्षणं तमो हरिष्यामि बहुवचनन्तु वरुणादीनभिप्रेति॥१६॥ ननु देवाः सात्त्विकाः त्वद्भक्ताश्च कुतस्तेषां तमस्तत्राह नहीति सद्भावः सत्त्वं भक्तिर्वा तद्युक्तानां सुराणामीशोऽहमिति विस्मयो गर्वो नहि स्यान्न घटते अतोऽसंतस्ते किंच तेषां मानभङ्गोऽनुग्रह एवेत्याह मत्तइति॥१७॥ गोपाये रक्षिष्यामि किञ्च सोयं मे मया व्रतो नियमः संकल्पो वा आहितः धृत इत्यर्थः॥१८॥ छत्राकमुच्छिलीं

यथोपजोषंयथासुखम्॥२०॥२१॥सव्रजाःशकटमण्डलसहिताःसोपजीविनःभृत्यपुरोहितादिसहिताः॥२२॥पदात्स्थानात्॥२३॥२४॥२५॥स्यु दृशपाःविगतोदकप्रायाःस्वल्पजलाइत्यर्थः॥२६॥शकटोढोपकरणंशकटैरूढमुपकरणंयथाभवतितथा॥२७॥२८॥निभृताःपूर्णाःयथोचितंपरि



अथाहभगवान्गोपान्हेंऽबतातव्रजौकसः।यथोपजोषंविशतगिरिगर्त्तंसगोधनाः॥२०॥नत्रासइहवःकार्योमद्ध स्ताद्रिनिपातने।वातवर्षभयेनालंतत्त्राणंविहितंहिवः॥२१॥तथानिर्विविशुर्गर्त्तंकृष्णाश्वासितमानसाः।यथाऽवका शंसधनाःसव्रजाःसोपजीविनः॥२२॥क्षुत्तृड्व्यथांसुखापेक्षांहित्वातैर्व्रजवासिभिः।वीक्ष्यमाणोदधावद्रिंसप्ताहंनाच लत्पदात्॥२३॥कृष्णयोगानुभावन्तंनिशम्येंद्रोतिविस्मितः।निस्तंभोभ्रष्टसंकल्पःस्वान्मेघान्संन्यवारयत्॥२४॥खंव्य भ्रमुदितादित्यंवातवर्षंचदारुणम्।निशाम्योपरतंगोपान्गोवर्द्धनधरोऽब्रवीत्॥२५॥निर्यातत्यजतत्रासंगोपाःसस्त्रीध नार्भकाः।उपारतंवातवर्षंव्युदप्रायाश्चनिम्नगाः॥२६॥ततस्तेनिर्ययुर्गोपाःस्वंस्वमादायगोधनम्।शकटोढोपकरणंस्त्री बालस्थविराःशनैः॥२७॥भगवानपितंशैलंस्वस्थानेपूर्ववत्प्रभुः।पश्यतांसर्वभूतानांस्थापयामासलीलया॥२८॥तंप्रे मवेगान्निभृताव्रजौकसोयथासमीयुःपरिरंभणादिभिः।गोप्यश्चसस्नेहमपूजयन्मुदादध्यक्षताद्भिर्युयुजुःसदाशिषः ॥२९॥यशोदारोहिणीनन्दोरामश्चबलिनांवरः।कृष्णमालिङ्ग्ययुयुजुराशिषःस्नेहकातराः॥३०॥दिविदेव गणाःसाध्याःसिद्धगन्धर्वचारणाः।तुष्टुवुर्मुमुचुस्तुष्टाःपुष्पवर्षाणिपार्थिव॥३१॥शंखदुन्दुभयोनेदुर्दिविदेवप्र णोदिताः।जगुर्गन्धर्वपतयस्तुंबुरुप्रमुखान्नृप॥३२॥ततोनुरक्तैःपशुपैःपरिश्रितोराजन्स्वगोष्ठंसबलोऽव्रजद्धरिः। तथाविधान्यस्यकृतानिगोपिकागायन्त्यईयुर्मुदिताहृदिस्पृशः॥३३॥इतिश्रीभागवतेमहापुराणेदशमस्कन्धे पंचविंशोऽध्यायः॥२५॥

१९ रंभणादिभिःसमीयुःउपजग्मुःसदाशिषःश्रेष्ठानाशीर्वादान्॥२९॥३०॥३१॥३२॥ततोगोवर्द्धनस्थाना त्अस्यश्रीकृष्णस्यतथाविधानिगोवर्द्धनोद्धरणादिरूपाणिकृतानिकर्माणिगायंत्यःईयुःययुःकथंभूताःएवंप्रेम्णाहृदिस्पृशन्तीतिहृदि स्पृशः।पक्षेकथंभूतस्यप्रेम्णातेनतासांहृदिस्पृशतीतिहृदिस्पृक्तस्य॥३३॥ इतिश्रीदशमेटीकायांपञ्चविंशोऽध्यायः॥ २५ ॥

षड्विंशे विस्मितान्गोपान्कृष्णस्याद्भुतकर्मभिः। नंदो गर्गोक्तिमाश्राव्य तदैश्वर्यमवर्णयत ॥१॥ समभ्येत्य नंदमभिगम्य ॥१॥ यदूचुस्तदाह बालकस्येति यत् यस्मात् अद्भुतानि कर्माणि तस्माद्ग्राम्येषु गोपालेषु कथं जन्माहेति आत्मजुगुप्सितम् आत्मानर्हम् ॥२॥ अद्भुतानि कर्माण्याहुः द्वादशभिः यः सप्तहायनः इति कथं बिभ्रत् स्थित इति पुष्करं पद्मं गजराट् महागज इव ॥३॥ महौजसः महाबलायाः तनोर्वयः आयुर्यौवनं वा कालेन यथापीयते तद्वत् ॥४॥ कथमित्यनुवर्त्तते अनसः अधः शयानस्य मासस्य समासाल्पयः परिच्छेदकायस्य उदक् ऊर्द्ध्वं चरणौ हिन्वतः चालयतः प्रपदेन पदाग्रेण ह

श्रीशुक उवाच ॥ एवंविधानि कर्माणि गोपाः कृष्णस्य वीक्ष्य ते। अतद्वीर्य्यविदः प्रोचुः समभ्येत्य सुविस्मिताः ॥१॥ बालकस्य यदेतानि कर्माण्यत्यद्भुतानि वै। कथमर्हत्यसौ जन्म ग्राम्येष्वात्मजुगुप्सितम् ॥२॥ यः सप्तहायनो बालः करेणैकेन लीलया। कथं बिभ्रद्गिरिवरं पुष्करं गजराडिव ॥३॥ तोकेनामीलिताक्षेण पूतनाया महौजसः। पीतः स्तनः सह प्राणैः कालेनेव वयस्तनोः ॥४॥ हिन्वतोऽधः शयानस्य मास्यस्य चरणावुदक्। अनोऽपतद्विपर्य्यस्तं रुदतः प्रपदाहतम् ॥५॥ एकहायन आसीनो ह्रियमाणो विहायसा। दैत्येन यस्तृणावर्त्तमहन्कंठग्रहातुरम् ॥६॥ क्वचिद्धैयङ्गवस्तैन्ये मात्रा बद्ध उलूखले। गच्छन्नर्ज्जुनयोर्मध्ये बाहुभ्यां तावपातयत् ॥७॥ वने संचारयन्वत्सान्सरामो बालकैर्वृतः। हन्तुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत् ॥८॥ वत्सेषु वत्सरूपेण प्रविशन्तं जिघांसया। हत्वान्यपातयत्तेन कपित्थानि च लीलया ॥९॥ हत्वा रासभदैतेयं तद्बंधूंश्च बलान्वितः। चक्रे तालवनं क्षेमं परिपक्वफलान्वितम् ॥१०॥ प्रलंबं घातयित्वोग्रं बलेन बलशालिना। अमोचयद्व्रजपशून्गोपांश्चारण्यवह्नितः ॥११॥ आशीविषतमाहीन्द्रं दमित्वा विमदं ह्रदात्। प्रसह्योद्वास्य यमुनां चक्रे सौ निर्विषोदकाम् ॥१२॥ दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषां नो व्रजौकसाम्। नन्द ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथम् ॥१३॥ क्व सप्तहायनो बालः क्व महाद्रिविधारणम्। ततो नो जायते शङ्का व्रजनाथ तवात्मजे ॥१४॥

ऽतं विपर्य्यस्तं अनः कथमपतत् ॥५॥ यः कृष्णः दैत्येन ह्रियमाणः सन् तं तृणावर्तं दैत्यं कथं अहन्नित्यर्थः ॥६॥ हैयङ्गवस्तैन्येन नवनीतचौर्येण बाहुभ्यां गच्छन् रिङ्गन्नित्यर्थः ॥७॥ मुखतो हन्तुकामो यस्तं बकवेषमरिं बाहुभ्यां मुखतः कथमपाटयत् ॥८॥९॥१०॥११॥ आशीविषतमः अतिक्रूरविषश्चासावहीन्द्रश्च तम् ॥१२॥ औत्पत्तिकः स्वाभाविकः कथमिति किं सर्वेषामात्माऽयं स्यादिति शङ्का ॥१३॥ उक्तमपि अतिविस्मयेन वदन्ति क्व सप्तहायन इति ॥१४॥



T

प्राक् श्रुतमेव गर्गाचार्यवाक्यं तच्चरितपरिशीलनेन निवृत्ताऽसंभावनस्य नंदस्य कृष्णतत्त्वावबोधकं जातं स इदानीं तेनैव वाक्येन गोपाननुपदिशति श्रूयतामिति॥१५॥१६॥१७॥१८॥१९॥२०॥२१॥ तस्मात्तस्य कर्मसु विस्मयो नास्तीति नंदस्योक्तिः॥२२॥ इत्यद्धा साक्षात् मां प्रति समादिश्य गर्गे च स्वगृहं गते स तिष्ठति तदानीं तथा मन्यमानोऽपि इदानीं कृष्णं नारायणस्यांशं मन्ये अत्र हेतुः अक्लिष्टकारिणमिति॥२३॥२४॥ गोवर्द्धनोद्धरणं सपरिकरमनुस्मरन् प्रकटितैश्वर्यस्य श्रीकृष्णस्य प्रीतिं प्रार्थयते देव इति यज्ञविप्लवेन यारुद्ता देवे इन्द्रे वर्षति सति वर्षाश्मपरुषानिलैः अशनिजलशर्करातो



नन्द उवाच॥ श्रूयतां मे वचो गोपा व्येतु शङ्का च वोऽर्भके। एनं कुमारमुद्दिश्य गर्गो मे यदुवाच ह॥१५॥ वर्णास्त्रयः किलास्यासन्गृह्णतोऽनुयुगं तनूः। शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः॥१६॥ प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः। वासुदेव इति श्रीमानभिज्ञाः सम्प्रचक्षते॥१७॥ बहूनि सन्ति नामानि रूपाणि च सुतस्य ते। गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः॥१८॥ एष वः श्रेय आधास्यद्गोपगोकुलनंदनः। अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथ॥१९॥ पुराऽनेन व्रजपते साधवो दस्युपीडिताः। अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः॥२०॥ य एतस्मिन्महाभागाः प्रीतिं कुर्वन्ति मानवाः। नारयोऽभिभवन्त्येतान्विष्णुपक्षानिवासुराः॥२१॥ तस्मान्नन्द कुमारोऽयं नारायणसमो गुणैः। श्रिया कीर्त्यानुभावेन तत्कर्मसु न विस्मयः॥२२॥ इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते। मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिणम्॥२३॥ इति नन्दवचः श्रुत्वा गर्गगीतं व्रजौकसः। दृष्टश्रुतानुभावास्ते कृष्णस्यामिततेजसः। मुदिता नन्दमानर्चुः कृष्णं च गतविस्मयाः॥२४॥ देवे वर्षति यज्ञविप्लवरुषा वज्राश्मपर्षानिलैः सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वानुकम्प्युत्स्मयन्। उत्पाट्यैककरेण शैलमबलो लीलोच्छिलीन्ध्रं यथा बिभ्रद्गोष्ठमपान्महेन्द्रमदभित्प्रीयान्न इन्द्रो गवाम्॥२५॥

ऽऽवज्रवायुभिः सीदन्तः पालाः पशवः स्त्रियश्च यस्मिन् तत् तथा आत्मा स्वयमेव शरणं यस्य तद्गोष्ठं दृष्ट्वाऽनुकंपी उत्स्मयन् हसन् प्रौढिमा विष्कुर्वन् शैलमुत्पाट्य अबलो बालो लीलोऽर्थमुच्छिलीन्ध्रं यथा तथा एकेन करेण बिभ्रत् दधत् गोष्ठमपात् पालितवान् एवं महेंद्रमदभित् गवामिन्द्र इत्युत्तराध्यायार्थं च स्मरति स एव भगवान् श्रीकृष्णः प्रीयात् प्रीयतामिति॥ षड्विंशे दशमे हरिः। व्यनक्ति पंचविंशमां चतुर्विंशतितः पृथक्॥ २५॥

इतिदशमस्कन्धेटीकायांषड्विंशोऽध्यायः॥२६॥ सप्तविंशेतदालब्धकृष्णस्यप्रभवंपरम्॥ वर्णयंतेसुरभीन्द्राभ्यामभिषेकमहोत्सवः॥१॥ गोवर्द्धनेधृतेशै
लइतिशक्रस्यभयेनागमनेहेतुः आसाराद्रक्षितेव्रजइतिसुरभेर्हर्षेणागमनम्॥१॥ तत्रेंद्रआगत्यकिंकृतवान् तदाहविविक्तउपसंगम्येत्यादिना अथाह
सुरभिरित्यतःप्राक्तनेनग्रंथेनविविक्तेएकान्तेपादयोःपस्पर्शनमश्चकार॥२॥ अस्यश्रीकृष्णस्यश्रुतश्चासावनुभावश्चश्रुतानुभावःदृष्टःश्रुतानुभावोये
नसइंद्रःनष्टस्त्रिलोकेशोऽहमितिमदोयस्यसः॥३॥ तत्रममापराधंक्षमस्वेतिवक्तुंतवतावदपराधोनास्त्येवलयानुग्रहएवकृतइत्याहचतुर्भिःविशु
द्धसत्वंइतिधामस्वरूपंशांतंएकस्वरूपंअतएवतपोमयंप्रचुरज्ञानंसर्वज्ञमित्यर्थःकुतःध्वस्तरजस्तमस्कंध्वस्तेअविद्यमानेरजस्तमसीयस्मिन्अत
एवअयंअस्मदादिषुदृश्यमानःमायाकार्यरूपःगुणसंप्रवाहःगुणैःसंप्रोह्यतइतितथासंसारइत्यर्थःसःतेतवनविद्यतेयतःअग्रहणेनाज्ञानेनानुब
ध्यतइतितथासःसर्वज्ञस्यतेनास्तीत्यर्थःअज्ञानसंबन्धोवा॥४॥ यदाअज्ञानतत्कृतदेहसंबन्धोनस्तस्तदातत्कृतानांलोभादीनांकावार्तेत्याहकु

॥इतिश्रीभागवतेमहा० दशमस्कन्धेषट्विंशोऽध्यायः॥२६॥ श्रीशुकउवाच॥ गोवर्द्धनेधृतेशैलेआसाराद्रक्षितेव्रजे॥ गो
लोकादाव्रजत्कृष्णंसुरभिःशक्रएवच॥१॥ विविक्तउपसङ्गम्यव्रीडितःकृतहेलनः॥ पस्पर्शपादयोरेनंकिरीटेनार्कवर्च्च
सा॥२॥ दृष्टश्रुतानुभावोऽस्यकृष्णस्यामिततेजसः॥ नष्टत्रिलोकेशमदइन्द्रआहकृतांजलिः॥३॥ इंद्रउवाच॥ विशुद्धसत्वंतव
धामशांतंतपोमयंध्वस्तरजस्तमस्कम्॥ मायामयोऽयंगुणसंप्रवाहोनविद्यतेतेऽग्रहणानुबंधः॥४॥ कुतोनुतद्धेतवईशतत्कृ
तालोभादयोयेऽबुधलिंगभावाः॥ तथापिदंडंभगवान्बिभर्तिधर्मस्यगुप्त्यैखलनिग्रहाय॥५॥ पितागुरुस्त्वंजगतामधीशोदुरत्ययः
कालउपात्तदण्डः॥ हितायस्वेच्छातनुभिःसमीहसेमानंविधुन्वन्जगदीशमानिनाम्॥६॥ येमद्विधाज्ञाजगदीशमानिनस्त्वांवीक्ष्य
कालेभयमाशुतन्मदम्॥ ९तोन्वितितत्कृतादेहसंबन्धकृताःदेहस्यहेतवःतद्धेतवःपुनरन्यस्यदेहस्यहेतवःननुज्ञानिनामपितेदृश्यंतेअत
आहअबुधलिङ्गभावाःअज्ञानिनांगमकाःयावद्रागादिमत्वंतावत्ज्ञानित्वमेवनसिद्धमित्यर्थःलोभाद्यभावेपिमन्मानभङ्गेनदण्डार्थमित्याहतथा
पीति॥५॥ ननुत्वद्दण्डेचममगोपपुत्रस्यकाशक्तिःकिंवाकारणंकोवादण्डोमयाकृतइत्यतआहपितेतिजगतांत्वंपिताजनकःगुरुरुपदेष्टाअधी
शःनियन्ताइतिदण्डधारणेहेतुत्रयंकालत्वात्समर्थःतस्मादुपात्तदण्डोहितायकल्याणायस्वेच्छातनुभिःलीलावतारैःसमीहसेतवसमीहालो
केपियथाऽधुनैवातिदृष्टेत्यांअभयंभयमगणयन्तमवीक्ष्यआशुतन्मदंजगदीशइतिमदंहित्वाविगतगर्वाःसन्तःआर्यमार्गेलद्धक्तिलक्षणंप्रभजंति

T

अतस्तवईहैवखलानामनुशासनंदंडइत्यर्थः॥७॥एवंभगवत्स्वरूपंअभिप्रायंचानुवर्ण्यक्षमापयतिसत्वमितिएवंभूताअसतीमतिर्मेपुनर्माभूदि
तिप्रार्थनांतरम्॥८॥महानयमपराधःकथंक्षंतव्यइतिचेदत्तआहतवेति स्वयंभराणांपुनश्चउरुभारजन्मनांबहूनांभाराणांजन्मयेभ्यस्तेषांअभवा
यनाशाययुष्मच्चरणसेविनांतुभवाय अतोममत्वत्सेवकत्वादत्यन्तापराधिनोऽपिक्षंतव्यमितिभावः॥९॥क्षमापयन्नमस्करोतिनमइतितुभ्यं
भगवतेकृष्णायनमःपुरुषायसर्वान्तर्यामिणेमहात्मनेअन्तस्थत्वेप्यपरिच्छिन्नायकुतःवासुदेवायसर्वनिवासायसात्वतांयादवानांपतये॥१०॥
तर्हिकिमहंयादवःनस्वच्छंदोपात्तदेहायस्वेषांभक्तानांछंदेनइच्छयास्वीकृतदेहायतत्रापिविशुद्धंज्ञानमेवमूर्तिर्यस्यतस्मैमाययासर्वस्मैसर्वरू

हित्वार्य्यमार्गंप्रभजंत्यपस्मयाईहाखलानामपितेऽनुशासनम्॥७॥सत्वंममैश्वर्य्यमदप्लुतस्यकृतागसस्तेऽविदुषःप्रभा
वम्।क्षन्तुंप्रभोऽथार्हसिमूढचेतसोमैवंपुनर्भून्मतिरीशमेऽसती॥८॥तवावतारोऽयमधोक्षजेहस्वयंभराणामुरुभार
जन्मनाम्।चमूपतीनामभवायदेवभवाययुष्मच्चरणानुवर्तिनाम्॥९॥नमस्तुभ्यंभगवतेपुरुषायमहात्मने।वासुदेवा
यकृष्णायसात्वतांपतयेनमः॥१०॥स्वच्छन्दोपात्तदेहायविशुद्धज्ञानमूर्तये।सर्वस्मैसर्वबीजायसर्वभूतात्मनेनमः॥११॥
मयेदंभगवन्गोष्ठनाशायासारवायुभिः।चेष्टितंविहतेयज्ञेमानिनातीव्रमन्युना॥१२॥त्वयेशानुगृहीतोऽस्मिध्वस्तस्तंभो
हतोद्यमः।ईश्वरंगुरुमात्मानंत्वामहंशरणङ्गतः॥१३॥श्रीशुकउवाच॥एवंसंकीर्तितःकृष्णोमघोनाभगवानमुम्।
मेघगंभीरयावाचाप्रहसन्निदमब्रवीत्॥१४॥श्रीभगवानुवाच॥मयातेकारिमघवन्मखभङ्गोऽनुगृण्हता॥मदनुस्मृत
येनित्यंमत्तस्येन्द्रश्रियाभृशम्॥१५॥मामैश्वर्य्यश्रीमदांधोदण्डपाणिंनपश्यति॥तंभ्रंशयामिसंपद्भ्योयस्यचेच्छाम्यनुग्र
हं॥१६॥गम्यतांशक्रभद्रंवःक्रियतांमेऽनुशासनम्॥स्थीयतांस्वाधिकारेषुयुक्तैर्वःस्तंभवर्जितैः॥१७॥

(पायकृतःस
र्वस्यबीजायकारणायअतएवसर्वभूतात्मनेनमइति॥११॥कृतागसइत्यनेनोक्तमपराधंनिवेदयतिमयेदमितिआसारवायुभिर्गोष्ठनाशा
यमयेदमकृत्यंविचेष्टितंकृतम्॥१२॥तथापिभोईशत्वयाऽनुगृहीतोऽस्मिअनुग्रहंदर्शयतिध्वस्तस्तंभइतिवृथोद्यमइतिच॥१३॥१४॥इन्द्रे
णस्वाभिप्रायेनिवेदितेभगवानपितथैवाहमयेतिइन्द्रश्रियादेवराज्येन॥१५॥१६॥वःयुष्माभिरितिबहुवचनंवरुणाद्यभिप्रायेणक्वगन्तव्यंस
र्गेपितर्हिवैश्वरत्वादितिचेत्तत्राहक्रियतामितिमदनुशासनेनयथापूर्वंतत्रस्थीयतामितिस्वर्गेःयुक्तैरप्रमत्तैःस्तंभवर्जितैःनिरहंकारैः॥१७॥

स्वसन्तानैर्गोभिःसहउपामन्त्र्यकृष्णकृष्णेत्यादिसम्बोध्य॥१८॥इन्द्रेणाहताअपिभवतासनाथावयंयुक्ताःरक्षिताइत्यर्थः॥१९॥त्वंनःपरमंदैवंदैवतंदेवताअतःहेजगत्पतेगोविप्रदेवानांयेऽन्येचसाधवःतेषांभवायाभ्युदयायअद्यत्वमेवेन्द्रोभव॥२०॥ननुभवतांइन्द्रोस्तीतिचेत्अतआहइन्द्रमितिअलंपुरंदरस्येन्द्रतयेत्यर्थःननुदेवएवइन्द्रोभवतिकथमहंभवेयमितिचेत्तत आहअवतीर्णोसीति॥२१॥सुरभिरात्मनःपयसाभ्यषिञ्चत्इन्द्रश्चाकाशगङ्गयाजलैरभ्यषिञ्चत्॥२२॥देवमातृभिरदित्यादिभिर्देवैर्मातृभिश्चेतिवागाःपशून्गांस्वर्गंवाइन्द्रत्वेनविन्दतीतिकृत्वागोविन्दइतिचाभ्य



अथाहसुरभिःकृष्णमभिवंद्यमनस्विनी।स्वसन्तानैरुपामन्त्र्यगोपरूपिणमीश्वरम्॥१८॥सुरभिरुवाच॥कृष्णकृष्णमहायोगिन्विश्वात्मन्विश्वसंभव।भवतालोकनाथेनसनाथावयमच्युत॥१९॥त्वंनःपरमकंदैवंत्वंनइन्द्रोजगत्पते॥भवायभवगोविप्रदेवानांयेचसाधवः॥२०॥इन्द्रंनस्त्वाऽभिषेक्ष्यामोब्रह्मणानोदितावयम्॥अवतीर्णोसिविश्वात्मन्भूमेर्भारापनुत्तये॥२१॥श्रीशुकउवाच॥एवंकृष्णमुपामन्त्र्यसुरभिःपयसात्मनः।जलैश्चाकाशगङ्गायाऐरावतकरोद्धृतैः॥२२॥इन्द्रःसुरर्षिभिःसाकंनोदितोदेवमातृभिः।अभ्यषिञ्चतदाशार्हंगोविन्दइतिचाभ्यधात्॥२३॥तत्रागतास्तुंबरुनारदादयोगन्धर्वविद्याधरसिद्धचारणाः॥जगुर्यशोलोकमलापहंहरेःसुराङ्गनाःसन्ननृतुर्मुदान्विताः॥२४॥तंतुष्टुवुर्देवनिकायकेतवोह्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः।लोकाःपरांनिर्वृतिमाप्नुवंस्त्रयोगावस्तदागामनयन्पयोद्रुताम्॥२५॥नानारसौघाःसरितोवृक्षाआसन्मधुच्युतः॥अकृष्टपच्यौषधयोगिरयोविभ्रदुन्मणीन्॥२६॥कृष्णेभिषिक्तएतानिसत्वानिकुरुनन्दन॥निर्वैराण्यभवंस्तातक्रूराण्यपिनिसर्गतः॥२७॥इतिगोगोकुलपतिंगोविंदमभिषिच्यसः।अनुज्ञातोययौशक्रोवृतोदेवादिभिर्दिवम्॥२८॥ इतिश्रीभागवतेमहापुराणेदशमस्कन्धेसप्तविंशोऽध्यायः ॥ २७ ॥ ॥

धात्नामकृतवानित्यर्थः॥२३॥२४॥देवनिकायेषुकेतवद्ध्वजवद्दर्शनीयाःमुख्याइत्यर्थःगावःगांपृथ्वींपयोभिर्द्रुतांआर्द्रांअनयन्अकुर्वन्नित्यर्थः॥२५॥नानारसौघाःक्षीरादिवाहिन्यःअकृष्टपच्याःकर्षणंविनैवपक्काःओषधयोव्रीह्यादयःआसन्यद्वाअकृष्टपच्याओषधयोयेषुतेगिरयःउन्मणीन्गर्भगतान्मणीन्उत्उद्गतान्बहिःप्रकटान्अबिभ्रत्अबिभरुः॥२६॥२७॥२८॥अहमिन्द्रोहिदेवानांत्वंगवामिन्द्रतांगतः।गोविन्दइतिलोकेत्वांगास्यन्तिभुविमानवाः॥१॥ इतिदशमेटी॰सप्तविंशोऽध्यायः ॥ २७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

T

अष्टाविंशे ततो नन्दानयनं वरुणालयात्। वैकुण्ठदर्शनञ्चाथ गोपानामनुवर्ण्यते॥ १॥ गोवर्द्धनं समुद्धृत्य वशीकृत्वासुरेश्वरम्। नन्दानयनतः कृष्णो वरुणञ्च वशेऽनयत्॥ २॥ १॥ कलामात्रायां द्वादश्यां पारणादराभिनिवेशेनासुरीं वेलामविज्ञाय अरुणोदयात् पूर्वमेव शास्त्रबलेन निश्चित्य उदकं प्रविष्टं तदनभिज्ञो वरुणस्य भृत्योऽनयदिति। तथा च शास्त्रं। कलार्द्धा द्वादशीं दृष्ट्वा निशीथादूर्द्धमेव हि। आमध्याह्नात् क्रियाः सर्वाः कर्त्तव्याः शंभुशासनादित्यादि वक्ष्यति च वरुणः अजानता मामकेनेति भगवद्धर्ममजानतेत्यर्थः॥ २॥ स्वानां भगवद्धर्मपराणां अभयदः माभैष्टेत्यभयंददत्॥ ३॥ सपर्य्यया अर्हणेन॥ ४॥ अद्य इदानीं मे मया देहो निभृतः धृतः यदा त्वद्दर्शनं जातं तदैव देहसाफल्यं प्राप्तमित्यर्थः यद्वा निभृतः पूर्णमनोरथ इत्यर्थः॥ कि

श्रीशुक उवाच॥ एकादश्यां निराहारः समभ्यर्च्य जनार्द्दनम्। स्नातुं नन्दस्तु कालिन्द्यां द्वादश्यां जलमाविशत्॥ १॥ तं गृहीत्वानयद्भृत्यो वरुणस्यासुरोऽन्तिकम्। अविज्ञायासुरीं वेलां प्रविष्टमुदकं निशि॥ २॥ चुक्रुशुस्तमपश्यन्तः कृष्ण रामेति गोपकाः। भगवांस्तदुपश्रुत्य पितरं वरुणाहृतम्॥ तदन्तिकं गतो राजन् स्वानामभयदो विभुः॥ ३॥ प्राप्तं वीक्ष्य हृषीकेशं लोकपालः सपर्य्यया॥ महत्या पूजयित्वाह तद्दर्शनमहोत्सवः॥ ४॥ वरुण उवाच॥ अद्य मे निभृतो देह अद्यार्थोऽधिगतः प्रभो। त्वत्पादभाजो भगवन्नवापुः पारमध्वनः॥ ५॥ नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने॥ न यत्र श्रूयते माया लोकसृष्टिविकल्पना॥ ६॥ अजानता मामकेन मूढेनाकार्य्यवेदिना॥ आनीतोऽयं तव पिता तद्भवान्क्षन्तुमर्हति॥ ७॥ गोविन्द नीयतामेष पिता ते पितृवत्सल॥ ममाप्यनुग्रहं कृष्ण कर्त्तुमर्हस्यशेषदृक्॥ ८॥ श्रीशुक उवाच॥ एवं प्रसादितः कृष्णो भगवानीश्वरेश्वरः॥ आदायागात्स्वपितरं बन्धूनाञ्चावहन्मुदम्॥ ९॥ नन्दस्त्वतीन्द्रियं दृष्ट्वा लोकपालमहोदयम्॥ कृष्णे च सन्नतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत्॥ १०॥ ते त्वौत्सुक्यधियो राजन्मत्वा गोपास्तमीश्वरम्॥ अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः॥ ११॥

९ अद्यैवार्थोऽधिगतः सर्वरत्नाकरपतिनाऽपि इतः पूर्वं नैवंविधोऽर्थः प्राप्त इत्यर्थः किंच संसारोऽपि निरस्त एवेत्याशयेनाह त्वत्पादभाज इति अध्वनः पारं मोक्षम्॥ ५॥ भगवते निरतिशयैश्वर्य्याय ब्रह्मणे पूर्णाय परमात्मने सर्वजीवनियन्त्रे तत्र हेतुः न यत्रेति लोकसृष्टिं विकल्पयति या माया सा यत्र न श्रूयते अविद्यमानेव तिष्ठतीत्यर्थः॥ ६॥ अजानता मद्भृत्येन त्वत् पित्राहरणं यत्कृतं तदिति॥ ७॥ नन्दं विसृज्य समर्पयतिगोविन्देति॥ ८॥ ९॥ अतीन्द्रियं अदृष्टपूर्वं लोकपालस्य महोदयं ऐश्वर्यम्॥ १०॥ औत्सुक्ययुक्ता धीर्येषां [illegible] अपि [illegible] उपाधास्यत् उपाधास्यति [illegible] निश्चितवन्त इत्यर्थः॥ ११॥ ॥ ॥

इत्येवंभूतंस्वानांस्वेषांसङ्कल्पं अखिलदृक्सर्वज्ञः स्वयमेवविज्ञायतेषांसंकल्पसिद्धयेकृपयैतद्वक्ष्यमाणमचिन्तयत्॥१२॥अविद्यादेहाद्यहंबुद्धिः
ततःकामस्ततःकर्म्मतैरुच्चावचासुदेवतिर्य्यगादिषुभ्रमन्स्वीयाङ्गतिन्नवेद॥१३॥स्वम्ब्रह्मस्वरूपंलोकञ्चवैकुण्ठाख्यंतमसःप्रकृतेःपरम्॥१४
देहा[illegible]तानांदर्शनमशक्यमितिप्रथमं देहादिव्यतिरिक्तंब्रह्मस्वरूपं दर्शयामासतदाहसत्यमितिसत्यंअबाध्यंज्ञानंअजडंअनन्तंअपरिच्छिन्नंज्यो
तिःस्वप्रक[illegible]शंसनातनंशश्वत्सिद्धम्ब्रह्मगुणापायेगुणापायेहेज्ञानिनोयत्पश्यन्तितत्कृपयैवदर्शयामासेति॥१५॥एवंब्रह्महृदंब्रह्मैवह्रदइवह्रदःत
त्रनिमग्नस्यविशेषविज्ञानाभावात् तंब्रह्महृदं तेतुनीताःप्रापिताःतस्मिन्निमग्नाश्चतुशब्दोक्तंविशेषमाहपुनःकृष्णेनउद्धृताःसमाधेरिवोत्थापिताः
[illegible]ण्स्तस्यैवलोकंवैकुण्ठाख्यंददृशुरितिनत्रब्रह्मनिमग्नानांपुनर्ल्लोकदर्शनमघटितमेवेत्याशंक्याहयत्रेतियत्रयस्मिन्कृष्णेनिमित्तेसतिपू
र्वं[illegible]क्रूरोऽध्यगातदृष्टवान्शुकपरीक्षितसंवादात्प्राक्तनत्वात्भूतनिर्द्देशःनह्यतर्क्यैश्वर्य्येभगवतिकिंचिदपिअसंभावितमितिभावःअथवाअक्रूरोयत्र

इतिस्वानांसभगवान्विज्ञायाखिलदृक्स्वयम्॥संकल्पसिद्धयेतेषांकृपयैतदचिन्तयत्॥१२॥जनोवैलोकएत
स्मिन्नविद्याकामकर्म्मभिः।उच्चावचासुगतिषुनवेदस्वाङ्गतिंभ्रमन्॥१३॥इतिसंचिन्त्यभगवान्महाकारुणिकोहरिः।दर्शया
मासलोकंस्वङ्गोपानांतमसःपरम्॥१४॥सत्यंज्ञानमनन्तंयद्ब्रह्मज्योतिःसनातनम्।यद्धिपश्यन्तिमुनयोगुणापायेसमाहिताः
॥१५॥तेतुब्रह्महृदन्नीतामग्नाःकृष्णेनचोद्धृताः॥ददृशुर्ब्रह्मणोलोकंयत्राक्रूरोऽध्यगात्पुरा॥१६॥नन्दादयस्तुतंदृष्ट्वापरमान
न्दनिर्वृताः।कृष्णञ्चतत्रच्छन्दोभिःस्तूयमानंसुविस्मिताः॥१७॥इतिश्रीभागवतेम०दशम०अष्टाविंशोऽध्यायः॥२८॥श्रीशुक
उवाच॥भगवानपिताराात्रीःशरदोत्फुल्लमल्लिकाः।वीक्ष्यरन्तुंमनश्चक्रेयोगमायामुपाश्रितः॥१॥तदोडुराजःककुभःकरैर्मुखं
प्राच्याविलिंपन्नरुणेनशन्तमैः॥

१दृष्टवान्तस्ययमुनाहृदस्यब्रह्महृदइतिनामतंह्रदन्नीताःसन्तोब्रह्मणोलोकंददृशुःपुनश्चकृष्णेनोद्धृ
ताःपूर्ववत्तंदृष्ट्वाविस्मिताबभूवुरितिव्यवहितान्वयोऽप्रसिद्धकल्पनाचसोढव्येति॥१६॥१७॥इतिदशमेटीकायामष्टाविंशतितमोऽध्यायः॥२८॥ऊ
नत्रिंशेतुरासार्थमुक्तिप्रयुक्तयोहरेः।गोपीभीरासंसंरंभेतस्यचान्तर्द्धिकौतुकम्॥१॥ब्रह्मादिजयसंरूढमूढकन्दर्प्पदर्प्पहा।जयतिश्रीपतिर्गोपीरास
मण्डलमण्डनः॥२॥ननुविपरीतमिदंपरदारविनोदेनकन्दर्पविजेतृत्वप्रतीतिःमैवम्योगमायामुपाश्रितःआत्मारामोऽप्यरीरमत्साक्षान्मन्मथमन्मथः
आत्मन्यवरुद्धसौरतइत्यादिषुस्वातंत्र्याभिधानात्तस्माद्रासक्रीडाविडंबनंकामविजयख्यापनायेत्येवतत्त्वम्किन्चशृङ्गारकथोपदेशेनविशेषतोनिवृ
त्तिपरेयंपंचाध्यायीतिव्यक्तीकरिष्यामःताराात्रीःयाताबलाव्रजंसिद्धामयेमारंस्यथक्षपाइतिप्रतिश्रुताइत्यर्थः॥१॥तदातस्मिन्नेवक्षणेतत्प्रीतयेउडुराजश्च

किंकुर्वन्दीर्घकालेनदर्शनंयस्यसः प्रियः स्वप्रियायाः मुखंअरुणेनकुंकुमेनयथाविलिंपतितथाप्राच्याः ककुभोदिशः मुखंशन्तमैः सुखतमैः करैर
श्मिभिः अरुणेनउदयरागेणविलिंपन्नरुणीकुर्वन्नित्यर्थः सप्रसिद्धः उडुराजः चर्षणीनांजनानांशुचस्तापग्लानीः मृजन्अपनयन्॥२॥कुमुत
कुमुदंविकसनीयंविद्यतेयस्यतंकुमुद्वन्तंनखण्डंमण्डलंयस्यतंरमायाआननस्यआभेवआभायस्यतम् नवकुंकुममिवअरुणंएवंविधंचंद्रंदृष्ट्वा
तथाचवनंतस्यकोमलैर्गोभिः रश्मिभीरञ्जितंदृष्ट्वाकलंमधुरंजगौअगायतकथंवामदृशांवामाःमनोहरादृशोयासांतासांमनोहरंयथा॥३॥असा
पत्यार्थंअन्योन्यमलक्षितःनज्ञापितःउद्यमोयाभिस्ताः सकान्तोयत्रतत्रगीतध्वनिमार्गेणजग्मुः जवेनवेगेनलोलानिचञ्चलानिकुण्डलानियासां
ताः॥४॥श्रीकृष्णसूचकशब्दश्रवणेनतत्प्रवणचित्तानांतत्क्षणमेववर्णितवर्गिककर्मनिवृत्तिंद्योतयन्त्यइवार्द्धावसितंकर्मविहायययुःतदाहदुहन्त्य

सचर्षणीनामुदगाच्छुचोमृजन् प्रियः प्रियायाइवदीर्घदर्शनः॥२॥दृष्ट्वाकुमुद्वन्तमखण्डमण्डलंरमाननाभंनवकुङ्कुमारु
णम्वनञ्चतत्कोमलगोभिरञ्जितंजगौकलंवामदृशांमनोहरम्॥३॥निशम्यगीतंतदनङ्गवर्द्धनंव्रजस्त्रियःकृष्णगृहीत
मानसाः।आजग्मुरन्योन्यमलक्षितोद्यमाःसयत्रकान्तोजवलोलकुण्डलाः॥४॥दुहन्त्योऽभिययुःकाश्चिद्दोहंहित्वास
मुत्सुकाः।पयोऽधिश्रित्यसंयावमनुद्वास्यापरायुः॥५॥परिवेषयन्त्यस्तद्धित्वापाययन्त्यःशिशून्पयः।शुश्रूषन्त्यःपतीन्का
श्चिदश्नन्त्योऽपास्यभोजनम्॥६॥लिम्पन्त्यःप्रमृजन्त्योऽन्याअञ्जन्त्यःकाश्चलोचने।व्यत्यस्तवस्त्राभरणाःकाश्चित्कृष्णा
न्तिकंययुः॥७॥तावार्यमाणाःपतिभिःपितृभिर्भ्रातृबन्धुभिः।गोविन्दापहृतात्मानोनन्यवर्तन्तमोहिताः॥८॥अन्त
र्गृहगताःकाश्चिद्गोप्योऽलब्धविनिर्गमाः।कृष्णंतद्भावनायुक्तादध्युर्मीलितलोचनाः॥९॥दुःसहप्रेष्ठविरहतीव्रतापधु
ताशुभाः।ध्यानप्राप्ताच्युताश्लेषनिर्वृत्याक्षीणमङ्गलाः॥१०॥तमेवपरमात्मानंजारबुद्ध्यापिसंगताः॥ ९इतिपयःस्थालीस्थं

चुल्लीमधिश्रित्यैतत्क्वाथमप्रतीक्षमाणाःकाश्चिद्ययुःसंयावङ्गोधूमकणान्नम् पक्वंअनुद्वास्यअनुत्तार्य॥५॥६॥अन्याःप्रमृजन्त्यःअङ्गोद्वर्तना
दिकुर्वन्त्यःकाश्चकाश्चित्कृष्णातुस्यर्थेङ्गःमतदासक्तमनसा अन्यथाकृतमपिफलत्येवेतिद्योतयन्नाहव्यत्यस्तेतिस्थानतःस्वरूपतश्चोर्द्धाधोधा
र्येनविपर्ययंप्राप्तानिवस्त्राभरणानियासांताः॥७॥नचकृष्णाकृष्टमनसांविघ्नाःप्रभवन्तीत्याहतावार्यमाणाइति॥८॥नलब्धोविनिर्गमोयाभिस्ताः
प्रागपितद्भावनायुक्तास्तदानितरांदध्युरित्यर्थः॥९॥किञ्चतदानीमेवतंपरमात्मानंश्रीकृष्णंध्यानतःप्राप्ताःसत्यःगुणमयंदेहंजहुरित्याहश्लोकद्वये
नतमेवेति॥१०॥ननुकथंनद्वःपरमात्मेतिज्ञानाभावादित्याशङ्क्याहजारबुद्ध्यापीतिनहिवस्तुशक्तिर्बुद्धिमपेक्षतेअन्यथामृतापिपीतासू॥

तत्वदितिभावः ननुतदपिप्रारब्धकर्मबन्धनेसतिकथञ्जहुस्तत्राहसद्यःप्रक्षीणबन्धनाइतिननुकथंभोगमन्तरेणप्रारब्धकर्मक्षीणंभोगेनैवसद्यः
क्षीणमित्याहदुःसहेति दुस्सहोयःप्रेष्ठस्यविरहः [illegible] तेनतीव्रतापस्तेनधुतानिनिरस्तानिअशुभानियासान्ताः तदप्राप्तिपरमदुःखभोगेनपापंक्षीणमित्य
र्थः त [illegible] ध्यानेनप्राप्ता अच्युतस्य आश्लेषेणयानिर्वृतिः परमसुखभोगःतयाक्षीणंमङ्गलंपुण्यबन्धनंयासान्ताः अतोध्यानेनपरमात्मप्राप्तेस्तत्काल
सुखदुःखाभ्यांनिःशेषकर्मक्षयात् गुणमयंदेहंजहुरिति॥११॥ननुयथापतिपुत्रादीनांवस्तुतोब्रह्मत्वेपिनतद्भजनान्मोक्षस्तथाबुद्ध्यभावात्त
थाकृष्णेपिब्रह्मबुद्ध्यभावेनतत्सङ्गतिःकथम्मोक्षहेतुरितिशङ्कतेकृष्णंविदुरितिपरङ्केवलङ्कान्तंकमनीयंविदुःनब्रह्म॥१२॥परिहरतिउक्तमि
[illegible] देहादिःजीवेष्वावृतम् ब्रह्मत्वंकृष्णस्यतुहृषीकेशत्वादनावृतम् अतोनतत्रबुद्ध्यपेक्षेति॥१३॥ननुदेहीकथंअनावृतःस्यादतआहनृणामि

जहुर्गुणमयंदेहंसद्यःप्रक्षीणबन्धनाः॥११॥राजोवाच॥कृष्णंविदुःपरंकान्तंनतुब्रह्मतयामुने।गुणप्रवाहोपरमस्तासां
गुणधियांकथम्॥१२॥श्रीशुकउवाच॥उक्तंपुरस्तादेतत्तेचैद्यःसिद्धिंयथागतः।द्विषन्नपिहृषीकेशंकिमुताधोक्षजप्रियाः
॥१३॥नृणांनिःश्रेयसार्थायव्यक्तिर्भगवतोनृप।अव्ययस्याप्रमेयस्यनिर्गुणस्यगुणात्मनः॥१४॥कामंक्रोधंभयंस्नेहमैक्यं
सौहृदमेवच।नित्यंहरौविदधतोयान्तितन्मयतांहिते॥१५॥नचैवंविस्मयःकार्य्योभवताभगवत्यजे।योगेश्वरेश्वरेकृ
ष्णेयतएतद्विमुच्यते॥१६॥ताढृष्ट्वान्तिकमायाताभगवान्व्रजयोषितः।अवदद्वदतांश्रेष्ठोवाचःपेशैर्विमोहयन्॥१७॥श्री
भगवानुवाच॥स्वागतंवोमहाभागाःप्रियङ्किंकरवाणिवः।व्रजस्यानामयंकच्चिद्ब्रूतागमनकारणम्॥१८॥रजन्येषाघोर
रूपाघोरसत्वनिषेविता।प्रतियातव्रजंनेहस्थेयंस्त्रीभिःसुमध्यमाः॥१९॥मातरःपितरःपुत्राभ्रातरःपतयश्चवः।विचिन्व
न्तिह्यपश्यन्तोमाकृध्वंबंधुसाध्वसम्॥२०॥दृष्टंवनंकुसुमितंराकेशकररञ्जितम्।यमुनानिललीलैजत्तरुपल्लवशोभितम्॥२१॥

तिगुणात्मनःगुणनियन्तुर्भगवतएवंरूपाभिव्यक्तिः अतोनदेहिसादृश्यमत्रवक्तुंप्रयुज्यतइतिभावः॥१४॥अतोयथाकथंचित्तदाशक्तिर्मुक्ति
कारणमित्याहकाममितिऐक्यंसंबन्धंसौहृदंभक्तिम्॥१५॥नचभगवतोयमतिभारइत्याहनचैवमितियतःश्रीकृष्णादेतत्स्थावरादिकमपिविमुच्य
ते॥१६॥प्रस्तुतमाहताढृष्ट्वेतिवाचःपेशैर्वाग्विलासैः॥१७॥सर्वाःससम्भ्रममागताविलोक्यसभयमिवाहव्रजस्येति॥१८॥लज्जयामन्दहसितमाल
क्ष्याहरजन्येषेति॥१९॥किञ्चमातरइतिविचिन्वन्तिमृगयन्तेबन्धूनांसाध्वसङ्कष्टंमाकृध्वंमाकुरुतेत्यर्थः॥२०॥ईषत्प्रणयकोपेनान्यतोविलोकयन्तीः
प्रत्याहदृष्टमितिराकेशस्यपूर्णचंद्रस्यकरैरञ्जितंयमुनास्पर्शिनोनिलस्यलीलामन्दगतिस्तयाएजन्तःकंपमानाःतरूणांपल्लवास्तैःशोभितम्॥२१॥

सतीःहेसत्यः॥२२॥संरंभसुभितदृशीःइत्याह अथवेतियंत्रिताशयाःवशीकृतचित्ताःउपपन्नंयुक्तंप्रीयन्तेप्रीताभवंति॥२३॥दृष्टादृष्टभयप्रदर्शनेननि
वर्तयतिभर्तुरित्यादिश्लोकत्रयेण॥२४॥२५॥फल्गुतुच्छंकृच्छ्रंदुःखसंपादकंऔपपत्यंजारसौख्यम्॥२६॥किञ्चश्रवणादिति॥२७॥२८॥चिन्तां
प्राप्तानांस्थितिमाहकृत्वेतिशुचःशोकादुद्भवेनश्वसनेनशुष्यन्तोबिम्बफलसदृशाअधरायेषुमुखेषुतानिअवांचिकृत्वातथाअङ्गुष्ठेनमहींलिखन्त्यः
तथागृहीतकज्जलैरश्रुभिःकुचकुंकुमानिक्षालयन्त्यःतूष्णींस्थिताःयतःऊरुदुःखभरोभारोयासान्ताः॥२९॥किञ्चप्रेष्ठमितिकिंचित्संरंभेणकोपावेशे
नगद्गदागिरोयासांताःअब्रुवतस्मसंरंभेकारणंप्रेष्ठमित्यादिप्रियेतरमिवप्रतिभाषमाणंप्रत्याचक्षाणम्॥३०॥नृशंसंक्रूरंदुरवग्रहहेस्वच्छंदतवपाद

तद्यातमाचिरङ्गोष्ठंशुश्रूषध्वंपतीन्सतीः।क्रन्दन्तिवत्साबालाश्चतान्पाययतदुह्यत॥२२॥अथवामदभिस्नेहाद्भवत्योयं
त्रिताशयाः।आगताह्युपपन्नंवःप्रीयन्तेमयिजन्तवः॥२३॥भर्तुःशुश्रूषणंस्त्रीणांपरोधर्मोह्यमायया।तद्बन्धूनांचकल्याण्यः
प्रजानांचानुपोषणम्॥२४॥दुःशीलोदुर्भगोवृद्धोजडोरोग्यधनोपिवा।पतिःस्त्रीभिर्नहातव्योलोकेप्सुभिरपातकी॥२५॥अ
स्वर्ग्यमयशस्यंचफल्गुकृच्छ्रंभयावहम्।जुगुप्सितंचसर्वत्रऔपपत्यंकुलस्त्रियाः॥२६॥श्रवणाद्दर्शनाद्ध्यानान्मयिभावो
ऽनुकीर्तनात्।नतथासन्निकर्षेणप्रतियाततोगृहान्॥२७॥श्रीशुकउवाच॥इतिविप्रियमाकर्ण्यगोप्योगोविन्दभाषित
म्।विषण्णाभग्नसंकल्पाश्चिन्तामापुर्दुरत्ययाम्॥२८॥कृत्वामुखान्यवशुचःश्वसनेनशुष्यद्बिम्बाधराणिचरणेनभुवंलिखं
त्यः।अस्रैरुपात्तमषिभिःकुचकुंकुमानितस्थुर्मृजन्त्यउरुदुःखभराःस्मतूष्णीम्॥२९॥प्रेष्ठंप्रियेतरमिवप्रतिभाषमाणंकृ
ष्णंतदर्थविनिवर्तितसर्वकामाः।नेत्रेविमृज्यरुदितोपहतेस्मकिंचित्संरंभगद्गदगिरोऽब्रुवतानुरक्ताः॥३०॥गोप्यऊचुः॥
मैवंविभोऽर्हतिभवान्गदितुंनृशंसंसंत्यज्यसर्वविषयांस्तवपादमूलम्।भक्ताभजस्वदुरवग्रहमात्यजास्मान्देवोयथादि
पुरुषोभजतेमुमुक्षून्॥३१॥यत्पत्यपत्यसुहृदामनुवृत्तिरङ्गस्त्रीणांस्वधर्मइतिधर्मविदात्वयोक्तम्॥

मूलंभक्ताःसेवितवतीर
स्मान्भजस्वमात्यजेति॥३१॥अपिचयदुक्तंयत्पत्यपत्येत्यादित्वयाधर्मविदेतिसोपहासमेवैतत्उपदेशानांपदेविषयेत्वय्येवास्तुउपदेशप
दस्तेहेतुःईशइतिविविदिषावाक्येनसर्वोपदेशानामीशपरत्वावगमादितिभावःईशत्वेहेतुःआत्माकिलभवानितिभोग्यस्यहिसर्वस्यभो
क्ताआत्मैवेशइतिअतःप्रेष्ठोबंधुश्चभवानेवेतिसर्वबन्धुषुकरणीयंत्वय्येवास्त्वित्यर्थःअथवाधर्मोपदेशानांपदेस्थानेधर्मोपदेष्टरित्व
[illegible]अस्माकंचधर्मो[illegible]त्वयाधर्मविदायदुक्तंएवमेतदस्तु[illegible]धर्मोपदेश[illegible]भवान[illegible]अथवायदुक्तंएत




इपदेशपदेतद्दोचरेपुरुषेऽस्तुनामत्वयितुईशेस्वामिनिसतिएवंकाकानेवमित्यर्थःयस्तत्रभूतांत्वमात्माफलरूपइतियद्वायदुक्तंपत्यादिशुश्रू

दुपदेशपदे तन्नो चरे प्रुरुषेऽस्तु नाम त्वयि तु ईशे स्वामिनि सति एवं का का निवमित्यर्थः यस्त्वनुभृतां त्वमात्मा फलरूपइति यद्वा यदुक्तं पत्यादिशुश्रू
षणं धर्म्म इति एवमेतत्त्वय्येवास्तु कुतः उपदेशपदे शुश्रूषणीयत्वेनोपदिश्यमानानां पत्यादीनां पदे अधिष्ठाने कुतः ईशे न हि ईश्वरमधिष्ठानं विना



क्वापि पतिपुत्रादिर्नामेति अन्यत्समानं अलमतिविस्तरेण ॥ ३२ ॥ एततत्सदाचारेण दृढयन्त्यः प्रार्थयन्ते कुर्वन्तीति शास्त्रनिपुणाः तथा च शास्त्रम् किं प्र
जया करिष्यामो येषां नोऽयमात्मा लोक इत्यादि ॥ ३३ ॥ किंच प्रतियातेति यदुक्तं तदशक्यं त्वयैव चित्तादीनामपहृतत्वादित्याहुः । चित्तमिति यदस्माकं
चित्तमेतावन्तं कालपर्यन्तं सुखेन गृहेषु निर्विशति तत्त्वयाऽपहृतं करावपि यो गृहकृत्ये निर्विशतः तावपि मुखावलम्बनात्वयेति वा ॥ ३४ ॥ अत अङ्ग हे कृ
ष्ण ! अस्माकं तवाधरामृतपूरकेण तवैव हाससहितेनावलोकेन कलगीतेन च जातो यो हृच्छयाग्निः कामाग्निस्तं सिंच नो चेद्वयं तावदेकोग्निस्त

अस्त्वेवमेतदुपदेशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बंधुरात्मा ॥ ३२ ॥ कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्नित्य
प्रिये पतिसुतादिभिरार्त्तिदैः किम् । तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या आशां भृतां त्वयि चिरादरविन्दनेत्र ॥ ३३ ॥ चित्तं सुखेन
भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये । पादौ पदं न चलतस्तव पादमूलाद्यामः कथं व्रजमथो करवाम
किं वा ॥ ३४ ॥ सिञ्चाङ्ग नस्त्वदधरामृतपूरकेण हासावलोककलगीतजहृच्छयाग्निम् । नो चेद्वयं विरहजाग्न्युपयुक्तदेहा
ध्यानेन याम पदयोः पदवीं सखे ते ॥ ३५ ॥ यर्ह्यम्बुजाक्ष तव पादतलं रमाया दत्तक्षणं क्वचिदरण्यजनप्रियस्य । अस्प्राक्ष्म
तत्प्रभृति नान्यसमक्षमङ्ग स्थातुं त्वयाभिरमिता बत पारयामः ॥ ३६ ॥ श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या लब्ध्वाऽपि व
क्षसि पदं किल भृत्यजुष्टम् । यस्याः स्ववीक्षणकृतेऽन्यसुरप्रयासस्तद्वद्वयञ्च तव पादरजः प्रपन्नाः ॥ ३७ ॥ ७ ॥ ७ ॥

या विरहाज्जनिष्यते योग्निस्तेन च उपयुक्तदेहाः दग्धशरीराः योगिन इव ते पदवीमन्तिकं ध्यानेन याम प्राप्नुयाम ॥ ३५ ॥ ननु स्वपतीनेवोप
गच्छत ते एवाग्निं सिंचेयुरिति चेत्तत्राहुः यर्हीति रमायाः लक्ष्म्याः दत्तक्षणं दत्तोत्सवं दत्तावसरं वा तदपि क्वचिदेव न सर्वदा अरण्यजनाः
प्रिया यस्य तव अरण्यजनप्रियत्वाद् अरण्ये क्वचित् यर्हि अस्प्राक्ष्म स्पृष्टवत्यो वयं तत्र च त्वया अभिरमिता आनंदिताः सत्यः तदारभ्य अन्यस
मक्षं स्थातुमपि न पारयामः तुच्छास्ते न रोचन्त इत्यर्थः ॥ ३६ ॥ त्वत्पादसौभाग्यं त्वतिचित्रमित्याहुः श्रीरिति वक्षसि असापत्न्यं स्थानं लब्ध्वा
पि तुलस्याः सपत्न्याः सह तव पदांबुजरजः कामयते स्म भृत्यैः सर्वैर्जुष्टमिति सौभाग्यातिरेकोक्तिः यस्याः स्ववीक्षणकृते श्रीरात्मानं वि
लोकयत्विति एतदर्थमन्येषां ब्रह्मादीनां तपोभिः प्रयासः सा तद्रजस्तद्वद्वयमपि प्रपन्ना इति ॥ ३७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

T

हेवृजिनार्द्दन दुःखहन्तः त्वदुपासनेलद्गुजनएव आशायासान्ताः वयंवसतीर्गृहान् विसृज्यहित्वा योगिनइव प्राप्ताः तवसुन्दरस्मितविलसित निरीक्षणेन यस्तीव्रः कामस्तेन तप्तात्मनां हेपुरुषरत्न दास्यंदेहि॥३८॥ ननुगृहस्वाम्यंविहाय दास्यंकिमितिप्रार्थ्यते अत आहुः वीक्ष्येति अलका वृतमुखं के शांतरेरावृतं मुखं तथा कुण्डलयोः श्रीर्ययोस्तेगण्डस्थले यस्मिन् अधरे सुधा यस्मिन् तच्चतच्च तवमुखं वीक्ष्य दत्ताभयभुजदंडयुग्मं वक्षश्च श्रियाएकमेवरमणं रतिजनकं वीक्ष्य दास्य एवभवामेति॥३९॥ ननु गुणस्मितमौपपत्यमित्युक्तं तत्राहुः कास्त्रीति अङ्ग हे श्रीकृष्ण कलानि पदानिय स्मिंस्त् आयतं दीर्घं मूर्छितं स्वरालापभेदस्तेन पाठान्तरे कलपदामृतमयं वेणुगीतं तेन सम्मोहिता का वा स्त्री आर्य्यचरितान्निजधर्मात् नचलेत् यन्मोहिताः

तन्नः प्रसीद वृजिनार्द्दन तेंऽघ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः। त्वत्सुंदरस्मितनिरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण देहि दास्यम्॥३८॥ वीक्ष्यालकावृतमुखं तव कुंडलश्रीगण्डस्थलाधरसुधं हसितावलोकम्। दत्ताभयञ्च भुजदण्डयुगं विलोक्य वक्षः श्रियैकरमणञ्च भवाम दास्यः॥३९॥ कास्त्र्यङ्ग ते कलपदायतवेणुगीतसंमोहितार्य्यचरितान्न चलेत्त्रिलोक्याम्। त्रैलोक्यसौभगमिदञ्च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्॥४०॥ व्यक्तं भवान्व्रजभयार्तिहरोऽभिजातो देवो यथादिपुरुषः सुरलोकगोप्ता। तन्नो निधेहि करपंकजमार्तबन्धो तप्तस्तनेषु च शिरस्सु च किङ्करीणाम्॥४१॥ श्रीशुक उवाच॥ इति विक्लवितं तासां श्रुत्वा योगेश्वरेश्वरः। प्रहस्य सदयं गोपीरात्मारामोऽप्यरीरमत्॥४२॥ ताभिः समेताभिरुदारचेष्टितः प्रियेक्षणोत्फुल्लमुखीभिरच्युतः। उदारहासद्विजकुन्ददीधितिर्व्यरोचतैणाङ्क इवोडुभिर्वृतः॥४३॥ उपगीयमान उद्गायन्वनिताशतयूथपः। मालां बिभ्रद्वैजयन्तीं व्यचरन्मंडयन्वनम्॥४४॥ नद्याः पुलिनमाविश्य गोपीभिर्हिमवालुकम्। रेमे तत्तरलानन्दकुमुदामोदवायुना॥४५॥ बाहुप्रसारपरिरंभकरालकोरुनीवीस्तनालभननर्मनखाग्रपातैः। क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणामुत्तंभयन्रतिपतिं रमयांचकार॥४६॥ एवं भगवतः कृष्णाल्लब्धमाना महात्मनः। आत्मानं मेनिरे स्त्रीणां मानिन्योऽभ्यधिकं भुवि॥४७॥

पुरुषाः अपि चलिताः किञ्च त्रैलोक्यसौभगमिति यद्यतः अबिभ्रन् अबिभरुः त्वद्द्योतकशब्दश्रवणेनापि तावन्निजधर्मत्यागो युक्तः किंपुनस्त्वदनुभवेनेतिभावः॥४०॥ व्यक्तं निश्चितम्॥४१॥ विक्लवितं पारवश्यप्रलपितं गोपीररीरमत् रमयामास॥४२॥ प्रियस्येक्षणेन उत्फुल्लानि मुखानि यासां ताभिः उदारहासश्च द्विजाश्च ते एव कुन्दकुसुमवद्दीधितिर्यस्य सः एणाङ्कश्चन्द्रः॥४३॥४४॥४५॥ बाहुप्रसारश्च परिरंभश्च करादीनां आलभनं स्पर्शश्च नर्म परिहासश्च नखाग्रपातश्च तैः क्ष्वेल्या क्रीडया च अवलोकैश्च हसितैश्च कामं तासामुदीपयंस्ता रमयामास॥४६॥ महात्मनो विमुक्तकि चात्॥४७॥



तत्सौभगमदं अस्वाधीनतां मानं गर्वं केशवः कश्च ईशश्च तौ वशयतः इति तथा सः अन्तर्धानङ्गतः॥४८॥ इतिश्रीभागवते महापुराणे दशमस्कन्धे रास

तस्त्वौभगमदं अस्वाधीनतां मानं गर्वं केशवः कश्चई शश्च तौ वशयतइतितथासः अन्तर्धानङ्गतः॥४८॥ इतिश्रीभागवते महापुराणे दशमस्कन्धे रास
पञ्चाध्याय्यां स्वेकोनत्रिंशोध्यायः॥२९॥ त्रिंशे विरहतप्तानां गोपीनां कृष्णमार्गणम् उन्मत्तवन्मिथस्तत्तत्क्रीडाभिर्वनेवने॥१॥ अचक्षाणाः अपश्यन्त्यः



॥१॥ गत्याच अनुरागस्मिताभ्यां विभ्रमेक्षितानि सविलासनिरीक्षणानि तैश्च मनोरमा आलापाश्च विहाराः क्रीडाश्च विभ्रमा अन्ये च विलासास्तैरमाप
तेर्गत्यादिभिस्तैराक्षिप्तानि आकृष्टानि चित्तानि यासान्ताः अतस्तस्मिन्नेवात्मा यासान्ताः तस्य विविधाश्चेष्टा जगृहुः तदनुकरणेनाक्रीडन्नाक्री
डन्त्य॥२॥ अपिचगतिस्मितेति प्रियस्य गत्यादिषु प्रतिरूढा आविष्टा मूर्तयो यासान्ताः अतः कृष्णविहारविभ्रमाः कृष्णस्येव विहारविभ्रमाः क्री

तासांतत् सौभगमदं वीक्ष्य मानञ्च केशवः। प्रशमाय प्रसादाय तत्रैवान्तरधीयत॥४८॥ इतिश्रीभाग० दश० एकोनत्रिंशो
ऽध्यायः॥२९॥ श्रीशुक उवाच॥ अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः। अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम्॥१॥ गत्या
नुरागस्मितविभ्रमेक्षितैर्मनोरमालापविहारविभ्रमैः। आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मि
काः॥२॥ गतिस्मितप्रेक्षणभाषणादिषु प्रियाः प्रियस्य प्रतिरूढमूर्तयः॥ असावहन्त्वित्यबलास्तदात्मिका न्यवेदिषुः कृष्णवि
हारविभ्रमाः॥३॥ गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनम्। पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्तं पु
रुषं वनस्पतीन्॥४॥ दृष्टो वः कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मनः। नन्दसूनुर्गतो हृत्वा प्रेमहासावलोकनैः॥५॥ कच्चित्कुरब
काशोकनागपुन्नागचंपकाः। रामानुजो मानिनीनां गतो दर्प्पहरस्मितः॥६॥ कच्चित्तुलसि कल्याणि गोविन्दचरणप्रिये। स
हत्वाऽलिकुलैर्बिभ्रद्दृष्टस्तेऽतिप्रियोऽच्युतः॥७॥ मालत्यदर्शि वः कच्चिन्मल्लिके जातियूथिके। प्रीतिं वो जनयन्यातः कर
स्पर्शेन माधवः॥८॥ ९ डाविलासाः यासान्ताः अहमेव कृष्ण इति परस्परं निवेदितवत्य॥३॥ किञ्च गायन्त्य इति वनाद्वनान्तरं गच्छन्त्यो
विचिक्युः अमृगयन् उन्मत्ततुल्यत्वमाह वनस्पतीन् पप्रच्छुः भूतेषु अन्तरमध्ये सन्तं पुरुषं बहिश्च सन्तमिति॥४॥ तत्र पञ्चयतिनवभिः तत्र महत्त्वा
देते पश्येयुरित्याशया अश्वत्थादीन्पृच्छन्ति दृष्ट इति प्रेमहासविलसितैरवलोकनैरस्माकं मनो हृत्वा चोर इव गतो वो युष्माभिः किं दृष्ट इति
॥५॥ महान्तः स्वपुष्पैर्बहूपकारिणश्चेति कुरवकादीन्पृच्छन्ति कच्चिदिति हे कुरबकादयः दर्प्पहरं स्मितं यस्य सः इतो गतः कच्चिदिति॥६॥ अ
लिकुलैः सह तां बिभ्रत्त्वाऽतिप्रियस्त्वया किं दृष्ट इति॥७॥ गुणातिरेकेपि नम्रलादिमाः पश्येयुरिति पृच्छन्ति मालतीति हे मालति मल्लिके
जातियूथिके वः युष्माभिः किं अदर्शि दृष्टः करस्पर्शेन वः प्रीतिं जनयन् किं यात इति अत्र मालतीजात्योरवान्तरविशेषो द्रष्टव्यः ॥ ८ ॥ ॥

T

फलादिभिः सर्वप्राणिनां सन्तर्प्पकाः एते पश्येयुरिति पृच्छन्ति चूतेति चूताम्रयोरवांतरजातिभेदः कदम्बनीपयोश्च हे चूतादयः येऽन्ये च परार्थभवकाः परार्थमेव भवो जन्म येषान्ते यमुनोपकूलाः तस्याः कूलसमीपे वर्तमानाः तीर्थवासिन इत्यर्थः ते भवन्तः रहितात्मनां शून्यचेतसां नः कृष्णपदवीं कृष्णस्य मार्गं शंसंतु कथयन्तु॥९॥ हे क्षिति क्षिते ते त्वया किं तपः कृतं यात्वं केशवांघ्रिस्पर्शोत्सवा केशवस्यांघ्रिस्पर्शे न उत्सवो यस्याः सा कुतः अङ्गरुहै रुत्पुलकितारोमांचिता विभासि शोभसे तत्र विशेषं पृच्छन्ति अपि किं अयमुत्सवः अंघ्रिसंभवः अधुनातवैकदेशांघ्रिस्पर्शसंभूतः यद्वा नैतावत् किन्तु उरुक्रमविक्रमात् पूर्वमेव त्रिविक्रमस्य पदा सर्वाक्रमणात् आहो अथवा नैतावत् एवं अपि तु ततोपि पूर्वं वराहस्य वपुषः परिरंभणेनेति अतस्त्वया नूनं दृष्टस्तं दर्शयेति॥१०॥ हरिण्याः दृष्टिप्रत्यासत्त्या कृष्णदर्शनं संभाव्याहुः अपीतिहे सखि एणपत्नि अपि किं उपगतः समीपे गतः गात्रैः सुन्दरैः सुखबाह्वादिभिः प्रियया सह इतियदुक्तं तत्द्योतकं कांतायाः अङ्गं तद्गतकुचकुंकुमेन रञ्जितायाः कुन्दकुसुमस्त्रजो गंधः कुलपतेः श्रीकृष्णस्य वाति आगच्छति॥११॥

चूतप्रियालपनसासनकोविदारजंब्वर्कबिल्वबकुलाम्रकदंबनीपाः। येऽन्ये परार्थभवका यमुनोपकूलाः शंसन्तु कृष्णपदवीं रहितात्मनां नः॥९॥ किन्ते कृतं क्षिति तपो बत केशवांघ्रिस्पर्शोत्सवोत्पुलकितांगरुहैर्विभासि। अप्यंघ्रिसंभव उरुक्रमविक्रमाद्वा आहो वराहवपुषः परिरंभणेन॥१०॥ अप्येणपत्न्युपगतः प्रिययेह गात्रैस्तन्वन्दृशां सखि सुनिर्वृतिमच्युतो वः। कान्ताङ्गसङ्गकुचकुंकुमरंजितायाः कुंदस्त्रजः कुलपतेरिह वाति गन्धः॥११॥ बाहुं प्रियांस उपधाय गृहीतपद्मो रामानुजस्तुलसिकालिकुलैर्मदान्धैः। अन्वीयमान इह वस्तरवः प्रणामं किं वाभिनन्दति चरन्प्रणयावलोकैः॥१२॥ पृच्छतेमा लता बाहूनप्याश्लिष्टा वनस्पतेः। नूनं तत्करजस्पृष्टा बिभ्रत्युत्पुलकान्यहो॥१३॥ इत्युन्मत्तवचो गोप्यः कृष्णान्वेषणकातराः। लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः॥१४॥ कस्याश्चित्पूतनायन्त्याः कृष्णायन्त्यपिबत्स्तनम्। तोकायित्वा रुदत्यन्या पदाहन् शकटायतीम्॥१५॥

फलभारेणनतांस्तरून् कृष्णं दृष्ट्वा प्रणताइति मत्वा प्रियया सह तस्य गतिविलासं संभावयन्त्यः पृच्छन्ति बाहुमिति तुलसिकायाः अलिकुलैः अतस्तदामोदमदान्धैः अन्वीयमानः अनुगम्यमानः इह चरन्निति॥१२॥ काश्चिदाहुः हे सख्य इमा लताः कृष्णेन सङ्गतानूनं अत इमाः पृच्छत ननु स्वपतिसङ्गतो तत्सङ्गतिर्दुर्घटा नवनस्पतेः पत्युर्बाहूनाश्लिष्टा अपि अहो भाग्यं नूनं तन्नखैः स्पृष्टाः यतः उत्पुलकानि बिभ्रति न हि स्वपतिसंगता वीदृक्पुलकसंभव इति भावः॥१३॥ उन्मत्तवत्प्रस्फुरितेयं तत्प्रपंचितम् इदानीं समापतेस्तास्ता विचेष्टा जगद् इस्तदात्मिका इतियदुक्तं तत्प्रपञ्चयति इतीति उन्मत्तवचो गोप्यः उन्मत्तवचसश्च ता गोप्यश्च कृष्णान्वेषणेन कातराः अतिविह्वलाः अनुचक्रुः अनुकृतवत्यः॥१४॥ कस्याश्चिद्दिव्यादिभिश्चतुर्भिरनुकरणं प्रपंच्यते ततश्चतुर्भिस्तन्मयत्वं पुनरेकेनानुकरणमिति विवेकः पूतनायन्त्याः पूतनावदाचरंत्याः कृष्णवदाचरंती स्तनमपिबत् तोकायितातोकवदात्मानं कृत्वा॥१५॥

दैत्यायिता दैत्यवदात्मानं कृत्वा एका कृष्णार्भभावनां कृष्णबालभावनामायतीत्यास्याः अन्याजहारे॥१६॥१७॥ दूरगाः दूरेवर्तमानागाः यद्वत् यथा कृष्णस्तथाहूय तं कृष्णं अनुवर्तती अनुवर्तमानां अनुकुर्वतीमितिवा पाठः॥१८॥१९॥ यतंती प्रयत्नं कुर्वती अंबरं उत्तरीयं वस्त्रं उन्निदधे ऊर्ध्वं धृतवती॥२०॥२१॥ अपिदध्वं निमीलयत॥२२॥ सुदृक् सुनयनं आस्यं पिधाय सुदृक् वराक्षी तिवा भीति विडंबनं भयानुकरणम्॥२३॥ एवं पुनरपि वृंदावने लतास्तरूंश्च कृष्णं पृच्छंत्यो वनोद्देशे वनप्रदेशे अन्यच्चक्षत अपश्यन्॥२४॥२५॥ सुपृक्तानि संमिश्रितानि॥२६॥ तेन अंसे न्यस्तः प्रकोष्ठो यस्याः करेणो हस्तिन्याः॥२७॥ रहः

दैत्यायिता जहारान्यामेका कृष्णार्भभावनाम्। रिंगयामास काप्यंघ्री कर्षन्ती घोषनिःस्वनैः॥१६॥ कृष्णरामायिते द्वे तु गोपायन्त्यश्च काश्चन। वत्सायतीं हंति चान्यात्तत्रैका तु बकायतीम्॥१७॥ आहूय दूरगा यद्वत् कृष्णस्तमनुकुर्वतीम्। वेणुं क्वणन्तीं क्रीडन्तीमन्याः शंसंति साध्विति॥१८॥ कस्यांचित्स्वभुजं न्यस्य चलंत्याहापरा ननु। कृष्णोऽहं पश्यत गतिं ललितामिति तन्मनाः॥१९॥ मा भैष्ट वातवर्षाभ्यां तत्त्राणं विहितं मया। इत्युक्त्वैकेन हस्तेन यतंत्युन्निदधेंऽबरम्॥२०॥ आरुह्यैका पदाक्रम्य शिरस्याहापरां नृप। दुष्टाहे गच्छ जातोऽहं खलानां ननु दंडधृक्॥२१॥ तत्रैकोवाच हे गोपा दावाग्निं पश्यतोल्बणम्। चक्षूंष्याश्वपिदध्वं वो विधास्ये क्षेममंजसा॥२२॥ बद्धान्यया स्रजा काचित्तन्वी तत्र उलूखले। भीता सुदृक् पिधायास्यं भेजे भीतिविडंबनम्॥२३॥ एवं कृष्णं पृच्छमाना वृंदावनलतास्तरून्। व्यचक्षत वनोद्देशे पदानि परमात्मनः॥२४॥ पदानि व्यक्तमेतानि नंदसूनोर्महात्मनः॥ लक्ष्यंते हि ध्वजांभोजवज्रांकुशयवादिभिः॥२५॥ तैस्तैः पदैस्तत्पदवीमन्विच्छंत्योऽग्रतोऽबलाः। बध्वाः पदैः सुपृक्तानि विलोक्यार्ताः समब्रुवन्॥२६॥ कस्याः पदानि चैतानि याताया नंदसूनुना। अंसन्यस्तप्रकोष्ठायाः करेणोः करिणा यथा॥२७॥ अनयाराधितो नूनं भगवान्हरिरीश्वरः। यन्नो विहाय गोविंदः प्रीतो यामनयद्रहः॥२८॥ धन्या अहो अमी आल्यो गोविंदांघ्र्यब्जरेणवः। यान्ब्रह्मेशौ रमा देवी दधुर्मूर्ध्न्यघनुत्तये॥२९॥ तस्या अमूनि नः क्षोभं कुर्वंत्युच्चैः पदानि यत्। यैकापहृत्य गोपीनां रहो भुंक्तेऽच्युताधरम्॥३०॥ न लक्ष्यंते पदान्यत्र तस्या नूनं तृणांकुरैः। खिद्यत्सुजातांघ्रितलामुन्निन्ये प्रेयसीं प्रियः॥३१॥

९ कांतस्यानं॥२८॥ हे आल्यः सख्य अहो धन्याः अतिपुण्याः गोविंदांघ्र्यब्जरेणवः तत्र हेतुः यानिति अस्माभिरप्येतद्रेणवभिषेकेण तथैव कृष्णः प्राप्तुं शक्य तद्दृतिभावः॥२९॥ अन्या आहुः तस्याद्रतिगोपीनां सर्वस्वं अयं भावः भवेदेवं यदि तस्याः पदानि संपृक्तानि न भवेयुः तानि तु नो दुःखं कुर्वंतीति॥३०॥ तत्संपृक्तानि केवलं कृष्णपादरेणून्नेवविचिन्वंत्यस्तान् दृष्ट्वा पुनरसंतं समतपन्तदाह श्लोकत्रयेण न लक्ष्यंत इति खिद्यती सुजाते सुकुमारे अंघ्रितले यस्यास्तां उन्निन्ये स्कंध

T

प्रपदाभ्यामाक्रमणं स्रोणीसंमर्दनं ययोः अतएव असकले पदे पश्यतेति॥३२॥ तस्याः कृष्णजान्वंतउपविष्टायाश्चिन्हं दृष्ट्वाहुः केशप्रसाधनमिति कांतामधिकृत्य तानि प्रसूनानि चूडयता चूडानुकारेण बध्नता इह ध्रुवमुपविष्टम्॥३३॥ रेमे इत्यादि शुकोक्तिः आत्मरतः स्वतस्तुष्टः आत्मारामः स्वक्रीडः अखंडितः स्त्रीविभ्रमैरनाकृष्टोपि तया चेक्रीडमिति रेमे अत आह कामिनामिति॥३४॥३५॥ स्त्रीणां दुरात्मतामाह सा चेति द्वाभ्यां कामो यानं अगमनसाधनं यासां ताः गोपीः हित्वा मां भजत इति हेतोरात्मानं वरिष्ठं मेने इति॥३६॥३७॥ कामिनां दैन्यं दर्शयति एवमुक्त इति अखंडितत्वमाह तत

अत्र प्रसूनावचयः प्रियार्थे प्रेयसा कृतः। प्रपदाक्रमणे एते पश्यतासकले पदे॥३२॥ केशप्रसाधनं त्वत्र कामिन्याः कामिना कृतम्। तानि चूडयता कांतामुपविष्टमिह ध्रुवम्॥३३॥ रेमे तया चात्मरत आत्मारामोप्यखंडितः। कामिनां दर्शयन्दैन्यं स्त्रीणां चैव दुरात्मतां॥३४॥ इत्येवं दर्शयन्त्यस्ताश्चेरुर्गोप्यो विचेतसः। यां गोपीमनयत्कृष्णो विहायान्याः स्त्रियो वने॥३५॥ सा च मेने तदात्मानं वरिष्ठं सर्वयोषिताम्। हित्वा गोपीः कामयाना मामसौ भजते प्रियः॥३६॥ ततो गत्वा वनोद्देशं दृप्ता केशवमब्रवीत्। न पारयेहं चलितुं नय मां यत्र ते मनः॥३७॥ एवमुक्तः प्रियामाह स्कंधमारुह्यतामिति। ततश्चांतर्दधे कृष्णः सा वधूरन्वतप्यत॥३८॥ हा नाथ रमण प्रेष्ठ क्वासि क्वासि महाभुज। दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम्॥३९॥ श्रीशुक उवाच॥ अन्विच्छन्त्यो भगवतो मार्गं गोप्योऽविदूरतः। ददृशुः प्रियविश्लेषमोहितां दुःखितां सखीम्॥४०॥ तया कथितमाकर्ण्य मानप्राप्तिं च माधवात्। अवमानं च दौरात्म्याद्विस्मयं परमं ययुः॥४१॥ ततोऽविशन्वनं चंद्रज्योत्स्ना यावद्विभाव्यते। तमः प्रविष्टमालक्ष्य ततो निववृतुर्हरेः॥४२॥ तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः। तद्गुणानेव गायंत्यो नात्मागाराणि सस्मरुः॥४३॥ पुनः पुलिनमागत्य कालिंद्याः कृष्णभावनाः। समवेता जगुः कृष्णं तदागमनकांक्षिताः॥४४॥ इति श्रीभागवते महापुराणे रासक्रीडायां त्रिंशत्तमोऽध्यायः॥३०॥

श्चेति तस्यां स्कंधारोहोद्यतायामंतर्हित इत्यर्थः॥३८॥ अनुतापमाह हा नाथेति॥३९॥ अन्विच्छन्त्यः मृगयमाणाः अविदूरतः समीपे॥४०॥४१॥ ततस्तया पि सहिताः कृष्णान्वेषणाय वनमविशन् ततो हरेरन्वेषणान्निवृत्ताः॥४२॥ एवं तमप्राप्य अपि स्वगृहान्नैव स्मृतवत्यः तदात्मिकाः सत्त्व आत्मा यासां ताः तन्मय्य इत्यर्थः॥४३॥ किंतु पूर्वं यत्र श्रीकृष्णेन संगतिरासीत् तदेव कालिंद्याः पुलिनमागत्य कृष्णं भावयंति ध्यायंतीति तथा ताः कृष्णस्यागमनं कांक्षितं यासां ताः मिलिताः सत्यः कृष्णमेव जगुरिति॥४४॥ इति दशमे टीकायां त्रिंशत्तमोऽध्यायः॥३०॥



एकत्रिंशे निराशास्ताः पुनः पुलिनमागताः। कृष्णमेवानुगायन्त्यः प्रार्थयन्ते तदागमम्॥१॥ जयतीति हे दयित ते जन्मना व्रजः अधिकं ...

एकत्रिंशे निराशास्ताः पुनः पुलिनमागताः। कृष्णमेवानुगायन्त्यः प्रार्थयन्ते तदागमम्॥१॥ जयतीति हे दयित ते जन्मना व्रजः अधिकं यथा भवति तथा उत्कर्षेण वर्त्तते यस्मात्त्वमत्र जातस्तस्मादिंदिरा लक्ष्मीः अत्र हि श्रयत्र व्रजमलंकृत्य वर्ततेऽएवं व्रजे सर्वेस्मिन्मोदमाने अत्र तु तावकास्त्वदीया गोपी जनाः त्वयि त्वदर्थमेव कथंचिद्धृताः असवो यैस्ते त्वां विचिन्वते अतस्त्वया दृश्यतां प्रत्यक्षीभूयतामिति यद्वा अस्माभिर्भवान्दृश्यतां यद्वा एवं त्वया दृश्य तामेते विचिन्वंत इति॥१॥ अत्र स्वतंत्राणां बह्वीनां वक्तृत्वादपरा आहुरिति सर्वश्लोकेष्ववतारणा अथापि सङ्गतिरुच्यते तत्र विचिन्वतु मम किमिति चेत्त त्राहुः शरदिति शरदुदाशये शरत्कालीने सरसि साधुजातं सम्यग्जातं यत्सरसिजं सुविकसितं पद्मं तस्य उदरे गर्भे या श्रीः तां मुष्णाति हरतीति तथा दृशानेत्रेण हे सुरतनाथ संभोगपते वरद अभीष्टप्रद अशुल्कदासिकाः अमूल्यदासीर्नः निघ्नतो मारयतस्ते तव त्वया क्रियमाणः इह लोके अयं वधो न भवति किं शस्त्रेणैव वधो वधः किं दृशा वधो वधो न भवति किंतु भवत्येव अतस्त्वद्दृशाऽपहृतप्राणप्रत्यर्पणाय त्वया दृश्यतामिति भावः यथासंभ

गोप्य ऊचुः॥ जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि। दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां वि चिन्वते॥१॥ शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषा दृशा। सुरतनाथ तेऽशुल्कदासिका वरद निघ्नतो नेह किं वधः॥२॥ विषजलाप्ययाद्व्यालराक्षसाद्वर्षमारुताद्वैद्युतानलात्। वृषमयात्मजाद्विश्वतोभयादृषभ ते वयं रक्षिता मुहुः॥३॥ न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृक्। विखनसार्थितो विश्वगुप्तये सख उदेयिवान्सात्वतां कुले॥४॥ विरचिताभयं वृष्णिधुर्य ते चरणमीयुषां संसृतेर्भयात्। करसरोरुहं कान्त कामदं शिरसि धेहि नः श्रीकरग्रहम्॥५॥ व्रजजनार्तिहन्वीर योषितां निजजनस्मयध्वंसनस्मित॥ ९वं सर्वत्र वाक्यशेषः॥२॥ किञ्च बहुभ्यो मृत्युभ्यः कृपया रक्षिता किमिति इदानीं दृशा मन्मथप्रेष्य घातयसीत्या हुः विषेति हे ऋषभ श्रेष्ठ विषमयाज्जलाद्योऽप्ययो नाशस्तस्मात्तथा व्यालराक्षसात् अघासुरात् वर्षात् मारुतात् वैद्युतानलात् अशनिपातात् वृषोऽरि ष्टस्तस्मात् मयात्मजात् व्योमाद्विश्वतः अन्यस्मादपि सर्वतो भयाच्च कालियदमनादिना रक्षिताः किमिदानीमुपेक्षस इति भावः॥३॥ अपि च वि श्वपालनायावतीर्णस्य तव भक्तोपेक्षाऽत्यन्तमनुचितेत्याशयेनाहुः न खल्विति हे सखे भवान् खलु निश्चितं यशोदासुतो न भवति किन्तु सर्वप्राणि नां बुद्धिसाक्षी न तु स किं दृश्यो भवति तत्राहुः विखनसा ब्रह्मणा विश्वपालनाय प्रार्थितः सन् सात्वतां कुले उदेयिवान् उदितः इति॥४॥ तस्मात्त्वद्भक्ताना मस्माकमेतत्प्रार्थना चतुष्टयं संपादयेत्याहुः विरचिताभयमित्यादि चतुर्भिः हे वृष्णिधुर्य संसृतेर्भयात्ते चरणमीयुषां शरणं प्राप्तानां प्राणिनां विरचि तं दत्तमभयं येन तत् तथा हे कान्त कामदं वरदं तथा श्रियः करं गृह्णातीति तथा तत् भवत्करसरोरुहं नः शिरसि धेहि॥५॥ हे व्रजजनार्तिहन् हे वीर निजजनानां यः स्मयो गर्वस्तस्य ध्वंसनं नाशकं स्मितं यस्य तथाभूत हे सखे भवत्किंकरीर्नः अस्मान् भज आश्रयस्वेति निश्चितं प्रथमं तावत् जलरुहाननं आ॥

T

रुयोषितांनोदर्शय॥६॥अविशेषेणप्रणतानांदेहिनांपापकर्शनंपापहन्तृतृणचरान्पशूनप्यनुगच्छतिरूपयेतितथासौभाग्येनश्रियोनिकेतनं वीर्य्यातिरेकेणफणिनःफणास्वर्पितंतेपदांबुजंनःकुचेषुकृणुकुरुकिमर्थंहृच्छयंकामंकृन्धिछिन्धि॥७॥हेपुष्करेक्षणतवैवमधुरयागिरावल्गु निवाक्यानियस्यान्तयाबुधानांमनोज्ञयाहृद्ययागंभीरयेत्यर्थःमुह्यन्तीःइमाःनोविधिकरीःकिंकरीःअधरसीधुनाआप्यायस्वसञ्जीवयेति॥८॥ किञ्चअस्माकंत्वद्विरहेप्राप्तमेवमरणंकिन्तुत्वत्कथाऽमृतंपापयद्भिःसुकृतिभिर्वञ्चितमित्याहुःतवेतिकथैवअमृतंअत्रहेतुःतप्तजीवनंप्रसिद्धा मृताद्युत्कर्षमाहुःकविभिर्ब्रह्मविद्भिरपीडितंस्तुतंदेवभोग्यंत्वमृतंतैःतुच्छीकृतम् किञ्चकल्मषापहंकामकर्म्मनिरसनंतत्त्वमृतंनैवंभूतंकि ञ्चश्रवणमङ्गलंश्रवणमात्रेणमङ्गलप्रदंतत्त्वनुष्ठानापेक्षम् किञ्चश्रीमत्सुशान्ततत्तुमादकंएवंभूतंत्वत्कथाऽमृतंआततंयथाभवतितथाभु वियेगृणन्तिनिरूपयंतितेजनाःभूरिदाःबहुदातारःजीविं तंददतीत्यर्थःयद्वाएवंभूतंत्वत्कथामृतंयेभुविगृणन्तितेभूरिदाःपूर्वजन्मसुबहुद

भजसखेभवत्किङ्करीःस्मनोजलरुहाननंचारुदर्शय॥६॥प्रणतदेहिनांपापकर्शनंतृणचरानुगंश्रीनिकेतनम्।फणि फणार्पितंतेपदांबुजंकृणुकुचेषुनःकृन्धिहृच्छयम्॥७॥मधुरयागिरावल्गुवाक्ययाबुधमनोज्ञयापुष्करेक्षण।विधि करीरिमावीरमुह्यतीरधरसीधुनाऽप्याययस्वनः॥८॥तवकथामृतंतप्तजीवनंकविभिरीडितंकल्मषापहम्।श्रवण मङ्गलंश्रीमदाततंभुविगृणन्तितेभूरिदाजनाः॥९॥प्रहसितंप्रियप्रेमवीक्षणंविहरणञ्चतेध्यानमङ्गलम्।रहसिसंवि दोयाहृदिस्पृशःकुहकनोमनःक्षोभयन्तिहि॥१०॥चलसियद्व्रजाच्चारयन्पशून्नलिनसुन्दरंनाथतेपदम्।शिलतृणाङ्कुरैःसी दतीतिनःकलिलतांमनःकान्तगच्छति॥११॥दिनपरिक्षयेनीलकुन्तलैर्वनरुहाननंबिभ्रदावृतम्।घनरजस्वलंदर्शयन्मु हुर्मनसिनःस्मरंवीरयच्छसि॥१२॥ ९ तेवन्तःसुकृतिनइत्यर्थःएतदुक्तंभवतियेकेवलंकथामृतंगृणन्तितेऽपितावदतिधन्याः किंपुनःयेत्वांपश्यन्तिअतःप्रार्थयामहेत्वयादृश्यतामिति॥९॥ननुतर्हिमत्कथाश्रवणेनैवनिर्वृताःभवत्यस्तत्किंमद्दर्शनेनत्वद्विलासक्षुभि तचित्तावयंतत्रापिशान्तिंनविद्मइत्याहुःप्रहसितमितिहेप्रियकुहककपटसंविदःसङ्केतनर्माणि॥१०॥किञ्चत्वयिवयमतिप्रेमार्द्रचित्ताःत्वं पुनरस्मासुकेनहेतुनाकपटमाचरसीत्याहुःश्लोकद्वयेनचलसीतिहेनाथहेकान्तयत्यदाव्रजाच्चलसिपशूंश्चारयंस्तदाततनलिनसुन्दरं कोमलंतेपदंशिलैःकणिशैस्तृणैरंकुरैश्चसीदतिक्लिश्येदितिनोमनःकलिलतांअस्वास्थ्यंगच्छतिप्राप्नोतिएवंभूतास्वद्युःस्वशंकित चित्ताःवयम्॥११॥ततुदिनपरिक्षयेसायंकालेनीलकुन्तलैरावृतंघनरजस्वलंगोरजश्छुरितंवनरुहाननंअलिमालाकुलपरागच्छुरितप

अतोऽधुनाकपटंविहायैवकुर्वितिप्रार्थयन्तिश्लोकद्वयेनप्रणतकामदमितिहेआधिहनहेरमणप्रपन्नजेनार्चितंआपदिध्येयंध्यानमात्रेणापन्निवर्तकंशन्तमंचसेवासमयेचापिसुखतमंतवचरणपङ्कजंकामतापशान्तयेनःस्तनेषुर्पयेति॥१३॥अपिचहेवीरलोऽधरामृतंनोवितरदेहिस्वरितेननादितेनवेणुनासुष्ठुचुंबितमितिनादामृतवासितमितिभावः इतररागविस्मारणंनृणांइतरेषुसार्वभौमादिसुखेषुरागमिच्छांविस्मारयतिविलापयतीतितथातत्॥१४॥किञ्चक्षणमपित्वददर्शनेदुःखंदर्शनेचसुखंदृष्ट्वासर्वसङ्गपरित्यागेनयतइवयंत्वामुपागताःत्वन्तुकथमस्मांस्त्यक्तुमुत्सहसेइतिसकरुणमूचुःअटतीतिद्वयेनयद्यदाभवान्काननंवृन्दावनम्प्रतिअटतिगच्छतितदात्वामपश्यतांप्राणिनांत्रुटिःक्षणार्द्धमपियुगवद्भवतिएवमदर्शनेदुःखमुक्तंपुनश्चकथंचिद्दिनान्तेतवश्रीमन्मुखंउच्चैःईक्षमाणानांतेषांदृशांपक्ष्मकृतब्रह्माजडोमन्दएवनिमेषमात्रमपिअन्तरमसह्यमितिदर्शनेसुखमुक्तम्॥१५॥तस्मात्हेअच्युतपतीनसुतानअन्वयान्तत्संबन्धिनःभ्रातृन्बांधवांश्चातिविलङ्घ्यतवसमीपमागताःवयंकथ

प्रणतकामदंपद्मजार्चितंधरणिमण्डनंध्येयमापदि। चरणपंकजंशन्तमञ्चतेरमणनस्तनेष्वर्प्ययाधिहन्॥१३॥सुरतवर्द्धनंशोकनाशनंस्वरितवेणुनासुष्ठुचुंबितम्।इतररागविस्मारणंनृणांवितरवीरनस्तेऽधरामृतम्॥१४॥अटतियद्भवान्हिकाननंत्रुटिर्युगायतेत्वामपश्यताम्।कुटिलकुन्तलंश्रीमुखंचतेजडउदीक्षतांपक्ष्मकृद्दृशाम्॥१५॥पतिसुतान्वयभ्रातबान्धवानतिविलंघ्यतेन्त्यच्युतागताः।गतिविदस्तवोद्गीतमोहिताःकितवयोषितःकस्त्यजेन्निशि॥१६॥रहसिसंविदंहृच्छयोदयंप्रहसिताननंप्रेमवीक्षणम्।बृहदुरःश्रियोवीक्ष्यधामतेमुहुरतिस्पृहामुह्यतेमनः॥१७॥व्रजवनौकसांव्यक्तिरङ्गतेवृजिनहन्त्र्यलंविश्वमङ्गलम्।त्यजमनाक्चनस्त्वत्स्पृहात्मनांस्वजनहृद्रुजांयन्निषूदनम्॥१८॥यत्तेसुजातचरणांबुरुहंस्तनेषुभीताःशनैःप्रियदधीमहिकर्कशेषु॥ ९मूतस्यगतिविदःअस्मदागमनंजानतःगीतगतीवाजानतःगतिविदोवयंवा

तवोद्गीतेनउच्चैर्गीतेनमोहिताःहेकितवशठएवंभूतायोषितोनिशिस्वयमागतास्त्वाम्तेकस्त्यजेतनकोपीत्यर्थः॥१६॥अतस्त्वयात्यक्तानामस्माकंप्राक्तनत्वद्दर्शननिदानहृद्रोगस्यत्वत्सङ्गएवचिकित्सांताकुर्वित्याशयेनाहुर्द्वयेनरहसीतिश्रियोधामतेबृहद्विशालंउरश्चवीक्ष्यनःअतिस्पृहरूपाचअतस्त्वत्स्पृहात्मनांत्वत्स्पृहारूढमनसांनःमनाक्ईषत्किमपित्यजमुञ्चकार्पण्यमकुर्वन्देहीत्यर्थःकिन्तत्स्वजनहृद्रोगाणांयदतिमोप्यंनिषूदनंनिवर्तकमौषधंतत्त्वमेववेत्सीतिगूढाभिप्रायम्॥१८॥अतिप्रेमधर्षिताःरुदन्त्यआहुःयदितिहेप्रियतमतवसुकुमारंपदाब्जंकठिनेषुकुचेषुसंमर्दनशंकिताःशनैःशनैर्दधीमहिधारयेमवयंत्वन्तुतेनाटवीमटसिनयसीतिपाठेपशून्वाकाञ्चिदन्यांवाआत्मानमेववानयसिप्राप्नयसि

नत्पदांबुजं कूर्पादिभिः सूक्ष्मपाषाणादिभिः किंस्विद्व्यथते कथमनुमाम नव्यथते तर्हि भवानेव आयुर्जीवितं यासां तासां नो धीर्भ्रमति मुह्यती ति॥१९॥ इतिश्रीभागवते महापुराणे दशमस्कंधे पूर्वार्द्धे रासपञ्चाध्यायां गोपीगीते एकत्रिंशोऽध्यायः॥३१॥ द्वात्रिंशे विरहालापविक्लिन्न हृदयो हरिः। तत्राविर्भूय गोपीस्ताः सांत्वयामास मानयन्॥१॥ स्वप्रेमामृतकल्लोलविह्वलीकृतचेतसः। सदयं नन्दयन् गोपीरुद्गतो नन्दनंदनः ॥२॥ इति गोप्य इति एवं प्रभृति विचित्रधा अनेकधा सुस्वरं उच्चैः कृष्णदर्शने लालसा अतिस्पृहा यासां ताः॥१॥ साक्षान्मन्मथमन्मथः जगन्मोह नं सकामस्यापि मनस्युद्भूतः कामः साक्षात्तस्यापि मोहकइत्यर्थः॥२॥ तन्वः करचरणादयः॥३॥४॥ अंजलिना संहतहस्तद्वयेन॥५॥ भ्रुकुटीं भ्रु

तेनाटवीमटसि तद्व्यथते न किंस्वित्कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः॥१९॥ इतिश्रीभागवते महापुराणे दशमस्कं धे गोपीकृतस्तुतिर्नामैकत्रिंशोऽध्यायः॥३१॥ श्रीशुक उवाच॥ इति गोप्यः प्रगायंत्यः प्रलपंत्यश्च चित्रधा। रुरुदुः सुस्वरं राजन्कृष्णदर्शनलालसाः॥१॥ तासामाविरभूच्छौरिः स्मयमानमुखांबुजः। पीतांबरधरः स्रग्वी साक्षान्मन्मथमन्मथः॥२॥ तं विलोक्यागतं प्रेष्ठं प्रीत्युत्फुल्लदृशोऽबलाः। उत्तस्थुर्युगपत्सर्वास्तन्वः प्राणमिवागतम्॥३॥ काचित्करांबुजं शौरेर्जगृहेऽ ञ्जलिना मुदा। काचिद्दधार तद्बाहुमंसे चन्दनभूषितम्॥४॥ काचिदंजलिनाऽगृह्णात्तन्वी तांबूलचर्वितम्। एका तदंघ्रि कमलं संतप्ता स्तनयोरधात्॥५॥ एका भ्रुकुटिमाबध्य प्रेमसंरंभविह्वला। घ्नंतीवैक्षत्कटाक्षेपैः संदष्टदशनच्छदा॥६॥ अ पराऽनिमिषद्दृग्भ्यां जुषाणा तन्मुखांबुजम्। आपीतमपि नातृप्यत्संतस्तच्चरणं यथा॥७॥ तं काचिन्नेत्ररन्ध्रेण हृदि कृत्य नि मील्य च। पुलकांग्युपगुह्यास्ते योगीवानंदसंप्लुता॥८॥ सर्वास्ताः केशवालोकपरमोत्सवनिर्वृताः। जहुर्विरहजं तापं प्रा ज्ञं प्राप्य यथा जनाः॥९॥ ताभिर्विधूतशोकाभिर्भगवानच्युतो वृतः। व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथा ॥१०॥

वं आबध्य कुटिलीकृत्य प्रेमसंरंभेण प्रणयकोपावेशेन विह्वला विवशा दष्टाधरोष्ठाः कटाः कटाक्षास्तैर्ये आक्षेपाः परिभवास्तैस्ताडयन्तीवैक्षत॥६॥ अ निमिषन्तीभ्यां अनिमीलंतीभ्यां दृग्भ्यामापीतमपि सम्यग्दृष्टमपि पुनः पुनर्जुषाणा नातृप्यत्॥७॥ हृदि कृत्य हृदयं नीत्वेत्यर्थः॥८॥ प्राज्ञं ईश्वरं प्रा प्य यथा मुमुक्षवो जनाः यद्वा प्राज्ञं ब्रह्मज्ञं प्राप्य यथा संसारिणः यद्वा प्राज्ञं सौषुप्तं प्राप्य यथा विश्वतैजसावस्थाः जीवाः॥९॥ पुरुषः परमात्मा शक्तिभिः सत्वादिभिर्यथा यद्वा उपासकः पुरुषो ज्ञानवैराग्यवीर्यादिभिः यद्वा पुरुषो जीवशायी प्रकृत्याद्युपाधिभिर्वृतो यथा ऽधिकं विरोचते तद्वत् ॥१०॥



किं सत्कुन्दमन्दारैः सुरभिर्यो निलस्तस्मात्षट्पदा यस्मिन्तत्॥११॥ शरच्चन्द्रांशुनां संदोहैः समूहैर्ध्वस्तं दोषातमः रात्रिगतं तमो यस्मिन् तत् अत्र

विकसत्कुन्दमन्दारैः सुरभिर्योनिलस्तस्मात्षट्पदा यस्मिन् तत् ॥ ११ ॥ शरच्चन्द्रांशूनां संदोहैः समूहैर्ध्वस्तं दोषा तमः रात्रिगतं तमो यस्मिन् तत् अतः शिवं सुखकरं हस्तरूपैस्तरलैस्तरङ्गैराचिता आस्तीर्णाः कोमला वालुका यस्मिन् एवंभूतं पुलिनं ताः समादाय निविश्य तत्र ताभिरेतो ऽधिकं व्यरोचतेति पूर्वेणान्वयः ॥ १२ ॥ ताश्च मनोरथानामंतं ययुः पूर्णकामा बभूवुः श्रुतयो यथेति अयमर्थः यथा कर्मकाण्डे श्रुतयः परमेश्वरमपश्यंत्यः तत्तत्कामानुबंधैरपूर्णा इव भवन्ति ज्ञानकाण्डे तु परमेश्वरं दृष्ट्वा तदाह्लादपूर्णाः कामानुबन्धं जहतीति तद्वदिति आप्तकामा अपि प्रेम्णा तं अभजन्नित्याह स्वैरिति अचीक्लृपन् रचयामासुः आत्मबंधवे अन्तर्यामिणे ॥ १३ ॥ गोपीसभागतस्ताभिः संमानितः सन् चकास शुशुभे त्रैलोक्ये या लक्ष्मीः शोभा तस्याः एकं सद्वपदं स्थानं तद्वपुर्दधत् दर्शयन् ॥ १४ ॥ सहाससलीलेक्षणेन विभ्रमो विलासो यस्यां तया भ्रुवा उपलक्षितः संस्पर्शनेन सम्माईनेन ॥ १५ ॥ तत्र भगवतो

ताः समादाय कालिंद्या निर्विश्य पुलिनं विभुः । विकसत्कुन्दमन्दारसुरभ्यनिलषट्पदम् ॥ ११ ॥ शरच्चंद्रांशुसंदोहध्वस्तदोषातमः शिवं । कृष्णाया हस्ततरलाचितकोमलवालुकम् ॥ १२ ॥ तद्दर्शनाल्हादविधूतहृद्रुजो मनोरथांतं श्रुतयो यथा ययुः । स्वैरुत्तरीयैः कुचकुंकुमाङ्कितैरचीक्लृपन्नासनमात्मबंधवे ॥ १३ ॥ तत्रोपविष्टो भगवान्स ईश्वरो योगेश्वरान्तर्हृदि कल्पितासनः । चकास गोपीपरिषद्गतोऽर्चितस्त्रैलोक्यलक्ष्म्येकपदं वपुर्दधत् ॥ १४ ॥ सभाजयित्वा तमनङ्गदीपनं सहासलीलेक्षणविभ्रमभ्रुवा । संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः संस्तुत्य ईषत्कुपिता बभाषिरे ॥ १५ ॥ गोप्य ऊचुः ॥ भजतोऽनुभजन्त्येक एक एतद्विपर्ययम् । नोभयांश्च भजन्त्येक एतन्नो ब्रूहि साधु भोः ॥ १६ ॥ श्रीभगवानुवाच ॥ मिथो भजन्ति ये सख्यः स्वार्थैकान्तोद्यमा हि ते । न तत्र सौहृदं धर्मः स्वार्थार्थं तद्धि नान्यथा ॥ १७ ॥ भजन्त्यभजतो ये वै करुणाः पितरो यथा । धर्मो निरपवादोऽत्र सौहृदं च सुमध्यमाः ॥ १८ ॥ भजतोऽपि न वै केचिद्भजन्त्यभजतः कुतः । आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः ॥ १९ ॥ ९ कृतज्ञतां तद्वचनेनैवापादयितु

कामाः गूढाभिप्राया लोकवृत्तान्तमिव पृच्छन्ति भजत इति भजतः प्राणिनः अनु अनन्तरं केचित्तद्भजनानुसारेण भजन्ति केचिदेतद्विपर्ययं यथा भवति तथा तद्भजनानपेक्षमभजतोऽपि भजन्ति अन्ये तु नोभयानिति ॥ १६ ॥ विदिताभिप्राय उत्तरमाह मिथ इति हे सख्यः उपकारप्रत्युपकारत यायेमिथो भजन्ति ते अन्यन्न भजन्ति किं त्वात्मानमेव कुतः हि यस्मात् स्वार्थ एव एकान्ततः उद्यमो येषां ते तत्र च न सौहृदं अतो न सुखं न च धर्मो रहे शात् गोमहिष्यादिभजनवदित्यर्थः ॥ १७ ॥ ये तु अभजतो भजन्ति ते द्विविधाः करुणाः स्निग्धाश्च तत्र तु यथाक्रमं धर्मः कामो भवत इत्याह भज न्त्यभजत इति ॥ १८ ॥ तृतीयप्रश्नस्योत्तरं भजतोपीति अयमर्थः ते तु चतुर्विधाः एके आत्मारामाः अपराग्दृशः केचिदाप्तकामाः प्रियदर्शनेपि पूर्ण कामत्वेन भोगेच्छारहिताः अन्ये कृतज्ञा मूढाः अन्ये तु गुरुद्रुहः अतिकठिनाः सपि ता यस्तु योषक इति न्यायात् उपकर्तारं गुरुतुल्यस्तस्मै द्रुह्यन्तीति

अत्र चरमकोटिगतमात्मानंमत्वाशिसंकोचैः परस्परंगूढस्मितमुखाः ताद्दष्ट्वाहनाहमितिहेसख्यः अहंतेषांमध्येनकोपिकिन्तुपरमकारुणिकः परमसुहृच्चकथंअमीषांभजतांअनुवृत्तिरत्तयेनिरन्तरध्यानप्रवृत्त्यर्थंतान्नभजामिएतत्सदृष्टान्तमाह यथेतितस्यधनस्यैवचिन्तयानिभृतः पूर्णोन्यान्नवेदेतियावत् अन्यत् क्षुत्पिपासाद्यपिनवेद॥२०॥एवंमदर्थोज्झितलोकवेदस्वानाम् मदर्थेउज्झितःलोकः युक्तायुक्ताप्रतीक्षणात् वेदश्च धर्माधर्माप्रतीक्षणात् स्वाज्ञातयश्चस्नेहत्यागात् याभिस्तासांवोयुष्माकंपरोक्षंअदर्शनंयथाभवतितथाभजतायुष्मत्प्रेमालापानशृण्व तैवतिरोहितंअन्तर्धानेनस्थितंतत्तस्मात् हेअबलाः हेप्रियाः मामांअसूयितुंदोषारोपेणद्रष्टुंयूयंमाःहैथनयोग्याःस्थ॥२१॥आस्तामिदंपरमार्थेतुश्र णुतेत्याहनेतिनिरवद्यसंयुजांनिरवद्यासंयुक्संयोगोयासांतासांवः विबुधानामायुषापिचिरकालेनापिस्वीयंसाधुकृत्यंप्रत्युपकारंकर्तुंनपारयेनश क्नोमिकथंभूतानांयाभवत्योदुर्जराःअजरायागेहशृंखलास्ताःसंवृश्च्यनिःशेषंछित्वामामांअभजन् तासांमच्चित्तन्तुबहुषुप्रेमयुक्ततयानैव

नाहन्तुसख्योभजतोपिजन्तून्भजाम्यमीषामनुवृत्तिवृत्तये। यथाधनोलब्धधनेविनष्टेतच्चिन्तयान्यन्निभृतोनवेद॥२०॥ एवंमदर्थोज्झितलोकवेदस्वानांहिवोमय्यनुवृत्तयेऽबलाः। मयापरोक्षंभजतातिरोहितंमासूयितुंमार्हथतत्प्रियंप्रियाः॥ ॥२१॥ नपारयेऽहंनिरवद्यसंयुजांस्वसाधुकृत्यंविबुधायुषापिवः। यामाऽभजन्दुर्जरगेहशृंखलाःसंवृश्च्यतद्वःप्रतियातुसाधुना॥२२॥ इतिश्रीभागवतेमहापुराणेदशमस्कन्धेद्वात्रिंशोऽध्यायः॥३२॥ श्रीशुकउवाच॥ इत्थंभगवतोगोप्यः श्रुत्वावाचःसुपेशलाः। जहुर्विरहजंतापंतदङ्गोपचिताशिषः॥१॥ तत्रारभतगोविन्दोरासक्रीडामनुव्रतैः। स्त्रीरत्नैरन्वितःप्रीतैरन्योन्याबद्धबाहुभिः॥२॥ रासोत्सवःसंप्रवृत्तोगोपीमंडलमंडितः। योगेश्वरेणकृष्णेनतासांमध्येद्वयोर्द्वयोः। प्रविष्टेनगृहीतानांकण्ठेस्वनिकटंस्त्रियः॥३॥ ९ मेकनिष्ठंतस्माद्वोयुष्माकमेवसाधुनासाधुकृत्येनततयुष्मत्साधुकृत्यंप्रतियातुप्रति

कृतंभवतुयुष्मत्सौशील्येनैवममाऽनृण्यंनतुमत्कृतप्रत्युपकारेणेत्यर्थः॥२२॥ इतिदशमेटीकायांद्वात्रिंशोऽध्यायः॥३२॥ त्रयस्त्रिंशेततोगोपीम ण्डलीमध्यगोहरिः। प्रियास्तारमयामासहृद्दिनीवनकेलिभिः॥१॥ ततदाअंगहेराजन्यद्वातस्यभगवतोंगेनवपुषाकरचरणाद्यवयवैर्वाउपचिताः स मृद्धाआशिषोयासान्ताः॥१॥ रासक्रीडांरासोनामबहुनर्तकीयुक्तोनृत्यविशेषःतांक्रीडांअन्योन्यमाबद्धाःसंग्रथिताबाहवोयैस्तैःसह॥२॥ त त्साहित्यमभिनयेनदर्शयतिरासोत्सवइत्यक्षरचतुष्टयाधिकेनसार्द्धेनतासांमंडलरूपेणावस्थितानांद्वयोर्द्वयोर्मध्येप्रविष्टेनतेनैवकण्ठेगृहीतानांउ भयतआलिंगितानांकथंभूतेनयंसर्वाःस्त्रियःस्वस्वनिकटंमामेवाश्लिष्टवानितिमन्येरन्तेनएतदर्थंद्वयोर्द्वयोर्मध्येप्रविष्टेनेत्यर्थःनन्वेकस्य कथंतथाप्रवेशःसर्वसन्निहितत्वेवाकुतःस्वैकनिकटत्वाभिमानस्तासामित्यतउक्तंयोगेश्वरेणेतिअचिन्त्यशक्तिनेत्यर्थः॥ ३॥ ॥

तावत्तत्क्षणमेव औत्सुक्यव्याप्तमनसां सस्त्रीकाणां देवानां विमानशतैः संकुलं संकीर्णं नभोऽभूत्॥४॥ ततस्तस्य भगवतः श्रीकृष्णस्य अमलं निर्मलं यशो जगुरिति॥५॥ सप्रियाणां कृष्णसहितानां तुमुलः संकीर्णः॥६॥ महामरकतो नीलमणिरिव हैमानां मणीनां मध्ये मध्ये ताभिः स्वर्णवर्णाभिस्त्रिशाभिः शुशुभे गोपीदृष्ट्यभिप्रायेण वा विनैव मध्यपदावृत्तिमेकवचनं॥७॥ स यथा ताभिः शुशुभे तथा ता अपि तेन विरेजुरित्याह पादन्यासैरिति भुजविधुतिभिः करचालनैर्भज्यमानैश्च मध्यैश्चलद्भिः कुचैश्च पटैश्च गंडलोलैः गंडेषु चंचलैः स्विद्यन्मुख्यः स्विद्यन्ति स्वेदमुद्गिरंति मुखानि यासान्ताः कबरेषु रशनासु च ग्रन्थयो दृढा यासान्ताः यद्वा तेषु तासु च अग्रन्थयः शिथिलग्रन्थय इत्यर्थः तत्र नानामूर्तिः कृष्णो मेघचक्रमिव तास्तु बहु

यंमन्येरन्नभस्तावद्विमानशतसंकुलम्। दिवौकसां सदाराणामौत्सुक्यापहृतात्मनाम्॥४॥ ततो दुन्दुभयो नेदुर्निपेतुः पुष्पवृष्टयः। जगुर्गन्धर्वपतयः सस्त्रीकास्तद्यशोऽमलम्॥५॥ वलयानां नूपुराणां किंकिणीनां च योषिताम्। सप्रियाणामभूच्छब्दस्तुमुलो रासमंडले॥६॥ तत्रातिशुशुभे ताभिर्भगवान्देवकीसुतः। मध्ये मणीनां हैमानां महामरकतो यथा॥७॥ पादन्यासैर्भुजविधुतिभिः सस्मितैर्भ्रूविलासैर्भज्यन्मध्यैश्चलकुचपटैः कुंडलैर्गंडलोलैः। स्विद्यन्मुख्यः कबररशनाग्रन्थयः कृष्णवध्वो गायन्त्यस्तं तडित इव ता मेघचक्रे विरेजुः॥८॥ उच्चैर्जगुर्नृत्यमाना रक्तकंठ्यो रतिप्रियाः। कृष्णाभिमर्शमुदिता यद्गीतेनेदमावृतम्॥९॥ काचित्समं मुकुंदेन स्वरजातीरमिश्रिताः। उन्निन्ये पूजिता तेन प्रीयता साधु साध्विति। तदेव ध्रुवमुन्निन्ये तस्यै मानं च बहुदात्॥१०॥ काचिद्रासपरिश्रांता पार्श्वस्थस्य गदाभृतः। जग्राह बाहुना स्कंधं श्लथद्वलयमल्लिका॥११॥ तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम्। चंदनालिप्तमाघ्राय हृष्टरोमा चुचुंब ह॥१२॥ कस्याश्चिन्नाट्यविक्षिप्तकुंडलत्विषमंडितम्। गण्डं गंडे संदधत्याः प्रादात्तांबूलचर्वितम्॥१३॥ नृत्यंती गायती काचित्कूजन्नूपुरमेखला। पार्श्वस्थाच्युतहस्ताब्जं श्रांताधात्स्तनयोः शिवम्॥१४॥

९ विधास्तडित इव स्वेदस्तुषार इव गीतं गर्जितमिवेति यथासंभवमूह्यम्॥८॥ नृत्यमानाः नृत्यंत्यः रक्तकण्ठ्यः नानारागैरनुरंजितकण्ठ्यः कृष्णस्याभिमर्शेन संस्पर्शेन मुदिताः इदं विश्वम्॥९॥ मुकुन्देन सह स्वरजातीः षड्जादिस्वरालापगतीः अमिश्रिताः कृष्णोन्नीताभिरसंकीर्णाः प्रीयमाणेन संमानिताः तज्जात्युन्नयनमेव ध्रुवं ध्रुवाख्यं तालविशेषं कृत्वा उन्निन्ये उन्नीतवती॥१०॥ एवं नृत्यगीतादिना श्रीकृष्णसम्मानितानां तासां अतिप्रीतिविलसितं वृत्तांतमाह काचिदिति श्लथंति वलयानि मल्लिकाश्च यस्याः सा॥११॥ उत्पलस्य सौरभमिव सौरभं यस्य तं बाहुम्॥१२॥ नाट्यं नृत्यं तेन विक्षिप्तयोश्चंचलयोः कुण्डलयोस्त्विषेण त्विषा मंडितं गंडं कपोलम् तथाभूते स्वगंडे संदधत्याः संयोजयंत्याः॥१३॥ कूजंती नूपुरे मेखला च यस्याः

एवमन्या अपि गोप्यो यथायथं नानाविभ्रमैर्विजह्रुरित्याह गोप्य इति॥१५॥ तत्र वादकेषु गायकेषु च सत्सु। केषु गंधर्वकिन्नरादिषु रसावेशेन मुह्यत्सु न त्वत्सु चान्यामेव वाद्यादिसंपत्तिं दर्शयन् रासं संभ्रममाह कर्णोत्पले इति कर्णोत्पलैश्च अलकविटंकैः अलंकारालंकृतैः कपोलैश्च घर्मैश्च वक्त्रैः श्रीः शोभा यासां ताः घोषाः किंकिण्यः वलयनूपुरघोषैर्वाद्यैर्वादित्रैः स्वकेशेभ्यः स्रस्ताः स्रजो यासां ताः एतेन तालगतिसंतुष्टाः केशाः स्वशिरःकंपपादेषु पुष्पवृष्टिमिवाकुर्वन्निति सूचितं भगवता सह ननृतुः कृष्णभ्रमरा एव गायका यस्यां रासगोष्ठ्यां सभायां॥१६॥ यथा गोप्यो नानाविभ्रमैर्भगवता सह विजह्रुः एवं भगवानपि स्वविलासैस्ताभिः सह रेम इत्याह एवमिति तद्विलासाः न भिभूतस्यैव रतौ दृष्टान्तः यथार्भक इति स्वप्रतिबिंबैर्विभ्रमः क्रीडा यस्य स इव अनेनैतद्दर्शितं स्वीयमेव सर्वकलाकौशलं सौगंध्यलावण्यमाधुर्यादि च तासु संचार्य ताभिः सह रेमे यथार्भकः स्वप्रतिबिं

गोप्यो लब्ध्वाऽच्युतं कान्तं श्रिय एकांतवल्लभं। गृहीतकण्ठ्यस्तद्दोर्भ्यां गायन्त्यस्तं विजह्रिरे॥१५॥ कर्णोत्पलालकविटंककपोलघर्मवक्त्रश्रियो वलयनूपुरघोषवाद्यैः। गोप्यः समं भगवता ननृतुः स्वकेशस्रस्तस्रजो भ्रमरगायकरासगोष्ठ्याम्॥१६॥ एवं परिष्वंगकराभिमर्शस्निग्धेक्षणोद्दामविलासहासैः। रेमे रमेशो व्रजसुंदरीभिर्यथाऽर्भकः स्वप्रतिबिंबविभ्रमः॥१७॥ तदंगसंगप्रमुदाकुलेंद्रियाः केशान् दुकूलं कुचपट्टिकां वा। नांजः प्रतिव्योढुमलं व्रजस्त्रियो विस्रस्तमालाभरणाः कुरूद्वह॥१८॥ कृष्णविक्रीडितं वीक्ष्य मुमुहुः खेचरस्त्रियः। कामार्दिताः शशांकश्च सगणो विस्मितोऽभवत्॥१९॥ कृत्वा तावंतमात्मानं यावतीर्गोपयोषितः। रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया॥२०॥ तासामतिविहारेण श्रांतानां वदनानि सः। प्रामृजत्करुणः प्रेम्णा शन्तमेनांग पाणिना॥२१॥ गोप्यः स्फुरत्पुरटकुण्डलकुंतलत्विड्गण्डश्रिया सुधितहासनिरीक्षणेन।

॥ एवेति॥१७॥ तास्तु भगवद्विलासैराकुला बभूवुरित्याह तदंगेति तस्यांगसंगेन प्रकृष्टमुत्प्रीतिस्तया आकुलानि अवशानींद्रियाणि यासां ताः विश्लथबंधान केशादीन् अंजसा प्रतिव्योढुं यथापूर्वं धर्तुं नालं न समर्था बभूवुः विस्रस्ता माला आभरणानि च यासां ताः॥१८॥ न केवलं ता एवाकुलेंद्रियाः किंतु देव्योपीत्याह कृष्णविक्रीडितमिति किंच शशांकश्चेति अनेनैतत् सूचितं शशांकेन विस्मितेन गतो विस्मृता यांततः प्राक्तनाः सर्वेपि ग्रहाः तत्रैव तस्थुः ततश्चातिदीर्घा सुरात्रिः यया सा सुखं विजह्रुरिति॥१९॥ किंच कृत्वेति अयं भावः। कात्यायनि महामाये महायोगिन्यधीश्वरि। नंदगोपसुतं देवि पतिं मे कुरु ते नमः इति प्रत्येकं ताभिः प्रार्थनाद्भगवतोऽपि याता वलाद्व्रजं सिद्धा मयेमा रंस्यथ क्षपा इति तथैव प्रतिश्रुतत्वात्तावंतमात्मानं कृत्वा रेमे इति यावतीः यावत्यः॥२०॥ कृपया [illegible]

स्मितायितेनहासमहितेननिरीक्षणेनचऋषभस्यपत्युःश्रीकृष्णस्यमानंदधत्यःपुण्यानिकर्माणिजगुःतस्यकररुहैर्नखैःस्पर्शेनप्रमोदोयासांताः
॥२२॥अथजलकेलिमाहताभिरितितासामङ्गसंगेनघृष्टासंमर्दितायास्रक्तस्याःस्रजःअतएवतासांकुचकुंकुमेनरंजितायाःसंबंधिभिर्गन्ध
र्वपालिभिःगंधर्वपाःगंधर्वपतयइवगायंतोयेऽलयस्तैरनुद्रुतःअनुगतःसःश्रीकृष्णःवाःउदकंआविशत्भिन्नसेतुःविदारितवप्रःस्वयंचाति
क्रांतलोकवेदमर्य्यादः॥२३॥स्वरतिःआत्मारामोपिअत्रगोपीमंडलेअंभसिवाजलस्थलक्रीडेदर्शिते॥२४॥वनक्रीडांदर्शयतिततश्चेतिपम्र
नायाःउपवनेजलस्थलप्रसूनानांगन्धोयस्मिन्तेनानिलेनजुष्टानिदिशांतटानिअंतायस्मिन्यद्वादिशश्चतटंस्थलञ्चयस्मिन्नुपवनेभृङ्गाणांप्रम
दानांचगणैरावृतः॥२५॥रासक्रीडांनिगमयतिएवमितिसकृष्णःसत्यसंकल्पःअनुरागिस्त्रीकदंबस्थःएवंसर्वानिशाःसेवितवान्शरत्काव्यकथा

मानंदधत्यऋषभस्यजगुःकृतानिपुण्यानितत्कररुहस्पर्शप्रमोदाः॥२२॥ताभिर्युतःश्रममपोहितुमंगसङ्गघृष्टस्रजःसकु
चकुंकुमरंजितायाःगंधर्वपालिभिरनुद्रुतआविशद्वाःश्रान्तोगजीभिरिभराडिवभिन्नसेतुः॥२३॥सोंऽभस्यलंयुवति
भिःपरिषिच्यमानःप्रेम्णेक्षितःप्रहसतीभिरितस्ततोंऽग।वैमानिकैःकुसुमवर्षिभिरीड्यमानोरेमेस्वयंस्वरतिरत्रगजेंद्र
लीलः॥२४॥ततश्चकृष्णोपवनेजलस्थलप्रसूनगंधानिलजुष्टदिक्तटे।चचारभृंगप्रमदागणावृतोयथामदच्युद्द्विर
दःकरेणुभिः॥२५॥एवंशशांकांशुविराजितानिशाःससत्यकामोऽनुरताबलागणः।सिषेवआत्मन्यवरुद्धसौरतःसर्वाः
शरत्काव्यकथारसाश्रयाः॥२६॥राजोवाच॥संस्थापनायधर्मस्यप्रशमायेतरस्यच।अवतीर्णोहिभगवानंशेनजगदीश्वरः॥२७॥
सकथंधर्मसेतूनांवक्ताकर्ताऽभिरक्षिता।प्रतीपमाचरद्ब्रह्मन्परदाराभिमर्शनम्॥२८॥आप्तकामोयदुपतिःकृतवान्वैजुगु
प्सितम्॥किमभिप्रायएतन्नःसंशयंछिंधिसुव्रत॥२९॥श्रीशुकउवाच॥धर्मव्यतिक्रमोदृष्टईश्वराणांचसाहसम्।तेजीयसांन
दोषायवह्नेःसर्वभुजोयथा॥३०॥ ((रसाश्रयाःशरदिभवाःकाव्येषुकथ्यमानायेरसाःतेषामाश्रयभूतानिशाःयद्वानिशाइतिद्वितीयाऽस्यं
तसंयोगेशृंगाररसाश्रयाःशरदिप्रसिद्धाःकाव्येषुयाःकथास्ताःसिषेवइतिएवमप्यात्मन्येवावरुद्धसौरतःचरमधातुर्नतुस्खलितोयस्येतिकाम
जयोक्तिः॥२६॥२७॥प्रतीपंप्रतिकूलमधर्ममित्यर्थःआचरत्कृतवान्नचेदमधर्ममात्रंकलंजभक्षणादिवत्किंतुमहासाहसमित्याहपरदाराभिम
र्शनमिति॥२८॥आप्तकामस्यनायमधर्मइतिचेत्सत्यंएवंकामाभावान्निंदितंकेनाभिप्रायेणकृतवानितिपृच्छतिआप्तकामइति॥२९॥परमेश्वरेकै
मुतिकन्यायेनपरिहर्तुंसामान्यतोमहत्तांवृत्तांतमाहधर्मव्यतिक्रमइतिसाहसंचदृष्टंप्रजापतींद्रसोमविश्वामित्रादीनांतच्चतेषांतेजस्विनांदोषायन

तर्हियद्यदाचरतिश्रेष्ठइतिन्यायेनान्योपिकुर्य्यादित्याशंक्याहनैतदितिअनीश्वरोदेहादिपरतंत्रः यथारुद्रव्यतिरिक्तोविषमाचरन्भक्षयन्॥३१॥क थंतर्हिसदाचारस्यप्रामाण्यमतआहईश्वराणामितितेषांवचःसत्यंअतस्तदुक्तमाचरेदेवआचरितंतुक्वचित्सत्यंअतःस्ववचोयुक्तंतेषांवचसायद्यु क्तंअविरुद्धंतत्तदेवाचरेत्॥३२॥ननुतर्हितेपिकिमेवंसाहसमाचरंतितत्राहकुशलेतिप्रारब्धकर्मक्षपणमात्रमेवतेषांकृत्यंनान्यदित्यर्थः॥३३॥ प्रस्तुतमाहकिमुतेतिकुशलाकुशलान्वयोनविद्यतइतिकिंपुनर्वक्तव्यमित्यर्थः॥३४॥एतदेवस्फुटीकरोतियस्यपादपंकजपरागस्यनिषेवणेनतृप्ताः यद्वायस्यपादपंकजपरागेनिषेवायेषान्तेतथातेचतेतृप्ताश्चेतिभक्ताइत्यर्थः तथाज्ञानिनश्चननह्यमानाःबंधनमप्राप्नुवन्तः परदारत्वंगोपीनामंगी

नैतत्समाचरेज्जातुमनसाऽपिह्यनीश्वरः।विनश्यत्याचरन्मौढ्याद्यथारुद्रोऽब्धिजंविषम्॥३१॥ईश्वराणांवचस्सत्यंतथैवाचरि तंक्वचित्।तेषांयत्स्ववचोयुक्तंबुद्धिमांस्तत्समाचरेत्॥३२॥कुशलाचरितेनैषामिहस्वार्थोनविद्यते।विपर्ययेणवानर्थोनि रहंकारिणांप्रभो॥३३॥किमुताखिलसत्वानांतिर्य्यङ्नरदिवौकसाम्।ईशितुश्चेशितव्यानांकुशलाकुशलान्वयः॥ ॥३४॥यत्पादपंकजपरागनिषेवतृप्तायोगप्रभावविधुताखिलकर्मबंधाः।स्वैरंचरंतिमुनयोऽपिननह्यमानास्तस्येच्छ यात्तवपुषःकुतएवबंधः॥३५॥गोपीनांतत्पतीनांचसर्वेषामेवदेहिनाम्।योंतश्चरतिसोध्यक्षःक्रीडनेनेहदेहभाक्॥३६॥ अनुग्रहायभूतानांमानुषंदेहमास्थितः।भजतेतादृशीःक्रीडायाःश्रुत्वातत्परोभवेत्॥३७॥नासूयन्खलुकृष्णायमोहितास्तस्य मायया।मन्यमानाःस्वपार्श्वस्थान्स्वान्स्वान्दारान्व्रजौकसः॥३८॥ब्रह्मरात्रउपावृत्तेवासुदेवानुमोदिताः।अनिच्छन्त्योययुर्गोप्यः स्वगृहान्भगवत्प्रियाः॥३९॥विक्रीडितंव्रजवधूभिरिदंचविष्णोःश्रद्धान्वितोऽनुशृणुयादथवर्णयेद्यः।भक्तिंपरांभगवतिप्रति लभ्यकामंहृद्रोगमाश्वपहिनोत्यचिरेणधीरः॥४०॥इतिश्रीभागवतेदशमस्कंधेरासक्रीडावर्णनंनामत्रयस्त्रिंशोऽध्यायः॥३३॥

कृत्यपरिहृतं॥३५॥इदानींभगवतःसर्वांतर्यामिणःपरदारसेवानामनकाचिदित्याहगोपीनामितियोंऽतश्चरत्यध्यक्षोबुद्ध्यादिसाक्षीसएवक्रीडने नदेहभाक्नत्वस्मदादितुल्यःयेनदोषःस्यादिति॥३६॥नन्वेवंचेदाप्तकामस्यनिंदितेकुतःप्रवृत्तिरित्यतआहअनुग्रहायेतिशृंगाररसाकृष्टचेतसोऽति बहिर्मुखानपिस्वपरान्कर्तुमितिभावः॥३७॥नन्वन्येपिभिन्नाचाराःस्वचेष्टितमेवेतिवदंतितत्राहनासूयन्नितिएवंभूतैश्वर्य्याभावेतथाकुर्वंतःपापाज्ञेया इतिभावः॥३८॥ब्रह्मरात्रेब्राह्मेमुहूर्तेउपावृत्तेप्राप्ते॥३९॥भगवतःकामविजयरूपरासक्रीडाश्रवणादेःकामविजयमेवफलमाहविक्रीडितमितिअवि रेणधीरःसन्हृद्रोगंकाममाशुअपहिनोतिपरित्यजतीति॥४०॥इतिश्रीपरमानंदसैवश्रीधरनिर्मिताश्रीभागवतभावार्थदीपिकादशमाध्याया॥१॥३

चतुस्त्रिंशे ऽहिनाग्रस्तं नंदं हरिरमूमुचत्। विद्याध्रं चागिरः शापाच्छंखचूडं तथा ऽवधीत्॥ १॥ रासापदेशतः कामं किंकरीकृत्य कामतः। अनुगृह्
न्शंनिन्ये तथा विद्याधराधिपं॥ २॥ तदेवं कामानुग्रहमुखेन कामजयं प्रतिपाद्य तथैव विद्याधरजयं प्रतिपादयितुं तत्प्रसङ्गं दर्शयति एकदेति॥ १॥
॥ २॥ गावः गाः मधु मधुरं मध्वन्नं मधुना सहितमन्नं॥ ३॥ जलमात्रं प्राश्य उपोषिताः तां निशां तत्र ऊषुः न्यवसन्॥ ४॥ महानहिः अजगरः उरगः उरसा गच्छ
न्नित्यलक्षितत्वमुक्तं अग्रसीत् जग्रास॥ ५॥ ६॥ विव्यधुस्ताडयामासुः उल्मुकैर्ज्वलत्काष्ठैः॥ ७॥ अलातैस्तैरेवोल्मुकैर्हन्यमानोपि तं नंदं यदा नामुं

श्रीशुक उवाच॥ एकदा देवयात्रायां गोपाला जातकौतुकाः। अनोभिरनडुद्युक्तैः प्रययुस्ते ऽम्बिकावनम्॥ १॥ तत्र स्नात्वा स
रस्वत्यां देवं पशुपतिं प्रभुम्। आनर्चुरर्हणैर्भक्त्या देवीं च नृपते ऽम्बिकाम्॥ २॥ गावो हिरण्यं वासांसि मधु मध्वन्नमादृताः। ब्राह्म
णेभ्यो ददुः सर्वे देवो नः प्रीयतामिति॥ ३॥ ऊषुः सरस्वतीतीरे जलं प्राश्य धृतव्रताः। रजनीं तां महाभागा नंदसुनंदकादयः॥ ४॥
कश्चिन्महानहिस्तस्मिन् विपिनेतिबुभुक्षितः। यदृच्छयागतो नंदं शयानमुरगो ऽग्रसीत्॥ ५॥ स चुक्रोशाहिना ग्रस्तः कृष्ण कृ
ष्ण महानयम्। सर्पो मां ग्रसते तात प्रपन्नं परिमोचय॥ ६॥ तस्य चाक्रंदितं श्रुत्वा गोपालाः सहसोत्थिताः। ग्रस्तं च दृष्ट्वा विभ्रांताः
सर्पं विव्यधुरुल्मुकैः॥ ७॥ अलातैर्दह्यमानोपि नामुंचत्तमुरंगमः। तमस्पृशत्पदाभ्येत्य भगवान्सात्वतां पतिः॥ ८॥ स वै भगवतः श्री
मत्पादस्पर्शहताशुभः। भेजे सर्पवपुर्हित्वा रूपं विद्याधरार्चितम्॥ ९॥ तमपृच्छद्धृषीकेशः प्रणतं समवस्थितम्। दीप्यमानेन
वपुषा पुरुषं हेममालिनम्॥ १०॥ को भवान्परया लक्ष्म्या रोचते ऽद्भुतदर्शनः। कथं जुगुप्सितामेतां गतिं वा प्रापितो ऽवशः॥ ११॥
सर्प उवाच॥ अहं विद्याधरः कश्चित्सुदर्शन इति श्रुतः। श्रिया स्वरूपसंपत्त्या विमानेनाचरन्दिशः॥ १२॥ ऋषीन्विरूपानंगिर
सः प्राहसं रूपदर्पितः। तैरिमां प्रापितो योनिं प्रलब्धैः स्वेन पाप्मना॥ १३॥ शापो मे ऽनुग्रहायैव कृतस्तैः करुणात्मभिः। यदहं लो
कगुरुणा पदा स्पृष्टो हताशुभः॥ १४॥ तं त्वाहं भवभीतानां प्रपन्नानां भयापहम्। आपृच्छे शापनिर्मुक्तः पादस्पर्शादमीवहन्॥

चत् तदा भगवान्पदा तमस्पृशत्॥ ८॥ भगवतश्चरणस्पर्शमात्रेणैव हताशुभः विद्याधरेषु अर्चितं पूजितं॥ ९॥ गोपेषु आत्मन ऐश्वर्यं प्रका
शयितुमविद्वानिव तमपृच्छत् दीप्यमानेन वपुषा समवस्थितम्॥ १०॥ यः परया शोभया प्रकाशते स भवान्क इति॥ ११॥ १२॥ प्राहसं उपहसितं
वानस्मि प्रलब्धैरुपहसितैर्मदीयेनैव पापेन निमित्तेन॥ १३॥ यत् यतः शापात्॥ १४॥ आपृच्छे स्वलोकं गंतुमनुज्ञां याचे हे अमीवहन् दुःखनाशन॥ १५॥

॥१६॥१७॥१८॥१९॥ अहिदेहं निहत्यैवं प्रागुक्तं सुदर्शनम् तद्वदुन्मादिनं कृष्णः शंखचूडमताडयत्॥१॥ तत्प्रसंगमाह कदाचिदिति॥२०॥ विरजोंबरौ वितिविरजसी निर्मले अंबरे ययोस्तौ॥२१॥ किंच निशाप्रवेशं सत्कुर्वन्तौ उदित उडुपस्तारकाश्च यस्मिन् तत् मल्लिकागंधेन मत्ता अलयो यस्मिन् तत्॥२२॥ अतिबहुत्वादन्यैर्युगपत् कल्पयितुमशक्यमपि तौ स्वरमंडलमूर्च्छितं युगपत्कल्पयंतौ मनःश्रवणयोर्मङ्गलं यथा



प्रपन्नोऽस्मि महायोगिन्महापुरुष सत्पते॥ अनुजानीहि मां देव सर्वलोकेश्वरेश्वर॥१६॥ ब्रह्मदंडाद्विमुक्तोऽहं सद्यस्तेऽच्युत दर्शनात्। यन्नाम गृण्हन्नखिलान् श्रोतॄनात्मानमेव च॥१७॥ सद्यः पुनाति किं भूयस्तस्य स्पृष्टः पदा हि ते। इत्यनुज्ञाप्य दाशार्हं परिक्रम्याभिवंद्य च। सुदर्शनो दिवं यातः कृच्छ्रान्नंदश्च मोचितः॥१८॥ निशाम्य कृष्णस्य तदात्मवैभवं व्रजौकसो विस्मितचेतसस्ततः। समाप्य तस्मिन्नियमं पुनर्व्रजं नृपाययुस्तत्कथयंत आदृताः॥१९॥ कदाचिदथ गोविंदो रामश्चाद्भुतविक्रमः। विजह्रतुर्वने रात्र्यां मध्यगौ व्रजयोषिताम्॥२०॥ उपगीयमानौ ललितं स्त्रीजनैर्बद्धसौहृदैः। स्वलंकृतानुलिप्तांगौ स्रग्विणौ विरजोंऽबरौ॥२१॥ निशामुखं मानयंतावुदितोडुपतारकम्। मल्लिकागंधमत्तालिजुष्टं कुमुदवायुना॥२२॥ जगतुः सर्वभूतानां मनःश्रवणमङ्गलम्। तौ कल्पयंतौ युगपत् स्वरमंडलमूर्च्छितम्॥२३॥ गोप्यस्तद्गीतमाकर्ण्य मूर्च्छिता नाविदन्नृप। स्रंसद्दुकूलमात्मानं स्रस्तकेशस्रजं ततः॥२४॥ एवं विक्रीडतोः स्वैरं गायतोः संप्रमत्तवत्। शंखचूड इति ख्यातो धनदानुचरोऽभ्यगात्॥२५॥ तयोर्निरीक्षतो राजंस्तन्नाथं प्रमदाजनम्। क्रोशंतं कालयामास दिश्युदीच्यामशंकितः॥२६॥ क्रोशंतं कृष्ण रामेति विलोक्य स्वपरिग्रहं। यथा गा दस्युना ग्रस्ता भ्रातरावन्वधावताम्॥२७॥ मा भैष्टेत्यभयारावौ शालहस्तौ तरस्विनौ। आसेदतुस्तं तरसा त्वरितं गुह्यकाधमम्॥२८॥ स वीक्ष्य तावनुप्राप्तौ कालमृत्यू इवोद्विजन्। विसृज्य स्त्रीजनं मूढः प्राद्रवज्जीवितेच्छया॥२९॥ तमन्वधावद्गोविन्दो यत्र यत्र स धावति। जिहीर्षुस्तच्छिरोरत्नं तस्थौ रक्षन्स्त्रियो बलः॥३०॥

९ भवति तथा जगतुः अगायतामिति॥२३॥ मूर्च्छितास्तद्गीतलीनचित्ताः स्रंसत् भ्रश्यत् दुकूलं यस्मात् तमात्मानं देहं स्रस्ताः केशेभ्यः स्रजो यस्य तं च ततो नाविदन्॥२४॥२५॥ निरीक्षतोः निरीक्षमाणयोः तौ नाथौ यस्य तं प्रमदाजनं कालयामास॥२६॥ दस्युना व्याघ्रेण॥२७॥ माभैष्ट भयं न प्राप्नुतेत्यभयवाचौ ॥२८॥ ॥२९॥ ॥३०॥ ॥ ॥

शिरसासहचूडामणिंचजहारेत्यर्थः॥३१॥३२॥ इतिश्रीभागवतेमहापुराणेदशमेटीकायांचतुस्त्रिंशोऽध्यायः॥३४॥ पंचत्रिंशेवनंयातेकृष्णेगोकुलयो
षितः।युग्मश्लोकानुगीतेनन्निन्युर्दुःखेनवासरान्॥१॥ एवंरात्रिषुकृष्णेनस्वैरमभिरमितानांदिवातद्विरहितानामनुगीतेनदिननिस्तारप्रकारमा
हगोप्यइतिदुःखेनकृच्छ्रेण॥१॥ वामबाहुकृतवामकपोलइत्यादीनिद्वादशयुगलानिहेगोप्यःवामेबाहौतन्मूलेकृतःअर्पितःवामकपोलोयेनसः
वलितेनर्तितेभ्रुवौयेनसःवलितभ्रुर्मुकुंदःअधरेअर्पितंवेणुंकोमलाभिरंगुलिभिराश्रितामार्गाःसप्तस्वराश्छिद्राणियस्यतंयत्रयदाईरयतिवा
दयति॥२॥ तदाव्योमयानानांसिद्धानांवनिताःसिद्धैःस्वपतिभिःसहवर्त्तमानाअपितद्वेणोरीरितमुपधार्याकर्ण्यप्रथमंविस्मिताःततःकाममार्ग
णेभ्यःसमर्पितानिचित्तानियाभिस्ताःतत्परवशाइत्यर्थःसलज्जाःसत्यःकश्मलंमोहंययुःअत्रलिंगअपस्मृताःविस्मृताःनीव्योयाभिरितिअतए

अविदूरइवाभ्येत्यशिरस्तस्यदुरात्मनः।जहारमुष्टिनैवांगसहचूडामणिंविभुः॥३१॥ शंखचूडंनिहत्यैवंमणिमादायभास्व
रम्।अग्रजायाददत्प्रीत्यापश्यंतीनांचयोषिताम्॥३२॥ इतिश्रीभा॰दशमस्कंधेशंखचूडवधश्चतुस्त्रिंशोऽध्यायः॥३४॥
श्रीशुकउवाच॥ गोप्यःकृष्णेवनंयातेतमनुद्रुतचेतसः।कृष्णलीलाःप्रगायंत्योनिन्युर्दुःखेनवासरान्॥१॥ गोप्यऊचुः॥
वामबाहुकृतवामकपोलोवलितभ्रुरधरार्पितवेणुम्।कोमलांगुलिभिराश्रितमार्गंगोप्यईरयतियत्रमुकुंदः॥२॥ व्योमया
नवनिताःसहसिद्धैर्विस्मितास्तदुपधार्यसलज्जाः।काममार्गणसमर्पितचित्ताःकश्मलंययुरपस्मृतनीव्यः॥३॥ हंतचित्रम
बलाःशृणुतेदंहारहासउरसिस्थिरविद्युत्।नंदसूनुरयमार्तजनानांनर्मदोयर्हिकूजितवेणुः॥४॥ वृंदशोव्रजवृषामृगगावो
वेणुवाद्यहृतचेतस आरात्।दंतदष्टकवलाधृतकर्णानिद्रितालिखितचित्रमिवासन्॥५॥ बर्हिणस्तबकधातुपलाशैर्बद्ध
मल्लपरिबर्हविडंबः।कर्हिचित्सबलआलिसगोपैर्गाःसमाह्वयतियत्रमुकुन्दः॥६॥

एवंभूतस्यकृष्णस्यविरहेकथंसहामइतिसर्व
त्रवाक्यशेषः॥३॥ हंतहेअबलाःइदंचित्रंशृणुतहारहासःहारवद्विशदोहासोयस्यसः यद्वावेणुवादनेनअधोवदनेनहसतःहारेषुस्फुरन्हा
सोयस्यसःयद्वाहारवदुरसिशोभमानोहासोयस्यसःयद्वाहाराणांहासइवविशदास्फूर्तिर्यस्मिन्नुरसीतिउरसिस्थिराविद्युदिवलक्ष्मीर्यस्यसःय
र्हियदाकूजितवेणुर्नादितवेणुर्भवति॥४॥ तदाव्रजेयेवृषामृगाःगावश्चवेणुवाद्येनहृतानिचेतांसियेषान्तेआरात्दूरादेवदंतैर्दष्टाःकवलाग्रासायै
स्तेधृताउत्तंभिताःकर्णायैस्तेनिद्रिताइवलिखितचित्रमिवआसन्अविदुषांतिरश्चामपिइदमतिचित्रमित्यर्थः॥५॥ किंचअचेतनासुसरित्सुतद
तीवचित्रमित्याहुःहेआलिहेसखिबर्हिणोमयूरस्तस्यस्तबकाःमयूरपिच्छाःधातवोगैरिकादयश्चपलाशानिपल्लवाश्चतैर्बद्धश्चासौमल्लानांपरिब

सं॰ वर्षिकाः तंविडंबकेति॥

अनुकरोतीतितथासमुकुन्दः गोपैस्सहवेणुनेतिउपरितनमन्त्रापिज्ञातव्यंयत्रयदागाःसम्यगाहूयति॥६॥तर्हितदातच्छ्रुनिश्रवणात्अनिलेना
नीतंतस्यपदांबुजरजःस्पृहयंत्यइवभग्नगतयःसरितःवैनिश्चितंवयमिवताअप्यबहुपुण्याःयतोनप्राप्नुवंतिकेवलंप्रेम्णावेपिताःकंपिताःभु
जास्तरङ्गायासांतास्तिमितानिश्चलाआपोयासांताःगोप्योपिलोचनयोःस्तिमितजलाभवंतीति॥७॥स्थावरेष्वप्यतिचित्रंदृश्यतइत्याहुःअनुच
रैर्गोपैर्देवादिभिर्वामुख्यानांवाक्यंआदिपुरुषइवेतिअचलभूतिर्निश्चलश्रीःवेणुनातत्तन्नाम्नागानेन॥८॥तदाप्रणताभारेणविटपाःशाखायासां
ताःवनगतालताःस्वस्मिन्विष्णुंप्रकाशमानंसूचयंत्यइवमधुधारावर्षुःसेतिविस्मयेतरवश्चतथातस्यतीनामपितथैवानंदइतिभावःएतानितु
विष्णुभक्तिलक्षणानि॥९॥किंचसरसिकमलवनेषुविहरतांपक्षिणामप्याकर्षणंतद्गीतंकिंपुनरन्येषामित्याहुःदर्शनीयतिलकइतिदर्शनीयस्ति
लकोयस्यदर्शनीयानांसुंदराणांमध्येमुख्यइतिवावनमालासुयादिव्यगंधातुलसीतस्याःमधुनामत्तैःअलिकुलैःअलघुउच्चैःअभीष्टंअनुकूलंगीतंआ

तर्हिभग्नगतयःसरितोवैतत्पदांबुजरजोऽनिलनीतम्।स्पृहयतीर्वयमिवाऽबहुपुण्याःप्रेमवेपितभुजास्तिमितापः
॥७॥अनुचरैःसमनुवर्णितवीर्यआदिपूरुषइवाऽचलभूतिः।वनचरोगिरितटेषुचरंतीर्वेणुनाह्वयतिगाःसयदाहि॥८॥वन
लतास्तरवआत्मनिविष्णुंव्यंजयंत्यइवपुष्पफलाढ्याः।प्रणतभारविटपामधुधाराःप्रेमहृष्टतनवःससृजुःस्म॥९॥दर्शनीय
तिलकोवनमालादिव्यगंधतुलसीमधुमत्तैः।अलिकुलैरलघुगीतमभीष्टमाद्रियन्यर्हिसंधितवेणुः॥१०॥सरसिसारसहंस
विहंगाश्चारुगीतहृतचेतसएत्य।हरिमुपासततेयतचित्ताहंतमीलितदृशोधृतमौनाः॥११॥सहबलःस्रगवतंसविलासः
सानुषुक्षितिभृतोव्रजदेव्यः।हर्षयन्यर्हिवेणुरवेणजातहर्षउपरंभतिविश्वम्॥१२॥महदतिक्रमणशंकितचेतामंदमंदमनुग
र्जतिमेघः।सुहृदमभ्यवर्षत्सुमनोभिश्छाययाचविदधत्प्रतपत्रम्॥१३॥ ९ द्रियन्आदरेणगृण्हन्यर्हिअधरेसंधितवेणुर्भवति॥१०॥

तर्हियेसरसिसारसाहंसाःअन्येचविहंगास्तेचारुणागीतेनहृतचेतसःएत्यततआगत्यहरिंउपासतअभजंततत्समीपेउपविविशुर्वाहंतेतिवि
षादे॥११॥मेघोपिहरिंसेवतइत्याहुःसहबलइतिभोव्रजदेव्योगोप्यःसहबलःसरामःकृष्णःस्रग्भिर्निर्मिताभ्यांअवतंसाभ्यांकर्णभूषणाभ्यांवि
लासोयस्ययद्वामुक्ताफलस्रगापीडेनविलासोयस्येतिक्षितिभृतःसानुषुगिरेस्तटेषुवर्तमानःस्वयंजातहर्षोविश्वंहर्षयन्यदावेणुरवेणउपरंभति
निनादयतिनादेनपूरयतीत्यर्थः॥१२॥तदामेघःमहतःकृष्णस्यातिक्रमणेशंकितंचेतोयस्यसःनपरतोयातिनचोच्चैर्गर्जतिकिंतुतत्रैवस्थितःसन्
वेणुरवमनुमंदंमंदंगर्जतिकिंचसुहृदंविश्वार्तिहरणादिसाम्यात्सुहृत्कृष्णस्तंसुमनोभिरभ्यवर्षत्अदृश्यैर्देवैःक्रियमाणंकुसुमवर्षमेवैकल्प
[illegible]



अपिचमहदेतदाश्चर्य्यमित्याहुः [illegible]

अपिचमहदेतदाश्चर्य्यमित्याहुः विविधेतिहेसतियशोदेतवसुतोनानागोपकेलीषुसुविदग्धोनिपुणोवेणुवाद्येविषयेनिजेवशिक्षायासुताःस्वोत्प्रेक्षि
ताःनलन्यतःश्रुताइत्यर्थःस्वरजातीर्निषादर्षभादिस्वरालापभेदान्अनयत्उन्नीतवान्॥१४॥ततताःस्वरजातीःसवनशःमंद्रमध्यतारभेदेनयतो
गीतध्वनिरागतःततश्चआनताकंधराचित्तंचयेषांतेउपधार्यसम्यगाकर्ण्यकवयःकोविदाअपिननिश्चिततत्त्वंतद्भेदोयैस्तेकश्मलंमोहंययुरिति॥
॥१५॥अस्माकंतुमोहःकिंब्रूमइत्याहुः निजपदाब्जदलैरितिध्वजादीनिविचित्राणिललामानिचिन्हानियेषांतैर्निजानिपदान्येवअब्जदलानितैर्व्र
जभुवःखुरतोदंखुराक्रमणव्यथांशमयन्वर्ष्मणादेहेनधुर्य्योगजःतद्वद्गतिर्यस्यसकृष्णोवादितवेणुःसन्॥१६॥यद्व्रजतितेननिमित्तेनसविलासवी
क्षणेनअर्पितोमनोभववेगोयासुतावयंकुजाःवृक्षास्तेषांगतिंगमिताःसत्यःमोहेननविदामःकबरंवावसनंवेति॥१७॥किंचमणिधरःमणीन्ग्रथितान्गोगण
णनार्थंधरतीतिमणिधरःक्वचिद्देशेएतैर्मणिभिःगाःआसमंतात्गणयन्तथादयितगंधायातुलसीतस्याःमालयासहवर्त्तमानःप्रणयिनःप्रियस्यअनुच

विविधगोपरसेषुविदग्धोवेणुवाद्यउरुधानिजशिक्षाः।तवसुतःसतियदाधरबिंबेदत्तवेणुरनयत्स्वरजातीः॥१४॥सवन
शस्तदुपधार्य्यसुरेशाःशक्रशर्वपरमेष्ठिपुरोगाः।कवयआनतकंधरचित्ताःकश्मलंययुरनिश्चिततत्त्वाः॥१५॥निजपदाब्ज
दलैर्ध्वजवज्रनीरजांकुशविचित्रललामैः।व्रजभुवःशमयन्खुरतोदंवर्ष्मधुर्य्यगतिरीडितवेणुः॥१६॥व्रजतितेनवयंस
विलासवीक्षणार्पितमनोभववेगाः।कुजगतिंगमितानविदामःकश्मलेनकबरंवसनंवा॥१७॥मणिधरःक्वचिदागणय
न्गामालयादयितगंधतुलस्याः।प्रणयिनोऽनुचरस्यकदांसेप्रक्षिपन्भुजमगायतयत्र॥१८॥क्वणितवेणुरववंचितचि
त्ताःकृष्णमन्वसतकृष्णगृहिण्यः।गुणगणार्णमनुगत्यहरिण्योगोपिकाइवविमुक्तगृहाशाः॥१९॥कुंददामकृतकौ
तुकवेषोगोपगोधनवृतोयमुनायाम्।नंदसूनुरनघेतववत्सोनर्मदःप्रणयिनांविजहार॥२०॥मन्दवायुरुपवात्यनुकू
लंमानयन्मलयजस्पर्शेन॥ ९ रस्यअंसेभुजंप्रक्षिपन्यत्रयदाकदाचित्अगायत॥१८॥तदातत्रक्वणितस्यवेणोरवेणवंचितानिअपहृ

तानिचित्तानियासांताःकृष्णहरिणस्यगृहिण्योभार्याःगुणगणार्णंगुणगणसमुद्रंकृष्णमनुगत्यप्राप्यताःकृष्णमेवान्वसतअन्वासततन्नयव
तेतइत्यर्थःकुतःयतोविमुक्तागृहाशायाभिस्ताःगोपिकाइवताअपिह्येवमेवअन्वासतेति॥१९॥तदेवंवृंदावनप्रदेशेषुक्रीडिलासायान्हेगो
धनानिपरावर्त्त्यंयमुनायांक्रीडतस्तस्यसौभाग्यमनुवर्णयंतिकुन्देतिकुंददामकृतकौतुकवेषइतिगोपीनामुत्सवायकुंददामभिःकृतःकौतुकेन
उत्सवेनवेषोऽलंकारोयेनसःहेअनघेयशोदेतववत्सःपुत्रःनंदसूनुःकृष्णःयद्वासहैवबह्वःकथयंत्यःकाश्चित्तववत्सइतिकाश्चिन्नंदसूनुरितिच
इःनर्मदःहर्षदःसन्यदाविजहारक्रीडतिस्म॥२०॥तदामलयजस्पर्शेनमलयजस्यचंदनस्येवसुरभिःशीतश्चयःसंस्पर्शःतेनतंकृष्णंमानयन्अनुकूलं॥

॥

 

यथातथाउपवातिवीजयतियद्वाम‌लयजोदक्षिणोवायुः यद्वामलयजस्यकृष्णनखाङ्गुलिप्रस्यस्पर्शेनमानयन्तितिकिंचवंदिनइवस्तावकाः सं
तःगंधर्वादिगणाःवाद्यगीतपुष्पवर्षादिभिःपरिवव्रुःपरितउपासत॥२१॥आयातमालोक्यहृष्यन्त्यःपरस्परमूचुःवत्सलइतिव्रजस्यगवांचय
द्वाव्रजेनिबद्धानांगवांअनुकंप्यानामस्माकमित्यर्थःवत्सलःहितकृत्कुतःयतःयस्मात्गध्रःअगंधरतीतिगोवर्द्धनोद्धरणःबहुशोरक्षणस्योपलक्ष
णमेतत्वृद्धैर्ब्रह्मादिभिःसैर्ष्यम्पथीतिवंद्यमानचरणइत्यर्थःसायंशीघ्रमागंतुनदत्तीत्यर्थःउपोह्यएकीकृत्यगीतयुक्तोवेणुर्यस्यसः॥२२॥
श्रमयुक्तयापिकांत्यानेत्राणांहर्षमुन्नयनउच्चैःप्रापयन्खुररजोभिःकुरितान्याप्ताःस्रजोयस्यसुहृदामस्माकमाशिषःमनोरथस्यदित्सयादातुमि
च्छयादेवक्याजठरेभवतीतितथासएवउडुराजश्चंद्रःनिर्वृतिहेतुत्वेनसएषएतीति॥२३॥अतिसंभ्रमेणकाश्चित्समीपमायांतंकथयन्तिईषन्म

वंदिनस्तमुपदेवगणायेवाद्यगीतबलिभिःपरिवव्रुः॥२१॥वत्सलोव्रजगवांयदगध्रोवंद्यमानचरणःपथिवृद्धैः।कृत्स्न
गोधनमुपोह्यदिनांतेगीतवेणुरनुगेडितकीर्तिः॥२२॥उत्सवंश्रमरुचापिदृशीनामुन्नयन्खुररजश्छुरितस्रक्।दित्स
यैतिसुहृदाशिषएषदेवकीजठरभूरुडुराजः॥२३॥मदविघूर्णितलोचनईषन्मानदःस्वसुहृदांवनमाली।बदरपांडुवद
नोमृदुगंडम्मण्डयन्कनककुण्डललक्ष्म्या॥२४॥यदुपतिर्द्विरदराजविहारोयामिनीपतिरिवैषदिनान्ते।मुदितवक्त्रउपया
तिदुरंतंमोचयन्व्रजगवांदिनतापम्॥२५॥श्रीशुकउवाच॥एवंव्रजस्त्रियोराजन्कृष्णलीलानुगायतीः।रेमिरेऽहस्सुतच्चि
त्तास्तन्मनस्कामहोदयाः॥२६॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेवृंदावनक्रीडायांगोपिकागीतंनामपंचत्रिंशोऽध्या
यः॥३५॥श्रीशुकउवाच॥अथतर्ह्यागतोगोष्ठमरिष्टोवृषभासुरः।महींमहाककुत्कायःकंपयन्खुरविक्षताम्॥१॥ मदेनविघूर्णिते

विह्वलितेलोचनेयस्यसःबदरपांडुवदनःईषत्पक्वबदरवत्पांडुरंवदनंयस्यसःअत्रहेतुःकनककुंडलयोर्लक्ष्म्याकांत्यामृदूकोमलौगंडौयस्मिन्त
द्वदनंमंडयन्तितिकोमलगंडस्थलंवाशोभयन्निति॥२४॥यदुपतिरितिदेवकीजठरभूरितिचप्रागयंवसुदेवस्यक्वचिज्जातस्तवात्मजइत्यादिगर्गवा
क्यप्रसिद्धोक्तम्यद्वासखउदेयिवान्सात्वतांकुलइतिवत्ज्ञात्वाकाश्चिद्वदंतीतिगजेंद्रलीलःगजेंद्रगतिरितिवाचंद्रइवप्रसन्नवक्त्रःव्रजगवामस्मा
कंअनंतंदिनतापंचश्रमयनउपयातिएषसमीपमायातीति॥२५॥एवंविरहदुःखेनापिनुअहोकृष्णलीलाएवगायंत्यःतस्मिन्चित्तंचेतनाजीवितंयासां
ताःतस्मिन्नेवमनःसंकल्परूपंयासांताःअतोमहानुदयःउत्सवोयासांताःअहःस्वपिरेमिरे॥२६॥इतिदशमेटीकायांपंचत्रिंशोऽध्यायः॥३५॥षट्
त्रिंशेतुहतेऽरिष्टेनारदोक्त्याबलाच्युतौ।वसुदेवसुतौज्ञात्वाकंसोऽक्रूरंसमादिशत्॥१॥गोपीएसंतर्पयांतंरीखचूडंनिहत्यसःअहन्योपीमहाने



एवंदेवगंधर्वादिभिर्गीतनृत्यवाद्यकुसुमवर्षादिभिःकृष्णंप्राप्तं दृष्ट्वाव्रजस्यपरमोत्सवेवर्त्तमानेतद्विरुद्धार्थीनतराधिकारार्थमथशब्दःतर्हिंतदावृष

एवं देवगंधर्वादिगीतनृत्यवाद्यकुसुमवर्षादिभिः कृष्णं प्राप्तं दृष्ट्वा व्रजस्य परमोत्सवे वर्त्तमाने तद्विरुद्धार्थो नराधिकारार्थमथशब्दः तर्हि तदा वृष
भाकृतिरसुरस्तं वर्णयति सार्द्धत्रयेण महान्तौ ककुत्काया यस्य सः खुरैर्विदारितां महीं कंपयन् ॥१॥ रंभमाणः वृषभजातिशब्दं कुर्वन् विलिखन् विदार
यन् उद्यम्य ऊर्ध्वं कृत्वा वप्राणि तटानि उत्क्षिपन् ॥२॥ किंचित्किंचिच्छकृन्मध्ये मध्ये ईषदीषत् पुरीषं मुंचन् तथा मूत्रयन् मूत्रमुत्सृजन् स्तब्धलोचनः अनिमि
षलोचनः ॥३॥ यस्य ध्वनिना गवां नारीणां च तत्र । आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः । अत ऊर्ध्वं प्रसूतिः स्यादिति विभागः ककुद्गिलं पृष्ठशृङ्गे ॥४॥
॥५॥ कृष्ण कृष्ण रक्षेति ॥६॥७॥ एवं वदन् आस्फोट्य करतलेन बाहुमाहत्य तेन तलशब्देन कोपयन् भुजाभोगं भुजा भुजः स एव भोगः सर्पदेहः तं सर्पदेहाका

रंभमाणः खरतरं पदा च विलिखन्महीम् । उद्यम्य पुच्छं वप्राणि विषाणाग्रेण चोद्धरन् ॥२॥ किंचित्किंचिच्छकृन्मुंचन्मूत्रयं
स्तब्धलोचनः । यस्य निर्ह्रादितेनाङ्ग निष्ठुरेण गवां नृणाम् ॥३॥ पतन्त्यकालतो गर्भाः स्रवंति स्म भयेन वै । निर्विशंति घना यस्य क
कुद्यचलशंकया ॥४॥ तं तीक्ष्णशृङ्गमुद्वीक्ष्य गोप्यो गोपाश्च तत्रसुः । पशवो दुद्रुवुर्भीता राजन्संत्यज्य गोकुलम् ॥५॥ कृष्ण कृ
ष्णेति ते सर्वे गोविंदं शरणं ययुः । भगवानपि तद्वीक्ष्य गोकुलं भयविह्वलम् ॥६॥ माभैष्टेति गिराश्वास्य वृषासुरमुपाह्वयत् । गोपालैः
पशुभिर्मन्द त्रासितैः किमसत्तम ॥७॥ बलदर्पहाऽहं दुष्टानां त्वद्विधानां दुरात्मनाम् । इत्यास्फोट्याच्युतोऽरिष्टं तलशब्देन कोप
यन् । सख्युरंसे भुजाभोगं प्रसार्यावस्थितो हरिः ॥८॥ सोऽप्येवं कोपितोऽरिष्टः खुरेणावनिमुल्लिखन् । उद्यत्पुच्छभ्रमन्मेघः क्रु
द्धः कृष्णमुपाद्रवत् ॥९॥ अग्रन्यस्तविषाणाग्रः स्तब्धासृग्लोचनोऽच्युतम् । कटाक्षिप्याद्रवत्तूर्णमिंद्रमुक्तोऽशनिर्यथा ॥१०॥
गृहीत्वा शृङ्गयोस्तं च अष्टादश पदानि सः । प्रत्यपोवाह भगवान्गजं प्रतिगजो यथा ॥११॥ सोपविद्धो भगवता पुनरुत्थाय सत्व
रः । आपतत्स्विन्नसर्वाङ्गो निःश्वसन्क्रोधमूर्छितः ॥१२॥ तमापतंतं स निगृह्य शृंगयोः पदा समाक्रम्य निपात्य भूतले । नि
ष्पीडयामास यथाऽर्द्रमंबरं कृत्वा विषाणेन जघान सोऽपतत् ॥१३॥ असृग्वमन्मूत्रशकृत्समुत्सृजन् क्षिपंश्च पादाननवस्थि
तेक्षणः ॥

९ रंभुजमित्यर्थः स्वयमच्युतः अन्यान् दुष्टान् हरति संहरतीति हरिः ॥८॥ उद्यता ऊर्ध्वं गच्छता पुच्छेन भ्रमंतो मेघा य
स्मिन् सः ॥९॥ अग्रे न्यस्ते विषाणाग्रे येन सः स्तब्धे असृक्तुल्ये लोचने यस्य सः कटाक्षिप्य कटाक्षेण तिर्यङ् निरीक्ष्य ॥१०॥ प्रत्यपोवाह प्रति
लोमं व्यनुदत् ॥११॥ अपविद्धः अपक्षिप्तः आपतत् आद्रवत् स्विन्नानि स्वेदयुक्तानि सर्वांगाणि यस्य सः क्रोधमूर्छितः क्रोधेन व्याप्तः ॥१२॥ कृत्वा विषा
णमुत्पाट्य तेनैव जघान स च अपतत् ॥१३॥ मूत्रं च शकृच्च मूत्रशकृत् एकवद्भावः तदुभयं समुत्सृजन्नित्यर्थः पादांश्च क्षिपन् इतस्ततश्चालयन् अनवस्थि

प्रचलितनेत्रः कृच्छ्रं कष्टं जगाम अथ निर्ऋतेर्मृत्योः स्वयं निवासं जगाम कृच्छ्रं यथा भवति तथा मृत इति वा ॥१४॥ नयनोत्सवः नयनानां मूर्तिमानुत्स
वः ॥१५॥ कामं व्रजे वसंतं तं कृष्णं तेन तु विस्मृतं नारदः स्मारयामास कंसं दूत गिरेव तु । तदाह अरिष्ट इति देवदर्शनो देवर्षिः यद्वा एवं कथिते सर्वं भविष्यती
ति सा सादेव देववत् दर्शनं ज्ञानं यस्य सः ॥१६॥ आप्तेनैव नारदेनोक्तमाह यशोदाया इति देवक्या अष्टम गर्भत्वेन प्रसिद्धां कन्यां यशोदायाः सुतामाह य
शोदायाः सुतत्वेन प्रसिद्धं कृष्णं देवक्याः सुतमाह रोहिणीपुत्रं रामं च देवक्याः सप्तमं सुतमाह यद्वा नंद सुतत्वेन प्रसिद्धं रामं च वसुदेवभार्यायाः

जगाम कृच्छ्रं निर्ऋतेरथ स्वयं पप्रच्छैः किरं तो हरिमीडिरे सुराः ॥१४॥ एवं ककुद्मिनं हत्वा स्तूयमानः स्वजातिभिः । विवेश गोष्ठं स
बलो गोपीनां नयनोत्सवः ॥१५॥ अरिष्टे निहते दैत्ये कृष्णेनाद्भुतकर्मणा । कंसायाथाह भगवान्नारदो देवदर्शनः ॥१६॥ यशोदा
याः सुतां कन्यां देवक्याः कृष्णमेव च । रामं च रोहिणीपुत्रं वसुदेवेन बिभ्यता ॥१७॥ न्यस्तौ स्वमित्रे नंदे वै याभ्यां ते पुरुषा हताः । नि
शम्य तद्भोजपतिः कोपात्प्रचलितेंद्रियः ॥१८॥ निशातमसिमादत्त वसुदेवजिघांसया । निवारितो नारदेन तत्सुतौ मृत्युमा
त्मनः ॥१९॥ ज्ञात्वा लोहमयैः पाशैर्बबंध सह भार्यया । प्रतियाते तु देवर्षौ कंस आभाष्य केशिनम् ॥२०॥ प्रेषयामास हन्येतां
भवता रामकेशवौ । ततो मुष्टिकचाणूरशलतोशलकादिकान् ॥२१॥ अमात्यान्हस्तिपांश्चैव समाहूयाह भोजराट् । भो भो नि
शम्यतामेतद्वीरचाणूरमुष्टिकाः ॥२२॥ नंदव्रजे किलासाते सुतावानकदुंदुभेः । रामकृष्णौ ततो मह्यं मृत्युः किल निदर्शितः
॥२३॥ भवद्भ्यामिह संप्राप्तौ हन्येतां मल्ललीलया । मंचाः क्रियंतां विविधा मल्लरंगपरिश्रिताः ॥२४॥ पौरा जानपदाः सर्वे पश्यंतु
स्वैरसंयुगम् । महामात्र त्वया भद्र रंगद्वार्युपनीयताम् ॥२५॥ द्विपः कुवलयापीडो जहि तेन ममाहितौ । आरभ्यतां धनुर्याग
श्चतुर्दश्यां यथाविधि । विशसंतु पशून्मेध्यान्भूतराजाय मीढुषे ॥२६॥ इत्याज्ञाप्यार्थतंत्रज्ञ आहूय यदुपुंगवम् । गृहीत्वा
पाणिना पाणिं ततोऽक्रूरमुवाच ह ॥२७॥ भो भो दानपते मह्यं क्रियतां मैत्रमादृतः । नान्यस्त्वत्तो हिततमो विद्यते भोजवृष्णिषु ॥२८॥

रोहिण्याः पुत्रमाह तौ वसुदेवसुतौ चेत् कथं व्रजं गतौ तत्राह वसुदेवेनेति ॥१७॥१८॥ निवारित इति हते वसुदेवे तौ पलायेतामतो मा वध्यता
मिति मंत्रं वदता नारदेन निवारित इति ॥१९॥२०॥२१॥२२॥ मह्यं मम निदर्शितः विधात्रा नारदेन वा ॥२३॥ व्रजं गतं मुच्यतौ ताबाह भवद्भ्या
मिति मंचा उत्तुंगास्तंभादिरचितस्थानानि ॥२४॥२५॥ अहितौ शत्रू मीढुषे वरदाय ॥२६॥ अर्थतंत्रज्ञः अर्थसिद्धांतमेव जानातीति ॥२७॥ हे दा
नपते हे अक्रूर मैत्रं मित्रकर्तव्यं त्वया क्रियतां त्वत्तोऽन्य आदृतः सादरो हिततमश्च न विद्यत इति ॥ २८ ॥



॥२९॥३०॥ तो मे मत्युर्नितरां सस्पृहः वैकुंठसंश्रयैर्विष्णुसंश्रयैर्दैत्यैः ॥३१॥ किं

॥२९॥३०॥तौमेमृत्युर्निंतरांसृष्टः वैकुंठसंश्रयैर्विष्णुसंश्रयैर्देवैः॥३१॥ किं ... इति कालकल्पेन मृत्युतुल्येन वैद्युतोपमैः अश
नितुल्यैः॥३२॥३३॥३४॥नष्टकंटकानष्टशत्रुः ननुकतिपयासुहृद्वधेननष्टकंटकाकथंस्यादितितत्राहजरासंधइति॥३५॥३६॥यदुपुरश्रियंद्रष्टुंचे
ति॥३७॥तत्रस्वमनीषितंनिचारितंसम्यक्स्वावद्यमरणंतन्मार्जनम् तथापिएतावानभिनिवेशोनकार्यइतिभविष्यत्सूचयन्नाहसिद्ध्यसिद्ध्योरि
ति॥३८॥पुरुषकारस्यसव्यभिचारतामाहमनोरथानिति॥३९॥४०॥इतिदशमेषट्त्रिंशोऽध्यायः॥३६॥सप्तत्रिंशेहतेकेशिन्यच्युतोभाविकर्मभिः॥

अतस्त्वामाश्रितःसौम्यकार्यगौरवसाधनम्॥यथेंद्रोविष्णुमाश्रित्यस्वार्थमध्यगमद्विभुः॥२९॥गच्छनंदव्रजंतत्रसुतावा
नकदुंदुभेः॥आसातेताविहानेनरथेनानयमाचिरम्॥३०॥निसृष्टःकिलमेमृत्युर्देवैर्वैकुंठसंश्रयैः॥तावानयसमंगो
पैर्नंदाद्यैःसाभ्युपायनैः॥३१॥घातयिष्यइहानीतौकालकल्पेनहस्तिना॥यदिमुक्तौततोमल्लैर्घातयेवैद्युतोपमैः॥३२॥तयो
र्निहतयोस्तप्तान्वसुदेवपुरोगमान्॥तद्बंधून्निहनिष्यामिवृष्णिभोजदशार्हकान्॥३३॥उग्रसेनंचपितरंस्थविरंराज्यकामुक
म्॥तद्भ्रातरंदेवकंचयेचान्येविद्विषोमम॥३४॥ततश्चैषामहीमित्रभवित्रीनष्टकंटका॥जरासंधोममगुरुर्द्विविदोदयितः
सखा॥३५॥शंबरोनरकोबाणोमय्येवकृतसौहृदाः॥तैरहंसुरपक्षीयान्हत्वाभोक्ष्येमहींनृपान्॥३६॥एतज्ज्ञात्वानयक्षि
प्रंरामकृष्णाविहार्भकौ॥धनुर्मखनिरीक्षार्थंद्रष्टुंयदुपुरश्रियम्॥३७॥अक्रूरउवाच॥राजन्मनीषितंसम्यक्तवस्वावद्यमा
र्जनम्॥सिद्ध्यसिद्ध्योःसमंकुर्याद्दैवंहिफलसाधनम्॥३८॥मनोरथान्करोत्युच्चैर्जनोदैवहतानपि॥युज्यतेहर्षशोकाभ्यां
तथाप्याज्ञांकरोमिते॥३९॥श्रीशुकउवाच॥एवमादिश्यचाक्रूरंमंत्रिणश्चविसृज्यसः॥प्रविवेशगृहंकंसस्तथाक्रूरःस्वमा
लयम्॥४०॥ ॥इतिश्रीभागवते॰दशमस्कंधेऽक्रूरसंप्रेषणंनामषट्त्रिंशोऽध्यायः॥३६॥श्रीशुकउवाच॥केशीतुकंसप्र
हितःखुरैर्महींमहाहयोनिर्जरयन्मनोजवः॥सटावधूताभ्रविमानसंकुलंकुर्वन्नभोहेषितभीषिताखिलः॥ १ ॥ ॥

नारदेनस्तुतःक्रीडन्व्योमासुरमथावधीत्॥१॥वृषवेषासुरंसद्धृत्केशिनंहयवेषिणम्।कंसप्राणसखंहत्वाकंसंव्यसुमिवाकरोत्॥२॥केशीखिति
प्रथमश्लोकेनयएवंभूतःकेशीसनूद्यतंभगवान्समाहूयदितिद्वितीयेनान्वयः महाहयःसन्महींनिर्जरयन्श्लथयन्विदारयन्इत्यर्थःसटाभिःकेसरैः
अवधूतानिइतस्ततःक्षिप्तानिअभ्राणिविमानानिचतैःसंकीर्णंनभःकुर्वन्हेषितैरश्वजातिशब्दैर्भीषितमखिलंविश्वंयेनसः ॥ १ ॥ ॥ ॥

॥२॥ तद्धेषितैस्तैरतिनिष्ठुरैर्हेषितैः बालैः खपुच्छलोमभिः विघूर्णिताः परिभ्रामिताः अंबुदा येन तं आजौ संग्रामार्थं आत्मानं कृष्णं अग्रणीः पुरतो निर्गतः सन् उपाह्वयत् स्वसमीपं आजुहाव स च केशी तन्निशम्य मृगेंद्रवन्नादमकरोत् ॥३॥ ततः स केशी तं कृष्णं दृष्ट्वा मुखेन खं पिबन्निव मुखं विवृत्य व्यादाय अभिमुखः सन् अभिजगाम किंचाऽत्यमर्षणः अतिकुपितः अत्यंतमसहमानो वा प्रत्यक् पद्भ्यां जघान दुरासदः अन्यैरभिभवितुमशक्यः दुरत्ययः उद्यतः सन् दुरतिक्रमः अत्र हेतुश्चंडजवः चण्डः तीव्रः जवो वेगः धावनं यस्य ॥४॥ तद्वञ्चनं वंचयित्वा तं च हननाय प्रसारितयोः पादयोर्हस्ताभ्यां गृहीत्वा परिविध्य भ्रामयित्वा व्यवस्थितः तथैव स्थितो बभूव ॥५॥ व्यादाय मुखं प्रसार्य वेगेन हरिं प्रत्यद्रवत् सोऽपि हरिः हसन् उत्तरं सव्यं भुजं निर्भयं

विशालनेत्रो विकटास्यकोटरो बृहद्गलो नीलमहाम्बुदोपमः ॥ दुराशयः कंसहितं चिकीर्षुर्व्रजं स नंदस्य जगाम कंपयन् ॥२॥ तं त्रासयंतं भगवान्स्वगोकुलं तद्धेषितैर्बालविघूर्णिताम्बुदम् । आत्मानमाजौ मृगयंतमग्रणीरुपाह्वयत्स व्यनदन्मृगेंद्रवत् ॥३॥ स तं निशम्याभिमुखो मुखेन खं पिबन्निवाभ्यद्रवदत्यमर्षणः । जघान पद्भ्यामरविंदलोचनं दुरासदश्चंडजवो दुरत्ययः ॥४॥ तद्वंचयित्वा तमधोक्षजो रुषा प्रगृह्य दोर्भ्यां परिविध्य पादयोः । सावज्ञमुत्सृज्य धनुःशतांतरे यथोरगं तार्क्ष्यसुतो व्यवस्थितः ॥५॥ स लब्धसंज्ञः पुनरुत्थितो रुषा व्यादाय केशी तरसापतद्धरिम् । सोऽप्यस्य वक्त्रे भुजमुत्तरं स्मयन् प्रवेशयामास यथोरगं बिले ॥६॥ दंता निपेतुर्भगवद्भुजस्पृशस्ते केशिनस्तप्तमयःस्पृशो यथा । बाहुश्च तद्देहगतो महात्मनो यथामयः संववृधे उपेक्षितः ॥७॥ समेधमानेन स कृष्णबाहुना निरुद्धवायुश्चरणांश्च विक्षिपन् । प्रस्विन्नगात्रः परिवृत्तलोचनः पपात लेंडं व्यसृजन् क्षितौ व्यसुः ॥८॥ तद्देहतः कर्कटिकाफलोपमाद्व्यसोरपाकृष्य भुजं महाभुजः । अविस्मितोऽयत्नहतारिरुत्स्मयैः प्रसूनवर्षैर्दिविषद्भिरीडितः ॥९॥ देवर्षिरुपसंगम्य भागवतप्रवरो नृप । कृष्णमक्लिष्टकर्माणं रहस्येतदभाषत ॥१०॥ कृष्ण कृष्णाप्रमेयात्मन्योगेश जगदीश्वर ॥

॥ ९ ॥ लेदृष्टान्तः यथोरगं बिल इति ॥६॥ ततः किं तदाह दंता इति चर्वणाय भगवद्भुजं स्पृशंतीति तथा तेष्वादानेन ये दंताः विवृताः अयः लोहं स्पृशंतीति तिस्पृशः तथा ते यद्वा तप्तमयः अतितप्तं लोहादि स्पृशंतीति यथेति आमयो जलोदरम् ॥७॥ लेंडं पुरीषम् उत्सृजन् ॥८॥ कर्कटिकाफलं हि पक्वं सद्यस्तं विदीर्णं भवति तद्वद्विदीर्णात्तस्य देहात् व्यसोर्विगतप्राणात् अविस्मितः गर्वरहितः अयत्नेन हतोऽरिर्येन सः ॥९॥ कंसाय कृष्णमादिश्यं तद्रहस्यादिपैशुनैः । कंसघातादि कृष्णस्य कार्यमावेदयन्मुनिः ॥१॥ तदाह देवर्षिरित्यादिना तत्र चार्पसत्वकः किं तु सर्वेषु हि दित्याह भागवतप्रवर इति ॥१०॥ अस्मद्रहस्यं वेत्थ कंसे सचिवाविति माशंकीरित्याह कृष्ण कृष्णेत्यादिना अयं भावः

रोभूभारदैत्यसंहाराय अवतीर्णोसि अतस्तदनुरूपं चरणोननिवेशं परिपालयेतिनन्वभिमानवत्स्वयं केचनास्तीत्याह अप्रमेयात्मन् अपरिच्छिन्नस्वरू
पयोगेश अचिंत्यप्रभाव जगदीश्वर विश्वनियंतः वासुदेव सर्वभूतेषु वर्त्तमान अखिलावास सर्वस्याश्रय संप्रति सात्वतां प्रवर श्रेष्ठ प्रभो सर्वशक्ते॥११॥क
थमेवंरूपोहमितिचेदत आह त्वमात्मेति नहि त्वं जीववत् परिच्छिन्नः किंतु सर्वभूतानां अंतर एकोऽनुस्यूत आत्मा अंतरनुस्यूतत्वे दृष्टांतः एधसां काष्ठा
नां मतज्योतिरिवेति भूतेषु स्थितोपि तैर्नदृश्यसइत्याह गूढइति अत्र हेतवः गुहाशयः बुद्धेरभ्यांतरः किंच साक्षी नहि बुद्धिसाक्षी दृश्यतइत्यर्थः अपिच म
हापुरुषः अतः परिच्छिन्नमतिभिर्नज्ञायसइत्यर्थः तर्हि सर्वांतरत्वे किं प्रमाणं अत आह ईश्वरइति नहीश्वरं विना परतंत्राणां जीवानां प्रवृत्तिर्घटतइत्यर्थः

वासुदेवाखिलावास सात्वतां प्रवर प्रभो॥११॥त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम्। गूढो गुहाशयः साक्षी महापुरुष
ईश्वरः॥१२॥आत्मनात्माश्रयः पूर्वं मायया ससृजे गुणान्। तैरिदं सत्यसंकल्पः सृजस्यत्स्यवसीश्वरः॥१३॥स त्वं भूधरभूतानां
दैत्यप्रमथरक्षसाम्। अवतीर्णो विनाशाय सेतूनां रक्षणाय च॥१४॥दिष्ट्या ते निहतो दैत्यो लीलयाऽयं हयाकृतिः। यस्य ह्रेषितसं
त्रस्तास्त्यजंत्यनिमिषा दिवम्॥१५॥चाणूरं मुष्टिकं चैव मल्लानन्यांश्च हस्तिनम्। कंसं च निहतं द्रक्ष्ये परश्वोऽहनि ते विभो॥१६॥
तस्यानु शंखयवनमुराणां नरकस्य च। पारिजातापहरणमिंद्रस्य च पराजयम्॥१७॥उद्वाहं वीरकन्यानां वीर्यशुल्कादिलक्ष
णम्। नृगस्य मोक्षणं शापाद्द्वारकायां जगत्पते॥१८॥स्यमंतकस्य च मणेरादानं सह भार्यया। मृतपुत्रप्रदानं च ब्राह्मणस्य स्व
धामतः॥१९॥पौंड्रकस्य वधं पश्चात्काशिपुर्याश्च दीपनम्। दंतवक्रस्य निधनं चैद्यस्य च महाक्रतौ॥२०॥यानि चान्यानि वीर्या
णि द्वारकामावसन् भवान्। कर्त्ता द्रक्ष्याम्यहं तानि गेयानि कविभिर्भुवि॥२१॥अथ ते कालरूपस्य क्षपयिष्णोरमुष्य वै। अक्षौहि
णीनां निधनं द्रक्ष्याम्यर्जुनसारथेः॥२२॥ ९॥१२॥अहमीश्वरः अन्यत्सर्वमीशितव्यमित्येतदेवकुत अत आह आत्मनेति साधनांतरनिरपेक्षएव
आत्माश्रयः स्वतंत्रो मायया शक्त्या भवान् गुणान् ससृजे सृष्टवान् तैः सृष्टैर्गुणैः इदं विश्वं सृजसि अत्सि संहरसि अवसि पालयसि ननु सृष्ट्यादिक्रियाषट्का
रकसाध्ये वदृष्टेत्यत आह सत्यसंकल्पइति नहि संकल्पैकसाध्ये बहिःसाधनापेक्षेति भावः अतस्त्वमीश्वर इत्युपसंहारः॥१३॥प्रस्तुतमाह स त्वमिति भूध
रभूतानां भुवं धरंतीति भूधरा राजानस्तद्रूपाणाम्॥१४॥१५॥परश्वोहनीति अद्यैवाऽक्रूरएष्यति श्वो मथुरां गंतासि परश्वश्चाणूरादींश्च त्वया निहतान् द्रक्ष्या
मीति सिद्धवन्निर्देशो विज्ञापनप्रकारविशेषः॥१६॥तस्य अनु तदनंतरं शंखादीनां शंखः पंचजनः तस्य वधं द्रक्ष्यामीति शेषः भाविनिर्देशमात्रमेतत्
नतानंतर्यं विवक्षितम्॥१७॥१८॥भार्यया जांबवत्या सह स्वधामतः महाकालपुरात्॥१९॥२०॥द्वारकामावसन् द्वारकायां वसन् कर्त्ता करिष्यति॥२१॥

एवंविज्ञाप्यकृताभिनंदनंभगवंतंनमस्यतिद्वयेनविशुद्धविज्ञानघनमितिकेवलंज्ञानैकमूर्तिंअतएवस्वसंस्थयास्वरूपसम्यक्स्थित्यैवपरमानंदस्व
प्यासम्यगाप्ताःप्राप्ताःसर्वेअर्थाःयेनतंआप्तकामतोक्तासत्यसंकल्पतामाह अमोघवांछितइतिननुवांछाचेदस्तितर्हिदुर्निवारासंसृतिःअतआहस्व
तेजसेतिचिच्छक्त्यानित्यनिवृत्तोमायाकार्य्यरूपोगुणप्रवाहोयस्मात्तंअतोभगवंतंनिरतिशयैश्वर्य्यंईमहिशरणंव्रजेमेति॥२३॥ननुत्रिकालज्ञस्त्वंक
थंमत्प्रपंचंनजानासिजानासिचेत्कथमगुणप्रवाहंब्रवीषितत्राहत्वामितिईश्वरंअन्यस्यवशयितारंस्वाश्रयंअन्यस्याऽवशंअतआत्ममाययाआत्माधीन



विशुद्धविज्ञानघनंस्वसंस्थयासमाप्तसर्वार्थममोघवांछितम्। स्वतेजसानित्यनिवृत्तमायागुणप्रवाहंभगवंतमीमहि
॥२३॥त्वामीश्वरंस्वाश्रयमात्ममाययाविनिर्मिताऽशेषविशेषकल्पनं। क्रीडार्थमद्यात्तमनुष्यविग्रहंनतोस्मिधुर्य्यंयदुवृष्णिसात्व
ताम्॥२४॥श्रीशुकउवाच॥एवंयदुपतिंकृष्णंभागवतप्रवरोमुनिः। प्रणिपत्याभ्यनुज्ञातोययौतद्दर्शनोत्सवः॥२५॥भग
वानपिगोविंदोहत्वाकेशिनमाहवे। पशूनपालयत्पालैःप्रीतैर्व्रजसुखावहः॥२६॥एकदातेपशून्पालांश्चारयंतोद्रिसा
नुषु। चक्रुर्निलायनक्रीडाश्चोरपालापदेशतः॥२७॥तत्रासन्कतिचिच्चोराःपालाश्चकतिचिन्नृप। मेषायिताश्चतत्रैकेविजह्रु
रकुतोभयाः॥२८॥मयपुत्रोमहामायोव्योमोगोपालवेषधृक्। मेषायितानपोवाहप्रायश्चोरायितोबहून्॥२९॥गिरिदर्यांविनि
क्षिप्यनीतंनीतंमहासुरः। शिलयापिदधेद्वारंचतुःपंचावशेषिताः॥३०॥तस्यतत्कर्मविज्ञायकृष्णःशरणदःसताम्। गोपान्नयं
तंजग्राहवृकंहरिरिवौजसा॥३१॥सनिजंरूपमास्थायगिरींद्रसदृशंबली। इच्छन्विमोक्तुमात्मानंनाशक्नोद्ग्रहणातुरः॥३२॥तं
निगृह्याच्युतोदोर्भ्यांपातयित्वामहीतले। पश्यतांदिविदेवानांपशुमारममारयत्॥३३॥गुहापिधानंनिर्भिद्यगोपान्निःसार्य्य
कृच्छ्रतः। स्तूयमानःसुरैर्गोपैःप्रविवेशस्वगोकुलम्॥३४॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेव्योमासुरवधोनामसप्तत्रिंशो
ऽध्यायः॥३७॥ ९९ यामाययाविनिर्मिताअशेषविशेषामहदाद्याः यादवादिरूपावाकल्पनायेनतंधुर्य्यंश्रेष्ठंनतोस्मीति॥२४॥२५॥२६॥
ननुनारदेनव्योमवधोनदृष्टस्तत्कथंव्योमवधप्रसक्तिरितितत्रोच्यतेप्रातरेवकेशिवधानंतरंनारदोक्तमंगीकृत्यपुनस्तथैवपशूनपालयंतामो
मोहतःयद्वाव्योमवधःपूर्वमेवकृतोपिवेषधारिवधप्रसंगादत्रोच्यतइतिद्रष्टव्यंकेचित्तुनःशंखचूडवधात्पूर्वमेवपठंतिचतमाहएकदेति॥२७॥२८॥
मेषायितानमेषवदाचरितान्स्वयंचोरवदाचरितःसन्अपोवाहअपकृष्यनिनाय॥२९॥पिदधेकादितवान्॥३०॥शरणदःआश्रयप्रदःहरिःसिंहइव
॥३१॥३२॥पशुमारंपशुमारोयथाभवतितथाअनिःश्वासमितस्तयैः॥३३॥अविनोपैःस्तूयमानःउपरिविमानिकैर्देवैरिति॥३४॥ [illegible]

अष्टत्रिंशेयथाध्यायन्नक्रूरोगोकुलंगतः।तथैवरामकृष्णाभ्यांगृहंनीत्वासुसत्कृतः॥१॥प्रातःकेशिवधेवृत्तेद्वादश्यांनिर्गतेमुनौ।ततोऽन्येद्युरक्रूरःसा
यंगोकुलमागमत्॥२॥तदेवंनारदेनकंसवधादिकार्येविज्ञापितेश्रीकृष्णोमथुरांगंतुमुद्यतोवर्ततेतदाऽक्रूरोपिगोकुलमागमत् इत्याहअक्रूरोपीति
अपीतिसंभावनायाम्॥१॥२॥अर्हतेयोग्याय॥३॥स्वस्यकृष्णस्यदर्शनेअसंभवमाशंक्यपुनःसंभावयतिममैतदितिद्वयेनविषयात्मनोविषयाविष्ट
चित्तस्यशूद्रजन्मयस्यतस्यब्रह्मकीर्तनंवेदोच्चारणंयथेति॥४॥यद्वामैवंकिंतुअधमस्यनीचस्यापिममस्यादेवकुतइत्यतआहह्रियमाणःकालनद्ये
तिअयंभावःयथानद्याह्रियमाणानांतृणादीनांमध्येकिंचित्कदाचित्तरतिकूलंप्राप्नोतितथाकर्मवशेनकालेनह्रियमाणानांजनानांजीवानामपिमध्येक

श्रीशुकउवाच॥अक्रूरोऽपिचतांरात्रिंमधुपुर्यांमहामतिः।उषित्वारथमास्थायप्रययौनंदगोकुलम्॥१॥गच्छन्पथिमहाभागो
भगवत्यंबुजेक्षणे।भक्तिंपरामुपगतएवमेतदचिंतयत्॥२॥किंमयाचरितंभद्रंकिंतप्तंपरमंतपः।किंवाऽथाप्यर्हतेदत्तंय
द्द्रक्ष्याम्यद्यकेशवम्॥३॥ममैतद्दुर्लभंमन्यउत्तमश्लोकदर्शनम्।विषयात्मनोयथाब्रह्मकीर्तनंशूद्रजन्मनः॥४॥मैवंममा
धमस्यापिस्यादेवाच्युतदर्शनम्।ह्रियमाणःकालनद्याक्वचित्तरतिकश्चन॥५॥ममाद्यामंगलंनष्टंफलवांश्चैवमेभवः॥य
न्नमस्येभगवतोयोगिध्येयांघ्रिपंकजम्॥६॥कंसोबताद्याकृतमेऽत्यनुग्रहंद्रक्ष्येऽघ्रिपद्मंप्रहितोऽमुनाहरेः।कृतावता
रस्यदुरत्ययंतमःपूर्वेतरन्यन्नखमण्डलत्विषा॥७॥यदर्चितंब्रह्मभवादिभिःसुरैःश्रियाचदेव्यामुनिभिःससात्वतैः।गोचा
रणायानुचरैश्चरद्वनेयद्गोपिकानांकुचकुंकुमांकितम्॥८॥द्रक्ष्यामिनूनंसुकपोलनासिकंस्मितावलोकारुणकंजलोचन
म्।मुखंमुकुंदस्यगुडालकावृतंप्रदक्षिणंमेप्रचरंतिवैमृगाः॥९॥अप्यद्यविष्णोर्मनुजत्वमीयुषोभारावतारायभुवोनिजे
च्छया॥

९श्चित्तरेदितिसंभवतीति॥५॥अतोऽन्यस्यप्रकृतस्यैवममामंगलंध्रुवंनष्टमेवेतिज्ञायतेभवोजन्मचसफलंजातमितियत्यतःनमस्क
रिष्यामि॥६॥अमंगलनाशेसूचकान्तरमाहकंसइतिबतेत्याश्चर्येअतिखलःकंसोपिममात्यंतमनुग्रहंअकृतकृतवान्यतोऽमुनाकंसेनप्रहितो
हरेरंघ्रिपद्मंद्रक्ष्येद्रक्ष्यामीतिपूर्वेअंबरीषादयःतमःसंसारंअतरन्तीर्णाः॥७॥अंघ्रिपद्मंविभावयतियदितिब्रह्मभवादिभिरर्चितमितिपरमै
श्वर्यमाहश्रियाचेतिसौभाग्यातिशयंमुनिभिर्भक्तसहितैरितिपरमपुरुषार्थत्वंगोचारणायेतिकृपालुत्वंयद्गोपिकानामितिप्रेममात्रसुलभत्वं॥८॥
मनोरथांतरंकरोतिद्रक्ष्यामीतिशोभमानौकपोलौनासिकाचयस्मिन्ततस्मितसहितःअवलोकोयस्मिन्अरुणेकंजवल्लोचनेयस्मिन्तच्चतच्चमु
खंगुडालकावृतंवक्रकेशावृतंतदानीमेवशुभसूचकंदृष्ट्वाऽतिहृष्यन्नाहप्रदक्षिणमिति॥९॥पुनरप्यन्यच्चिंतयतिअप्यद्येतिईयुषःप्राप्तवतःला

वण्यस्यधाम आश्रयः तस्यविलोः यद्वाविलोलीवण्ययुक्तं यद्धामवपुस्तस्य उपलंभनं दर्शनं भविता भविष्यति अपियद्येवं स्यात्तर्हिमह्यंममदृशोलो
चनस्यफलं नस्यादितिन अपितुस्यादेवेत्यर्थः॥१०॥ यईक्षितेत्यादिचतुर्भिः कुलकं तत्रैवं शंकानन्वस्मदादिवद्देवकर्तृत्वभोक्तृत्वादिधर्मैस्तत्र त
त्प्रतीयमानस्यकथंविष्णुत्वमितीमाशंकांश्लोकत्रयेणाऽपाकुर्वंश्चतुर्थेनतमहंद्रक्ष्यामीतिमनोरथंकरोतितथाहियईक्षितेतिअसत्सतोः कार्यकार
णयोः ईक्षिताईक्षणमात्रेणकर्ताऽपिअहंरहितः अहंकारहीनः तथा अपास्ततमोभिदाभ्रमः तमः स्वाज्ञानंततः अज्ञानात् भिदाभेदः ततोभ्रमः अभि
निवेशादिः अपास्ता अपाकृतास्तमआदयोयस्मिन्सः कुतएतत्तत्राहस्वतेजसा चिच्छक्त्या नित्यस्वरूपसाक्षात्कारेणतथापिस्वमाययास्वाधीनयामाययात
दीसयातस्यैवईक्षयाप्राणाक्षधीभिः सहितैः आत्मन् आत्मनिस्वस्मिन्नेवरचितैर्जीवैः सदनेषुवृंदावनतरुषुगोपीगृहेषुचक्रीडयाकर्माणिकुर्वन्सक्तवद्भा
यते आभिमुख्येनप्रतीयते॥११॥ ननुसर्वथाहंकारादिरहितस्यात्मारामस्यलीलापिकुतइत्याशंक्यपरानुग्रहार्थेत्याशयेनाहयस्येतिअखिलानिअखिलस्य

लावण्यधाम्नोभवितोपलंभनंमह्यंनन स्यात्फलमंजसादृशः॥१०॥ यईक्षिताऽहंरहितोऽप्यसत्सतोः स्वतेजसाऽपास्ततमो
भिदाभ्रमः। स्वमाययात्मन्रचितैस्तदीक्षया प्राणाक्षधीभिः सदनेष्वभीयते॥११॥ यस्याखिलामीवहभिः सुमंगलैर्वाचोवि
मिश्रागुणकर्मजन्मभिः। प्राणंतिशुंभंतिपुनंतिवैजगद्यास्तद्विरक्ताः शवशोभनामताः॥१२॥ सचावतीर्णः किलसात्वतान्व
येस्वसेतुपालामरवर्य्यशर्मकृत्। यशोवितन्वन्व्रजआस्तईश्वरोगायंतिदेवायदशेषमङ्गलम्॥१३॥ तंत्वद्यनूनंमहतांग
तिंगुरुंत्रैलोक्यकांतंदृशिमन्महोत्सवम्। रूपंदधानंश्रियईप्सितास्पदंद्रक्ष्येममासन्नुषसः सुदर्शनाः॥१४॥ अथावरूढः स
पदीशयोरथात्प्रधानपुंसोश्चरणंस्वलब्धये। धियाधृतंयोगिभिरप्यहंध्रुवंनमस्यआभ्यांचसखीन्वनौकसः॥१५॥ ॥यस्याखिलामीवहा

निपापानिघ्नंतीत्यखिलामीवहानितैस्तथासुमंगलैः शोभनानिमंगलानियेभ्यस्तैः गुणाः करुणादयः कर्माणिजन्मानिचतैर्विमिश्रायुक्तावाचोज
गत्प्राणंतिजीवयंतिशुंभंतिशोभयंतिपुनंति पवित्रयंतिव्यतिरेकमाहयाइतितैर्विरक्ताः रहिताः तास्तुस्वलंकृताः अपिवस्त्राद्यलंकृतशववच्छोभ
मानाः मताः संमताः॥१२॥ स्वयंरचितान् सेतून्वर्णाश्रमधर्मान्पालयताममरवर्याणांसुखकर्तासन्नवतीर्णः यत्यशः॥१३॥ त्रैलोक्येएकमेवकांतंदृ
शिईक्षितृदृतांमहानुत्सवोयस्मात् यद्वामहानुत्सवस्वएव अतएवश्रियईप्सितमास्पदंएवंभूतंरूपंश्रीमूर्तिंदधानंतमीश्वरंद्रक्ष्यामीतिअत्रलिङ्गं उषसः प्र
भातसमयाः सुदर्शनाः शुभदर्शनाः सुखप्रभातारजन्यः शुभसूचकाबभूवुरित्यर्थः॥१४॥ किंच अथदर्शनानंतरंसपदितत्क्षणमेवरथादवतीर्णः
[illegible]प्रधानपुरुषयोः रामकृष्णयोश्चरणंयोगिभिरपिभावनाभाव्यकेवलं[illegible]सासादहंनमस्यामिआभ्यांसहवनौकसः सखीन्गोपान्नमस्या





किंच अपीतिअथास्यतत्पादयोः तदिआवयतिदनायस्य [illegible]

किंच अपीति अधास्यत् धास्यति तद्विभावयति दत्ताभयमिति [illegible] ॥१६॥ बलिश्चाप [illegible] यस्मिन्नर्पितमभूत् दानसमये तस्य हस्ते उदकं निहितं कौशि
कइन्द्रः तेनापि कदाचित् किंचिन्निहितमिति ज्ञातव्यं मुमुक्षूणां संसारभयनिवर्तकं सकामानां अभ्युदयप्रदं चेत्युक्तं अनुरक्तानां परमसुखदं चेत्याह
यद्वा वाशब्दो वितर्के विहारे रासक्रीडायां सौगंधिकस्य गंधइव गन्धो यस्य तत्सौगंधिकगंधि ॥१७॥ एवं परमानुग्रहसंभावनमपुनरप्यसंभवमाशंक्य
परिहरति नमयीति यद्यप्यहं कंसेन प्रहितः अतस्तस्य दूतः तथापि मयि अरेरयमिति बुद्धिं न उपैष्यति न करिष्यतीत्यर्थः यतो विश्वदृक् सर्वज्ञः अतो
मम चेतसोंऽतश्च बहिश्च यदीहितं चेष्टितम् एतत् यः क्षेत्रज्ञः अंतर्यामी नित्यज्ञानेनेक्षते अयंभावः चेतसो बहिरेव कंसमनुवर्ते अंतस्तु कृष्णमेव त
देतदसौ हृदिस्थितो जानातीति यद्वा एतस्य जगतः ईहितमिति ॥१८॥ अपि यदि अंघ्रिमूले चरणोपांते अवहितं संयतं कृपाऽमृतेन आर्द्रया दृशा

अप्यंघ्रिमूले पतितस्य मे विभुः शिरस्यधास्यन्निजहस्तपंकजम् । दत्ताभयं कालभुजंगरंहसा प्रोद्वेजितानां शरणैषिणां नृणाम् ॥१६॥ समर्हणं यत्र निधाय कौशिकस्तथा बलिश्चाप जगत्त्रयेन्द्रताम् । यद्वा विहारे व्रजयोषितां श्रमं स्पर्शेन सौगंधिकगन्ध्यपानुदत् ॥१७॥ न मय्युपैष्यत्यरिबुद्धिमच्युतः कंसस्य दूतः प्रहितोपि विश्वदृक् । योंऽतर्बहिश्चेतस एतदीहितं क्षेत्रज्ञ ईक्षत्यमलेन चक्षुषा ॥१८॥ अप्यंघ्रिमूलेऽवहितं कृताञ्जलिं मामीक्षिता सस्मितमार्द्रया दृशा । सपद्यपध्वस्तसमस्तकिल्बिषो वोढा मुदं वीतविशंक ऊर्जिताम् ॥१९॥ सुहृत्तमं ज्ञातिमनन्यदैवतं दोर्भ्यां बृहद्भ्यां परिरप्स्यतेऽथ माम् । आत्मा हि तीर्थीक्रियते तदैव मे बंधश्च कर्मात्मक उच्छ्वसित्यतः ॥२०॥ लब्ध्वाङ्गसङ्गं प्रणतं कृताञ्जलिं मां वक्ष्यतेऽक्रूर ततेत्युरुश्रवाः । तदा वयं जन्मभृतो महीयसा नैवादृतो यो धिगमुष्य जन्म तत् ॥२१॥ न तस्य कश्चिद्दयितः सुहृत्तमो न चाप्रियो द्वेष्य उपेक्ष्य एव वा । तथाऽपि भक्तान् भजते यथा तथा सुरद्रुमो यद्वदुपाश्रितोऽर्थदः ॥२२॥

१९ मां ईक्षिता द्रक्ष्यति तर्हि सपद्येव विनष्टाखिलकल्मषः परां मुदं वोढा प्राप्स्यामीति ॥१९॥ अथ मां परिरप्स्यते आलिंगिष्यति यदा तदैव मे आत्मा देहः तीर्थीक्रियते अतिपवित्रीकरिष्यते उच्छ्वसिति श्लथो भविष्यति
अतो देहात् ॥२०॥ ततमोऽस्तात इति तदा जन्मभृतः सफलजन्मानः अन्यथा तज्जन्मैव न भवतीत्याह महीयसेति महीयसा श्रीकृष्णेन यो नादृतः अमु
ष्य तस्य जंतोस्तज्जन्म धिक् ॥२१॥ ननु सुहृदादिषु परिष्वङ्गसंप्रश्नादयो जीवधर्माः कथमीश्वरे सङ्गच्छन्ते अत आह न तस्येति दयितः प्रियः तद्विपरी
तोऽप्रियः सुहृत्तमो हिततमः तद्विपरीतो द्वेष्यः एतत्सर्वं व्यतिरिक्त उपेक्ष्य इति दयितादयो न संतीति सत्यं तथापि भक्तान् भजते तत्र च यथा ये भक्ता
स्तांस्तथा भजते ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति भगवद्वचनात् अविषमत्वेऽपि भक्तेभ्य एव फलं ददातीत्यत्र दृष्टांतः यद्वत् सुरद्रुम इति ॥२२॥

योमय्यंजलिःकरिष्यतेतस्मिन्नेवअंजलौगृहीतंमांआप्तानिसमस्तानिअर्घादिसत्कृतानियेनतंमां॥२३॥सतुमार्गमपिनवेदतथापिरथेनप्राप्तइ
ति॥२४॥अखिलैर्लोकपालैःकिरीटेषुजुष्टाअमलाःपादरेणवोयस्यतस्यक्षितिकौतुकानिक्षितेरलंकाररूपाणि॥२५॥तद्दर्शनेनयआल्हादस्तेनवि
वृद्धःसंभ्रमोयस्यसः प्रेम्णाऊर्ध्वानिरोमाणियस्यसः अश्रूणांकलाभिर्लेशैःआकुलेईक्षणेयस्यसः अवस्कंद्यअवप्लुत्यतेषुपदेषुसोऽक्रूरः अचेष्टतव्य
लुठत्अहोइतिदुर्लभतांभावयन्॥२६॥ननुकिमर्थमेवंव्यलुठत्नास्तिप्रेमसंभ्रमेफलोद्देशइत्याहदेहभृतामितिदेहभाजांमेतावानेवपुरुषार्थःकं
सस्यसंदेशादारभ्यहरेर्लिंङ्ग्दर्शनश्रवणादिभिर्योयःमक्रूरस्यवर्णितइतिसंदेशआद्योयस्यार्थस्यसयावानक्रूरस्यजातइतिवा॥२७॥ततःकृष्णंच

किंवाऽग्रजोमाऽवनतंयदूत्तमःस्मयन्परिष्वज्यगृहीतमंजलौ।गृहंप्रवेश्याप्तसमस्तसत्कृतंसंप्रेक्ष्यतेकंसकृतंस्वबंध
षु॥२३॥श्रीशुकउवाच॥इतिसंचिंतयन्कृष्णंश्वफल्कतनयोऽध्वनि।रथेनगोकुलंप्राप्तःसूर्यश्चास्तगिरिंनृप॥२४॥पदा
नितस्याखिललोकपालकिरीटजुष्टामलपादरेणोः।ददर्शगोष्ठेक्षितिकौतुकानिविलक्षितान्यब्जयवांकुशाद्यैः॥२५॥तद्दर्श
नाल्हादविवृद्धसंभ्रमःप्रेम्णोर्ध्वरोमाऽश्रुकलाकुलेक्षणः।रथादवस्कंद्यसतेष्वचेष्टतप्रभोरमून्यंघ्रिरजांस्यहोइति॥२६॥देहंभृ
तामियानर्थोहित्वादंभंभियंशुचम्।संदेशाद्योहरेर्लिंगदर्शनश्रवणादिभिः॥२७॥ददर्शकृष्णंरामंचव्रजेगोदोहनंगतौ॥
पीतनीलांबरधरौशरदंबुरुहेक्षणौ॥२८॥किशोरौश्यामलश्वेतौश्रीनिकेतौबृहद्भुजौ।सुमुखौसुंदरवरौबालद्विरदविक्र
मौ॥२९॥ध्वजवज्रांकुशांभोजैश्चिन्हितैरंघ्रिभिर्व्रजम्।शोभयंतौमहात्मानौसानुक्रोशस्मितेक्षणौ॥३०॥उदाररुचिरक्री
डौस्रग्विणौवनमालिनौ।पुण्यगंधानुलिप्तांगौस्नातौविरजवाससौ॥३१॥प्रधानपुरुषावाद्यौजगद्धेतूजगत्पती॥अव
तीर्णौजगत्यर्थेस्वांशेनबलकेशवौ॥३२॥दिशोवितिमिराराजन्कुर्वाणौप्रभयास्वया॥यथामारकतःशैलोरौप्यश्च
कनकाचितौ॥३३॥रथात्तूर्णमवप्लुत्यसोऽक्रूरःस्नेहविह्वलः।पपातचरणोपांतेदंडवद्रामकृष्णयोः ॥ ३४ ॥

रामंचददर्शगावोदुह्यन्तेऽस्मिन्नितिगोदोहनंतत्स्थानंगतौप्राप्तौ॥२८॥२९॥अनुक्रोशोऽनुकंपातद्विलसितस्मितयुक्तमीक्षणंययोस्तौ॥३०॥उ
दाराःरुचिराःक्रीडायययोस्तौस्रग्विणौरत्नस्रग्भिरलंकृतौ॥३१॥प्रधानभूतौपुरुषौप्रकृतिपुरुषात्मकौवाकुतःआद्यौतदपिकुतःजगद्धेतूजगत्का
रणौअतएवजगत्पतीविपरीतौवाचतुर्णांपदानांहेतुहेतुमद्भावःजगत्यर्थेस्थित्याभारापनयनायस्वांशेनमूर्तिभेदेनबलकेशवौसंगतौ॥३२॥
[illegible]कनकाचितौसुवर्णेनव्याप्ताविति[illegible]अलंकारयोःशैलसादृश्यार्थंकनकम् ॥ ३३ ॥ ३४ ॥ ॥ ॥

भगवद्दर्शनाल्हादेन यद्बाष्पं तेन पर्याकुले ईक्षणे यस्य सः पुलकैराचितान्यङ्गानि यस्य सः स्वाख्याने अक्रूरोऽहं नमस्करोमीति कथने नाशक्नोत ॥३५॥
अभिप्रेत्य अक्रूरोऽयमेतदर्थमागतमिति ज्ञात्वा कंसहननसामर्थ्यं द्योतयन्निव रथाङ्गेन चक्रेणाङ्कितो यः पाणिस्तेनाभ्युपाकृष्य तमालिङ्गितवान् ॥
॥३६॥ पाणी अञ्जलिरूपेण संहतावेव गृहीत्वा ॥३७॥ मधुपर्क एवार्हणं तस्मिन्वा यदुचितमर्हणं आहरत् आनीय समर्पितवानित्यर्थः ॥३८॥३९॥४०॥
सत्कृतं संमानितं निरनुग्रहे क्रूरे कथं केन प्रकारेण स्थ जीवथेत्यर्थः सौनः पशुघाती स एव पालको येषामवीनां मेषाणां तद्वत्तत्तुल्या इत्यर्थः ॥४१॥ निर

भगवद्दर्शनाह्लादबाष्पपर्याकुलेक्षणः । पुलकाचिताङ्ग औत्कण्ठ्यात्स्वाख्याने नाशकन्नृप ॥३५॥ भगवांस्तमभिप्रेत्य रथाङ्गाङ्कितपाणिना । परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्सलः ॥३६॥ संकर्षणश्च प्रणतमुपगुह्य महामनाः । गृहीत्वा पाणिना पाणी अनयत्सानुजो गृहम् ॥३७॥ पृष्ट्वाऽथ स्वागतं तस्मै निवेद्य च वरासनम् । प्रक्षाल्य विधिवत्पादौ मधुपर्कार्हणमाहरत् ॥३८॥ निवेद्य गां चातिथये संवाह्य श्रान्तमादृतः । अन्नं बहुगुणं मेध्यं श्रद्धयोपाहरद्विभुः ॥३९॥ तस्मै भुक्तवते प्रीत्या रामः परमधर्मवित् । मुखवासैर्गन्धमाल्यैः परां प्रीतिं व्यधात्पुनः ॥४०॥ पप्रच्छ सत्कृतं नन्दः कथं स्थ निरनुग्रहे । कंसे जीवति दाशार्ह सौनपाला इवावयः ॥४१॥ योऽवधीत्स्वस्वसुस्तोकान्क्रोशन्त्या असुतृप्खलः । किं नु स्वित्तत्प्रजानां वः कुशलं विमृशामहे ॥४२॥ इत्थं सूनृतया वाचा नन्देन सुसभाजितः । अक्रूरः परिपृष्टेन जहावध्वपरिश्रमम् ॥४३॥ इति श्रीभागवते दशमस्कन्धे अक्रूरागमनं नाम अष्टत्रिंशोऽध्यायः ॥३८॥ श्रीशुक उवाच ॥ सुखोपविष्टः पर्य्यङ्के रामकृष्णोरुमानितः । लेभे मनोरथान्सर्वान्पथि यान्स चकार ह ॥१॥ किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने । तथापि तत्परा राजन् नहि वाञ्छन्ति किंचन ॥२॥ सायंतनाशनं कृत्वा भगवान्देवकीसुतः । सुहृत्सु वृत्तं कंसस्य पप्रच्छान्यच्चिकीर्षितम् ॥३॥ श्रीभगवानुवाच ॥ तात सौम्यागतः कच्चित्स्वागतं भद्रमस्तु वः ॥

॥ ९नुग्रहतामाह योऽवधीदिति लोकान्तोकानि असुतृप् असून्जीवानेव तर्पयति यः सः खलः तस्य कंसस्य प्रजानां हे अक्रूर येषां जीवनमात्रमपि दुर्लभं तेषां वः किं नु कुशलं विचारयामह इति ॥४२॥ सूनृतया वाचा इत्थं सत्कृतः तथैव वाचा परिपृष्टेन प्रश्नेन अध्वपरिश्रमं संसारश्रमम् ॥४३॥ इति दशमे टीकायामष्टत्रिंशोऽध्यायः ॥३८॥ नवत्रिंशे पुरीं गच्छत्यच्युते गोपिकोक्तयः । अक्रूरेणाथ कालिन्द्यां विष्णुलोकस्य दर्शनम् ॥१॥ भक्तानां मनोरथाः सत्या भवन्तीति द्योतयन्नाह सुखोपविष्ट इति रामकृष्णाभ्यां उरु अधिकं मानितः ॥१॥२॥३॥ हे तात हे सौम्य स्वागतं यथा तथा आगतः स्वज्ञातिबन्धूनां से सुहृदः ज्ञातयः सपिण्डाः बन्धवः असपिण्डाः सम्बन्धिनः तेषामपि किं अनमीवं अपापमदुः ॥ ॥

खमितियावत् अनामयंआरोग्यम्॥४॥एवंप्रश्नोपिममनातिसंगतइत्याहकिन्त्विति अंगहेअक्रूरएचक्षेएच्छामिनः अस्माकंकुलस्यामयेरोगेनोमा
तुलइतिनामयस्यतस्मिन्नः स्वानांज्ञातीनांतस्यप्रजासुच॥५॥अस्मत् अस्मन्निमित्तंवृजिनंदुःखंआर्य्ययोर्निरपराधयोर्यद्धेतोःयःअहमेवहेतुःत
स्मात्॥६॥हेसौम्यस्वानांवोदर्शनंअद्यममसंजातंतत्दिष्ट्याभद्रम्॥७॥माधवःमधोर्वंशजः॥८॥यःधनुर्मखच्छद्मनासंदेशोयस्यपदर्थेचाणूरादि
भिर्घातनार्थंअस्यकंसस्यस्वजन्मकृष्णजन्मआनकदुन्दुभेःसकाशात्॥९॥विजज्ञतुःविशेषेणज्ञापयामासतुः॥१०॥सोपिनन्दःगोपान्समादिश्य
त्तदेवदर्शयतिगृह्यतामित्यादिनागोरसःक्षीरादिःउपायनानिउत्तमवस्तूनि॥११॥रसान्घृतादीन्शब्दच्छलेनेदंसूचयतिअचिकित्स्यरोगस्य

अपिस्वज्ञातिबंधूनामनमीवमनामयम्॥४॥किंनुनःकुशलंपृच्छेएधमानेकुलामये॥कंसेमातुलनाम्न्यङ्गस्वानांन
स्तत्प्रजासुच॥५॥अहोअस्मदभूद्भूरिपित्रोर्वृजिनमार्य्ययोः॥यद्धेतोःपुत्रमरणंयद्धेतोर्बंधनंतयोः॥६॥दिष्ट्याऽद्यदर्शनंस्वा
नांमह्यंवःसौम्यकांक्षितम्॥संजातंवर्ण्यतांताततवागमनकारणम्॥७॥श्रीशुकउवाच॥पृष्टोभगवतासर्वंवर्णयामासमा
धवः॥वैरानुबंधंयदुषुवसुदेववधोद्यमम्॥८॥यत्संदेशोयदर्थंवादूतःसंप्रेषितःस्वयम्॥यदुक्तंनारदेनास्यस्वजन्मानकदुंदु
भेः॥९॥श्रुत्वाऽक्रूरवचःकृष्णोबलश्चपरवीरहा॥प्रहस्यनंदंपितरंराज्ञादिष्टंविजज्ञतुः॥१०॥गोपान्समादिशत्सोपिगृह्यतां
सर्वगोरसः॥उपायनानिगृण्हीध्वंयुज्यंतांशकटानिच॥११॥यास्यामःश्वोमधुपुरींदास्यामोनृपतेरसान्॥द्रक्ष्यामःसुमहत्पर्व
यान्तिजानपदाःकिल॥१२॥एवमाघोषयत्क्षत्त्रानंदगोपःस्वगोकुले॥गोप्यस्तास्तदुपश्रुत्यबभूवुर्व्यथिताभृशं॥रामकृष्णौ
पुरींनेतुमक्रूरंव्रजमागतं॥१३॥काश्चित्तत्कृतहृत्तापश्वासम्लानमुखश्रियः॥स्रंसद्दुकूलवलयकेशग्रंथ्यश्चकाश्चन॥१४॥
अन्याश्चतदनुध्याननिवृत्ताशेषवृत्तयः॥नाभ्यजानन्निमंलोकमात्मलोकंगताइव॥१५॥स्मरंत्यश्चापराःशौरेरनुरागस्मित
रिताःहृदिस्पृशश्चित्रपदागिरःसंमुमुहुःस्त्रियः॥१६॥ ९ चिकित्सार्थंरसान्दास्यामइतिसूत्रावव्रजरक्षाऽधिकृतेनआघोषयत्सर्वतोघो
षितवान्॥१२॥ताःकृष्णैकजीवनागोप्यःतत्तदाअक्रूरमागतमुपश्रुत्येति॥१३॥व्यथालिंगान्याहपंचभिःकाश्चिदितितेनश्रवणेनकृतोयोहृ
त्तापःतेनयःश्वासस्तेनम्लानामुखलक्ष्मीर्यासांताःबभूवुरितिदुकूलानिचवलयानिचकेशग्रंथयश्चस्रंसंतःदुकूलादयोयासांताःतथाभूताःका
श्चनबभूवुरिति॥१४॥तस्यश्रीकृष्णस्यानुध्यानेननिवृत्ताअशेषाश्चक्षुरादिवृत्तयःयासांताःइमंलोकंदेहमपिनजानंतिसमुक्ताइवेति॥१५॥अ
परास्त्रियःशौरेर्गिरःस्मरंत्यःसंमुमुहुःकथंभूताःअनुरागेणयत्स्मितंतेनईरिताःहृदिस्पृशःमनोज्ञाःचित्राणिपदानियासुताः॥१६॥



॥१७॥विरहेणकातराविह्वलाःअच्युतेआशयश्चित्तंयासांताः॥१८॥

॥१७॥विरहेणकातराविह्वलाः अच्युते आशयश्चित्तंयासांताः॥१८॥कृष्णसंग[illegible]विधातारंप्रत्येवमाक्रोशंत्यआहुः अहोइतिमै
त्र्याहिताचरणेनप्रणयेनस्नेहेनचअकृतार्थान्अप्राप्तभोगानपितान्वियुनंक्षिवियोजयसितस्मान्नतवदयाबालिशोपित्वमित्याहुःअपार्थकमि
ति॥१९॥विगर्हितंतवेदंकर्मेत्याहुःयस्त्वमितिशोकमपनुदतीतिशोकापनोदःसचासौस्मितलेशश्चगूढहासःतेनसुंदरंमुकुंदस्यवक्त्रंसकृ
त्प्रदर्श्यपुनस्तस्यपारोक्ष्यंअदृश्यतांकरोषिअतःतवकृतंकर्मअसाधुनिंद्यमित्यर्थः॥२०॥किंचदत्तापहारित्वेनातिक्रूरस्त्वमित्याहुःक्रूरस्त्वमि
तिनन्वक्रूरोहरतिनाहमितिचेदतआहुःअक्रूरसमाख्ययेतिनह्येवंकर्तुमन्यःप्रभवतिअतोनामांतरेणस्माधुर्वत्वमेवागतोसिकुसंहरामिनयु
भच्चक्षुरितिचेन्नयेनत्वद्दत्तेनचक्षुषामधुद्विषःएकदेशेनेत्रवक्त्रादौत्वदीयंसमग्रसृष्टिनैपुण्यंअद्राक्ष्मदृष्टवत्योवयंतच्चक्षुःअयंभावःममसर्वेर

गतिंसुललितांचेष्टांस्निग्धहासावलोकनं॥शोकापहानिनर्माणिप्रोद्दामचरितानिच॥१७॥चिंतयंत्योमुकुंदस्यलीला
विरहकातराः।समेताःसंघशःप्रोचुरश्रुमुख्योऽच्युताशयाः॥१८॥गोप्यऊचुः।अहोविधातस्तवनक्वचिद्दयासंयोज्यमैत्र्या
प्रणयेनदेहिनः।तांश्चाकृतार्थान्वियुनंक्ष्यपार्थकंविक्रीडितंतेऽर्भकचेष्टितंयथा॥१९॥यस्त्वंप्रदर्श्यासितकुंतलावृतंमु
कुंदवक्त्रंसुकपोलमुन्नसं।शोकापनोदस्मितलेशसुंदरंकरोषिपारोक्ष्यमसाधुतेकृतं॥२०॥क्रूरस्त्वमक्रूरसमाख्ययास्मन
श्चक्षुर्हिदत्तंहरसेबताज्ञवत्।येनैकदेशेऽखिलसर्गसौष्ठवंत्वदीयमद्राक्ष्मवयंमधुद्विषः॥२१॥ननंदसूनुःक्षणभंगसौहृ
दःसमीक्ष्यतेनःस्वकृतातुराबत।विहायगेहान्स्वजनान्सुतान्पतींस्तद्दास्यमद्धोपगतानवप्रियः॥२२॥सुखंप्रभातारज
नीयमाशिषःसत्याबभूवुःपुरयोषितांध्रुवं।याःसंप्रविष्टस्यमुखंव्रजस्पतेःपास्यंत्यपांगोत्कलितस्मितासवं॥२३॥तासांमु
कुंदोमधुमंजुभाषितैर्गृहीतचित्तःपरवान्मनस्व्यपिकथंपुनर्नःप्रतियास्यतेऽबलाग्राम्याःसलज्जस्मितविभ्रमैर्भ्रमन्॥२४॥

हस्यमाभिर्ज्ञातमित्यमर्षेणैवकृत्स्नंवियोजयन्नस्मानंधीकरोषीतिच॥२१॥विधातारंविहायपरस्परमूचुःननंदसूनुरितिबतेतिखेदेक्षणभंगंअ
स्थिरंसौहृदंयस्यसः।गृहादीन्विहायअद्धासाक्षाचस्यैवदास्यमुपागताःस्वकृतातुराःतत्कृतेनैवस्मितादिनापरवशाअपिनःअस्मान्नसमीक्षते
नवंनवंप्रियंयस्यसः।अतएनंनिवारयामइतिभावः॥२२॥सैर्ष्यमूचुःसुखंप्रभातेतिव्रजस्पतेःश्रीकृष्णस्यमुखंपास्यंतिसारदेणद्रक्ष्यंतिकथंभूतंअपां
गेननेत्रप्रांतेनउत्कलितंउज्जृंभितंस्मितमेवआसवोरसोयस्मिन्तत्यद्वाअपांगोत्कलितस्मितेनासवरूपंयन्मुखंततश्चपानंमुख्यमेवसंभाव
यंति॥२३॥ननुद्वित्राणिदिनानितथाभवतुनामतथाप्यस्मत्स्नेहाकृष्टःपित्रादिभिश्चपरावर्तितःआगमिष्यतीत्याशंक्याहुःहेअबलाः ॥ ॥

तासांमधुवन्मंत्रुभिर्भाषितैर्वशीकृतचित्तस्तथातासांसलज्जस्मितैर्विभ्रमैर्भ्रमैमनपरवान् पित्रादिपरतंत्रोपियद्यावृजेपरेअन्येबंधवः संतियस्यसः तथा
मनस्वीधीरोपिग्राम्याः अविदग्धानः कथंप्रतियास्यतेप्रत्येष्यतेनकथंचिदित्यर्थः॥२४॥ किंचअस्मदुत्सवभाजोन्यएवाद्यभविष्यंतीत्याहुः अद्ये
तितत्रपुरेदाशार्हादीनांदृशः दृष्टेर्महानुत्सवोभविष्यतेभविष्यतियेदेवकीसुतंद्रक्ष्यंतितथायेचाध्वनिगच्छंतंद्रक्ष्यंतितेषामपिदृशोभविष्यती
तियद्वादृशइतिद्वितीयातेषांदृशोनेत्राणिमहोत्सवोभविष्यतेप्राप्स्यतिप्राप्स्यर्थस्यभवतेरात्मनेपदित्वात्॥२५॥ अक्रूरंशपंत्य आहुः मैतद्विधस्येति
एषाविधाविधानंकर्मयस्यअतएवनिष्कृपस्यअक्रूरइतिशोभनंनाममाभूत्तत्रहेतुः अतीवदारुणइत्यादिप्रियात्प्राणादपिप्रियतरंकृष्णंअध्वनः पा
रंअस्मदृग्गोचरत्वात् अतिदूरंदेशंनेष्यति॥२६॥ अहोधिगस्मज्जीवितमित्याहुः अनार्द्रधीरिति अनार्द्राकठिनाधीर्यस्यसः तावदेवकृष्णोरथमधिरू
ढः अस्माविनयमारुह्यस्यविरैश्चोपेक्षितंतेननिवारितवंतइत्यर्थः किंचदैवंचेति अयंभावः यदिदैवमस्माकंअनुकूलंभवेत् तर्हिविघ्नैः कश्चिदेषां

अद्यध्रुवंतत्रदृशोभविष्यतेदाशार्हभोजांधकवृष्णिसात्वतां॥ महोत्सवः श्रीरमणंगुणास्पदंद्रक्ष्यंतियेचाध्वनिदेवकीसुतं॥
॥२५॥ मैतद्विधस्याकरुणस्यनामभूदक्रूरइत्येतदतीवदारुणः। योऽसावनाश्वास्यसुदुःखितंजनंप्रियात्प्रियंनेष्यतिपारमध्व
नः॥२६॥ अनार्द्रधीरेषसमास्थितोरथंतमन्वमीचत्वरयंतिदुर्मदाः। गोपाअनोभिः स्थविरैरुपेक्षितंदैवंचनोऽद्यप्रतिकूलमी
हते॥२७॥ निवारयामः समुपेत्यमाधवंकिंनोऽकरिष्यन्कुलवृद्धबांधवाः। मुकुंदसंगान्निमिषार्द्धदुस्त्यजाद्दैवेनविध्वंसितदीन
चेतसां॥२८॥ यस्यानुरागललितस्मितवल्गुमंत्रलीलावलोकपरिरंभणरासगोष्ठ्यां। नीताः स्मनः क्षणमिवक्षणदाविनातंगो
प्यःकथंन्वतितरेमतमोदुरंतं॥२९॥ योऽह्नः क्षयेव्रजमनंतसखः परीतोगोपैर्विशन्खुररजश्छुरितालकस्रक्॥ वेणुंक्वणन्स्मि
तकटाक्षनिरीक्षणेनचित्तंक्षिणोत्यमुमृतेनुकथंभवेम॥३०॥ श्रीशुकउवाच॥ एवंब्रुवाणाविरहातुराभृशंव्रजस्त्रियः कृष्णविष
मध्येप्रतिहन्येत अकस्माद्वज्रपातोवाभवेत् अन्यद्वाकिंचिदनिष्टंस्यात् नतुतत् किंचिदस्तीति॥२७॥ परस्परंसंमंत्र्यसाहसम क्तमानसाः॥
धिरुह्याहुः निवारयामइतिकिंअकरिष्यन् किंकरिष्यंतिनिमिषार्द्धदुस्त्यजात्मुकुंदसंगाद्विध्वंसितानिवियोजितानिअतएवदीनानिचेतांसियासां
एवंभूतानामस्माकंनमृत्योरपिभयमित्यर्थः॥२८॥ इतोपिकारणाद्वयंसाहसमेवावलंबनीयमित्याहुः हेगोप्यः यस्यललितंस्मितंचवल्गुमंत्रश्चलीलाऽ
वलोकश्चपरिरंभणंचअनुरागेणैतानियस्यांरासगोष्ठ्यांरासक्रीडासभायांनः अस्माभिः क्षणदारात्रयः क्षणमिवनीतास्तमृतेकृष्णंविनादुरंतंतमः विरहदुः
खंकथंनुअतितरेमनकथंचिदित्यर्थः॥२९॥ किंचआस्तांतावत्तमोऽतितरणंजीवनमेवकथंस्यादित्याहुः यइतिअह्नः क्षयेदिनावसानेखुररजोभिः छुरि
तामि[illegible]

यासांसुस्वरंरुरुदुः॥३१॥क्रूरमक्रूरतः श्वफल्कात्‌सकंसनिषूदनः गोपीमनोरथारामः सरामः स्वपुरं ययौ॥स्त्रीणामिति ता अनादृत्य कृतमैत्रादिकः मैत्रं मित्रदेवतं संध्योपासनं तदादिकमकृतं येन सः॥३२॥अन्वसज्जंत अन्वगच्छन्‌॥३३॥अनुरंजिताः परावृत्य निरीक्षणादिभिः किंचिदानंदिताः प्रत्यादेशं प्रत्याख्यानम्‌॥३४॥तप्यतीः संतप्यमानाः आयास्ये शीघ्रमागमिष्यामीति दूतवाक्यैः॥३५॥कृष्णं अनुप्रस्थापिताः प्रापिताः आत्मनश्चित्ता

विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविंद दामोदर माधवेति॥३१॥स्त्रीणामेवं रुदंतीनामुदिते सवितर्यथ॥अक्रूरश्चोदयामास कृतमैत्रादिको रथम्‌॥३२॥गोपास्तमन्वसज्जंत नंदाद्याः शकटैस्ततः॥आदायोपायनं भूरि कुंभान्‌ गोरससंभृतान्‌॥३३॥गोप्यश्च दयितं कृष्णमनुव्रज्यानुरंजिताः॥प्रत्यादेशं भगवतः कांक्षंत्यश्चावतस्थिरे॥३४॥तास्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः॥सांत्वयामास सप्रेमैरायास्य इति दौत्यकैः॥३५॥यावदालक्ष्यते केतुर्यावद्रेणू रथस्य च॥अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिताः॥३६॥ता निराशा निववृतुर्गोविन्दविनिवर्तने॥विशोका अहनी निन्युर्गायन्त्यः प्रियचेष्टितम्‌॥३७॥भगवानपि संप्राप्तो रामाक्रूरयुतो नृप॥रथेन वायुवेगेन कालिंदीमघनाशिनीम्‌॥३८॥तत्रोपस्पृश्य पानीयं पीत्वा मृष्टं मणिप्रभम्‌॥वृक्षखंडमुपव्रज्य सरामो रथमाविशत्‌॥३९॥अक्रूरस्तावुपामंत्र्य निवेश्य च रथोपरि॥कालिंद्या ह्रदमागत्य स्नानं विधिवदाचरत्‌॥४०॥निमज्ज्य तस्मिन्सलिले जपन्ब्रह्म सनातनम्‌॥तावेव ददृशेऽक्रूरो रामकृष्णौ समन्वितौ॥४१॥तौ रथस्थौ कथमिह सुतावानकदुंदुभेः॥तर्हि स्वित्स्यंदने न स्त इत्युन्मज्ज्य व्यचष्ट सः॥४२॥तत्रापि च यथापूर्वमासीनौ पुनरेव सः॥न्यमज्जद्दर्शनं यन्मे मृषा किं सलिले तयोः॥४३॥भूयस्तत्रापि सोऽद्राक्षीत्स्तूयमानमहीश्वरम्‌॥सिद्धचारणगंधर्वैरसुरैर्नतकंधरैः॥४४॥सहस्रशिरसं देवं सहस्रफणमौलिनम्‌॥नीलांबरं बिसश्वेतं शृंगैः श्वेतमिव स्थितम्‌॥४५॥तस्योत्संगे घनश्यामं पीतकौशेयवाससम्‌॥पुरुषं चतुर्भुजं शांतं पद्मपत्रारुणेक्षणम्‌॥४६॥

१ नियाभिलाः लेख्यमयप्रतिकाइव निश्चलाः॥३६॥३७॥३८॥वृक्षाणां खंडं समूहमुपव्रज्य॥३९॥ताभ्यामनुज्ञाप्य शंकितः सन्‌ रथोपरि निवेश्य॥४०॥ब्रह्म वेदं जपन्‌॥केमौ बालौ कृतौ मल्लाविति शंकितचेतसे॥अक्रूराय जले रूपं स्वं स्वैश्वर्यमदर्शयत्‌॥४१॥४२॥४३॥सिद्धादिभिः स्तूयमानम्‌॥४४॥सहस्रं शिरांसि यस्य तम्‌ सहस्रफणेषु मौलयो यस्य सं तीतितथा तं नीले अंबरे यस्य तं बिसश्वेतं बिसवत्‌ कमलनालवत्‌ श्वेतं शृंगैः शिखरैः श्वेतं कैलासमिव स्थितम्‌॥४५॥तस्योत्संगे कुंडलीकृतदेहार्धे विलोकयेयेकादशेन श्लो

 

शोभने भ्रुवौ यस्य उन्नता नासिका यस्य तं च तं च शोभनौ कपोलौ यस्य अरुणौ अधरौ यस्य तं च तं च ॥४७॥ तुंगावंसौ यस्य उरस्स्थले श्रीर्यस्य तं च वलयः वलिमत् पल्लवोदरं वलयः तिर्यक् निम्नारेखा यस्य संतति तद्वलिमत् तच्च तत् पल्लववत् अश्वत्थदलसदृशमुदरं यस्य तम् ॥४८॥ कटितटं च श्रोणिश्च करभसदृशमूरुद्वयम् च बृहच्च तत् कटितटश्रोणिकरभोरुद्वयं च तेनान्वितम् यद्वा बृहद्भ्यां कटितटश्रोणिभ्यां करभोरुद्वयेन चान्वितम् ॥४९॥ तुंगौ ईषदुन्नतौ गुल्फौ अरुणनखव्राताश्च ते षां दीधितिभिः तथा नवाः कोमला अंगुल्यः अंगुष्ठौ च तान्येव दलानि तैश्च विलसत् शोभमानं पादपंकजं यस्य तम् ॥५०॥ महार्हा मणिव्राता येषु तैः किरीटादिभिः ॥५१॥५२॥ पृथक्पृथक्भावो ऽभिप्रायो येषां तैः तत्र पार्षदैः स्वामी ति स्तूयमानं सन

चारुप्रसन्नवदनं चारुहासनिरीक्षणम् । सुभ्रून्नसं चारुकर्णं सुकपोलारुणाधरम् ॥४७॥ प्रलंबपीवरभुजं तुंगांसोरःस्थलश्रियम् । कंबुकंठं निम्ननाभिं वलिमत्पल्लवोदरम् ॥४८॥ बृहत्कटितटश्रोणिकरभोरुद्वयान्वितम् । चारुजानुयुगं चारुजंघायुगलसंयुतम् ॥४९॥ तुङ्गगुल्फारुणनखव्रातदीधितिभिर्वृतम् । नवांगुल्यंगुष्ठदलैर्विलसत्पादपंकजम् ॥५०॥ सुमहार्हमणिव्रातकिरीटकटकांगदैः । कटिसूत्रब्रह्मसूत्रहारनूपुरकुंडलैः ॥५१॥ भ्राजमानं पद्मकरं शंखचक्रगदाधरम् । श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥५२॥ सुनंदनंदप्रमुखैः पार्षदैः सनकादिभिः । सुरेशैर्ब्रह्मरुद्राद्यैर्नवभिश्च द्विजोत्तमैः ॥५३॥ प्रल्हादनारदवसुप्रमुखैर्भागवतोत्तमैः । स्तूयमानं पृथग्भावैर्वचोभिरमलात्मभिः ॥५४॥ श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्ज्जया । विद्ययाऽविद्यया शक्त्या मायया च निषेवितम् ॥५५॥ विलोक्य सुभृशं प्रीतो भक्त्या परमया युतः । हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥५६॥ गिरा गद्गदयाऽस्तौषीत्सत्त्वमालंब्य सात्वतः । प्रणम्य मूर्ध्नाऽवहितः कृतांजलिपुटः शनैः ॥५७॥ इति श्रीभागवते महापुराणे दशमस्कन्धे अक्रूरप्रतियाने एकोनचत्वारिंशोऽध्यायः ॥३९॥ अक्रूर उवाच ॥ नतोऽस्म्यहं त्वाऽखिलहेतुहेतुं नारायणं पूरुषमाद्यमव्ययम् । यन्नाभिजातादरविंदकोशाद्ब्रह्माविरासीद्यत एष लोकः ॥१॥ ९ कादिभिर्ब्रह्मेति ब्रह्माद्यैः महेश्वर इति मरीच्यादिभिर्द्विजोत्तमैः परः प्रजापतिरिति ॥५३॥ वसुरूपपरिचरः प्रल्हादनारदवसवः प्रमुखा मुख्या येषां तैः परं दैवतमिति च गुरुरित्येवं वचोभिः पृथग्भावैर्वचोभिरिति वा ॥५४॥ विद्याविद्ये जीवानां मुक्तिसंसृतिहेतू माया तयोः कारणं शक्तिर्ह्लादिनी संवित् ज्ञानम् आभिरन्याभिश्च निषेवितम् ॥५५॥ विलोक्य सुभृशं प्रीतः असतः कृष्णोऽसावेवंभूतः परमेश्वर इति ज्ञात्वेति ॥५६॥५७॥ इति श्रीभागवते महापुराणे दशमस्कन्धेऽक्रूरप्रतियाने नामैकोनचत्वारिंशोऽध्यायः ॥३९॥ चत्वारिंशे ततोऽक्रूरः कृष्णं मत्वेश्वरेश्वरम् । प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदतः ॥ १ ॥



श्रीकृष्णं प्रणमति नतोस्मीति हे कृष्ण त्वां नतोस्मि...

श्रीकृष्णं प्रणमति नतोस्मीति हे कृष्ण त्वां नतोस्मि ननु त्वमस्मान् किमर्थं नमसि कुतो मां वा कं नतोसि तत्राह आद्यं पुरुषं अव्ययं च अनादिनिधनमित्यर्थः कुत एतत् अखिलहेतूनां हेतुं सत्तु नारायणो नाहमिति चेत् तत्राह नारायणं त्वां किं नारायण इति मां स्तौषि कोऽत्र स्तुतिः सत्यमेवेत्याह यन्नाभिजातादिति यतो ब्रह्मणः ॥ १ ॥ अखिलहेतुहेतुत्वं प्रपंचयति भूरिति खस्यादिरहंकारः अजा माया तस्या आदिः पुरुषः एते ये जगतो हेतवस्ते सर्वे तव अङ्गभूताः अंगात् श्रीमूर्तेर्भूताः उपसर्जनभूता वा ॥ २ ॥ नन्वतिस्तुतिः किं क्रियते अहमेवान्यत उत्पन्नः तत्सर्वं तत्र श्रेत्याशंक्य तवैषा माया त्वत्पारमार्थ्यं तु न कोपि वेदेत्याह नैत इति एते अजा आदिर्येषां ते आत्मनस्ते स्वरूपं न विदुः अनात्मतया जडत्वेन कारणेन जडत्वे हेतुर्गृहीताः प्रत्यक्षादिभिर्दृष्टाः न ह्य जडो दृश्यगोचर इति भावः ननु जडा मा मा जानंतु जीवस्तु ज्ञास्यतीत्यत आह अज इति स अजो ब्रह्मा अपि अजाया गुणैरनुबद्धः आवृतः गुणातीतं ते तव स्वरूपं न वेद अन्यः जीवस्तु कुतः ज्ञास्यतीति पद्मप्रकृत्यार्थः आत्मनः स्वरूपं तव स्वरूपं च न विदुः जडत्वादेव जीवस्तु तान् आत्मानं च वेत्ति न पुनः त्वत्स्वरूपमिति यथोक्तं हंसगुह्ये देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनंतमीडे इति ॥ ३ ॥ ननु यदि केऽपि न

भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इंद्रियाणि। सर्वेंद्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽङ्गभूताः ॥ २ ॥ नैते स्वरूपं विदुरात्मनस्ते ह्यजादयोऽनात्मतया गृहीताः। अजोऽनुबद्धः स गुणैरजाया गुणात्परं वेद न ते स्वरूपम् ॥ ३ ॥ त्वां योगिनो यजंत्यद्धा महापुरुषमीश्वरम्। साध्यात्मं साधिभूतं च साधिदैवं च साधवः ॥ ४ ॥ त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजाः। यजंते विततैर्यज्ञैर्नानारूपामराख्यया ॥ ५ ॥ एके त्वाऽखिलकर्माणि संन्यस्योपशमं गताः। ज्ञानिनो ज्ञानयज्ञेन यजंति ज्ञानविग्रहम् ॥ ६ ॥ अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते। यजंति त्वन्मयास्त्वां हि बहुमूर्त्येकमूर्तिकम् ॥ ७ ॥

९ जानंति कथं तर्हि संसारनिवृत्तिर्जीवानामित्याशंक्य सा स्वदृग्गोचरत्वेपि येन केनापि मार्गेण भजतां त्वं गम्योऽसीत्याह त्वां योगिन इति हैरण्यगर्भादयोऽध्यात्माधिभूताधिदैवसाक्षिणं महापुरुषं तदंतर्यामिस्वरूपमीश्वरं नियंतारं च यजंति ॥ ४ ॥ तदेवं सांख्ययोगावेकीकृत्योक्तौ त्रयीमार्गं कर्मज्ञानभेदेन दर्शयति त्रय्या चेति श्लोकद्वयेन वैतानिकाः कर्मयोगिनः त्वां वै त्वामेव यजंते ननु ते इंद्रवरुणादीन् यजंते न तु मामिति अत आह नानावज्रहस्तादीनि रूपाणि येषां ते ये अमरास्तेषामाख्यया नाम्ना त्वामेव यजंत इति अयं भावः ऐंद्रवारुणादिसूक्तैरिंद्रादयः सर्वैश्वर्येण प्रकाश्यंते न च सर्वैश्वर्यं बहवः संभवंति अतो नामभेदेन त्वामेव यजंत इति तथा च श्रुतिः सप्रथमः सप्रकृतिर्विश्वकर्मा सप्रथमो मित्रावरुणोऽग्निः सप्रथमो बृहस्पतिश्चिकित्वान् तस्मादिंद्राय हविरा जुहोतीति ॥ ५ ॥ ज्ञानयज्ञेन समाधिना ॥ ६ ॥ सांख्ययोगत्रयीमार्गोक्ताः वैष्णवशैवमार्गौ वा द्वयेन अन्ये चेति संस्कृतात्मानः वैष्णवशैवदीक्षयादीक्षिताः संतः ते त्वया अभिहितेन पंचरात्रविधिना त्वन्मयाः त्वन्मयत्वेनात्मानं चिंतयंतः त्वदेकप्रधाना इति वा वासुदेवसंकर्षणप्रद्युम्नानिरुद्धभेदेन बहुमूर्तिं नारायणरूपेणैकमूर्तिकं च त्वामेव यजंति ॥ ७ ॥

बह्वाचार्य्यविभेदेनेतिनानाभेदशैवपाशुपतादिमार्गेण॥८॥येपिक्षुद्रदेवताभक्तास्तेपित्वामेवयजंतीत्याह सर्वएवेतिद्वेसर्वदेवमयनन्वेतेपरस्प
रदेवताधिक्षेपकलहव्याकुलचित्ताःकथमेकमेवयजंतीत्युच्यतेतत्राह यद्यप्यन्यधियइतिबुद्धिमात्रभेदोनवस्तुभेदइत्यर्थः॥९॥तस्मात्सर्वेमा
र्गास्त्वय्येवपर्य्यवस्यंतीतिसदृष्टांतमाह यथेति अद्रेःसकाशात्सर्वतःप्रभवंतियानद्यःताःपुनःपर्जन्येनापूरिताःबहुस्रोतसःसत्यःसर्वतःसिंधुमेव
विशंतियथातद्वदेतागतयोमार्गाअंततस्त्वामेवविशंतीति॥१०॥अत्रहेतुमाहसत्त्वमितिभवतःशक्तिर्याप्रकृतिस्तस्याःसत्वादयोगुणाःअतःप्राकृ
ताःप्रकृतिकार्य्योपाधयोब्रह्मपर्य्यंताःस्थावरादयोजीवाःस्वोपाधिद्वारातेषुगुणेषुप्रोताःप्रविष्टाःतेचप्रकृतौसाचत्वयीतिअतःक्रमेणोपाधिलयात्सर्वे
पित्वामेवप्रविशंतीतियद्वाभवतःप्रकृतेर्गुणेषुप्रोताःब्रह्मादयोभवद्व्यतिरिक्तानसंतिअतस्त्वमेवसर्वदेवमयइति॥११॥ननुभवतःप्रकृतेरितिवदन्म

त्वामेवान्येशिवोक्तेनमार्गेणशिवरूपिणम्।बह्वाचार्य्यविभेदेनभगवन्त्समुपासते॥८॥सर्वएवयजंतित्वांसर्वदेवमयेश्वर
म्।येप्यन्यदेवताभक्तायद्यप्यन्यधियःप्रभो॥९॥यथाद्रिप्रभवानद्यःपर्जन्यापूरिताःप्रभो।विशंतिसर्वतःसिंधुंतद्वत्त्वांगतयों
ऽततः॥१०॥सत्वंरजस्तमइतिभवतःप्रकृतेर्गुणाः।तेषुहिप्राकृताःप्रोताआब्रह्मस्थावरादयः॥११॥तुभ्यंनमस्तेऽस्त्वविषक्तदृ
ष्टयेसर्वात्मनेसर्वधियांचसाक्षिणे।गुणप्रवाहोऽयमविद्ययाकृतःप्रवर्ततेदेवनृतिर्य्यगात्मसु॥१२॥अग्निर्मुखंतेऽवनिरंघ्रिरीक्ष
णंसूर्योनभोनाभिरथोदिशःश्रुतिः।द्यौःकंसुरेंद्रास्तवबाहवोऽर्णवाःकुक्षिर्मरुत्प्राणबलंप्रकल्पितम्॥१३॥रोमाणिवृक्षौषधयः
शिरोरुहामेघाःपरस्यास्थिनखानितेऽद्रयः।निमेषणंरात्र्यहनीप्रजापतिर्मेढ्रस्तुवृष्टिस्तववीर्य्यमिष्यते॥१४॥त्वय्यव्ययात्म
न्पुरुषैःप्रकल्पितालोकाःसपालाबहुजीवसंकुलाः॥

ममापिप्रकृतिसंबंधश्चेदीषितत्वस्यतेषांममचकोविशेषःस्यादित्याशंक्यविशेषमाह
तुभ्यमिति अविषक्तदृष्टये अलिप्तबुद्धयेकुतःसर्वात्मनेस्वव्यतिरिक्ताभावादविषक्तदृष्टित्वमित्यर्थः किंचसर्वधियांसाक्षिणेसर्वबुद्धिसाक्षित्वान्नका
पिबुद्धिलेपइत्यर्थः इतरेतुसंसरंतीत्याहगुणप्रवाहइतिदेवनृतिर्य्यञ्चःआत्मानोयेषांतेषुदेवादिशरीराभिमानिष्वित्यर्थः अविद्ययाकृतोयं
गुणप्रवाहःप्रवर्ततेअतोमहान्विशेषइत्यर्थः॥१२॥सर्वात्मनइत्यनेनोक्तंसगुणंरूपंस्तौतिअग्निर्मुखमितिद्वाभ्यांअग्न्यादीनन्नूद्येश्वरावयव
ताविधीयतेयोऽयमग्निःसत्तुतवमुखमित्यादिवचनव्यक्त्याईक्षणंचक्षुःश्रुतिःश्रवणेंद्रियंकंमूर्द्धाप्राणश्चबलंचतत्॥१३॥अद्रयःपरस्यतेअ
स्थिनखानि॥१४॥नकेवलमेतावत्किंतुसर्वोऽप्ययंप्रपंचस्त्वदवयवभूतएवेतिवदन्नेवंसत्यपिप्रपंचस्यषड्जन्मादयोविकाराःत्वयिनप्र
[illegible] ॥ ॥

थिमनोमये मनःप्रधाने मनोरतिव्यङ्ग्ये दृश्यते ऽस्मिन्मायामुत्तमानसैवानुद्रष्टव्यं इत्यादिश्रुतेः अतो यथा जलौकसः सूक्ष्मप्राण्यण्डराशयः यथा च उदुंबरांतः केसरेषु मशकाः परस्परवार्तानभिज्ञाः एवमनंतानि ब्रह्माण्डानि त्वयि संचरंतीत्यर्थः॥१५॥ तस्मादेवंभूतं तव स्वरूपं दुरवगाहमिति त्वदवतारकथाः स्मृतमेव संतः सेवंत इत्याह यानि यानीति आमृष्टा परिमार्जिता शुक् येषां ते॥१६॥ अतः स्वयमप्यवतारान्नमस्यति नम इति हयशीर्ष्णे हयग्रीवाय मधुकैटभयोर्मृत्यवे हंत्रे॥१७॥ अकूपाराय कूर्माय सिंधुद्वारो विहारो यस्य तस्मै॥१८॥१९॥ भृगूणां पतये परशुरामाय॥२०॥ संकर्षणं रामं चतुर्व्यूहरूपेण प्रणमति नमस्ते वासुदेवायेति॥२१॥२२॥ एवं स्तुत्वा बंधमोक्षं प्रार्थयितुमाह भगवन्निति असति देहादौ ग्राहः आग्रहो यस्य सः अ

यथा जलेसंजिहते जलौकसो ऽप्युदुंबरे वा मशका मनोमये॥१५॥ यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि। तैरामृष्टशुचो लोका मुदा गायंति ते यशः॥१६॥ नमः कारणमत्स्याय प्रलयाब्धिचराय च। हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे॥१७॥ अकूपाराय बृहते नमो मंदरधारिणे। सित्युद्धारविहाराय नमः सूकरमूर्तये॥१८॥ नमस्ते ऽद्भुतसिंहाय साधुलोकभयापह। वामनाय नमस्तुभ्यं क्रांतत्रिभुवनाय च॥१९॥ नमो भृगूणां पतये दृप्तक्षत्रवनच्छिदे। नमस्ते रघुवर्याय रावणांतकराय च॥२०॥ नमस्ते वासुदेवाय नमः संकर्षणाय च। प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः॥२१॥ नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने। म्लेच्छप्रायक्षत्रहंत्रे नमस्ते कल्किरूपिणे॥२२॥ भगवन् जीवलोको ऽयं मोहितस्तव मायया। अहं ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु॥२३॥ अहं चात्मात्मजागारदारार्थस्वजनादिषु। भ्रमामि स्वप्नकल्पेषु मूढः सत्यधिया विभो॥२४॥ अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहम्। द्वंद्वारामस्तमोविष्टो न जाने त्वात्मनः प्रियम्॥२५॥ यथा ऽबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः। अभ्येति मृगतृष्णां वै तद्वत्त्वा ऽहं पराङ्मुखः॥२६॥ नोत्सहे ऽहं कृपणधीः कामकर्महतं मनः। रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः॥ २७ ॥

सन् ग्राहो ग्रहो ऽप्यस्येति वा॥२३॥ न केवलमयं लोकः अहमपि तथैवेत्याह अहं चेति॥२४॥ मूढत्वमेव प्रकटयति विपर्ययमतिरिति अनित्येषु कर्मफलेषु नित्यमिति अनात्मनि देहे आत्मेति दुःखरूपेषु गृहादौ सुखमतिर्विपरीतमतिरित्यर्थः द्वंद्वेषु सुखदुःखादिषु आरमते क्रीडतीति तथा सः न तु दुःखे कुतो रतिस्तत्राह तमोविष्टः तमसा व्याप्तः आत्मनः प्रियं प्रेमास्पदं त्वां न जानन्नित्यर्थः॥२५॥ सदृष्टांतमाह यथेति तस्माज्जलादुद्भवंतीति तदुद्भवानि तृणानि तैस्त्वं यथा प्रतिच्छन्नं त्वां त्वामहं हित्वा पराङ्मुखो देहाद्यभिमुखो वर्त इति॥२६॥ नन्वेवं जानतः कुतो विषयाभिमुखत्वं तत्राह नोत्सह इति कृपणा विषयवासनायुक्ता धीर्यस्य सः अत एव कामकर्मभ्यां हतं क्षुभितं इंद्रियैश्च बलिभिर्विषयसंप्रयुक्तैरितस्ततः आकृष्यमाणं मनो रोद्धुं नियमयितुं न शक्नोमीति॥ २७ ॥

तदेवमस्वतंत्रोयःसोऽहंतवअंघ्रिंउपगतःशरणंप्राप्तःनन्विंद्रियपरत्वंनस्यैतदपिकुतस्तत्राहतच्चापीतिहेईशअंतर्यामिन्तत्अंघ्र्युपगमनंचअस तांदुरापंअतोभवतोऽनुग्रहएवेत्यहंमन्येअनुग्रहेसतीतिवानन्नुसतांसेवयाइदंभवतीतिकिंमदनुग्रहेणेत्यतआहपुंसइतिजीवस्यसंसारस्यापव र्गःसमाप्तिर्यदात्वत्कृपयाभवेत्संभावनासदंभवतिहेअब्जनाभतदासदुपासनासंपद्यतेतयैवत्वयिमतिर्भवेत्त्वत्कृपांविनानमत्सेवानसुतरांत्वन्म तिःनसुतमांमुक्तिरित्यर्थः॥२८॥पादयोःपतन्प्रार्थयतेनमइतिद्वयेनविज्ञानमेवमात्रामूर्तिर्यस्यतस्मैअतएवसर्वप्रत्ययहेतवेसमस्तज्ञानकारणायकिंच पुरुषेशप्रधानायपुरुषस्ययेईशाःसुखदुःखादिप्रापकाःकालकर्मस्वभावादयस्तेषांप्रधानायनियंत्रेकुतःब्रह्मणेपरिपूर्णायकिंचअनंतशक्तयेअ नंताःशक्तयोयस्ययद्वाअनंतामायाख्याशक्तिर्यस्यतस्मैअथवाप्रधानंप्रकृतिःपुरुषःतत्प्रवर्त्तकःपुरुषःईशःकालःएतत्त्रितयात्मनेब्रह्मणेवस्य



सोऽहंतवांघ्र्युपगतोस्म्यसतांदुरापंतच्चाप्यहंभवदनुग्रहईशमन्ये॥पुंसोभवेद्यर्हिसंसरणापवर्गस्त्वय्यब्जनाभसदुपासन यामतिःस्यात्॥२८॥नमोविज्ञानमात्रायसर्वप्रत्ययहेतवे।पुरुषेशप्रधानायब्रह्मणेनंतशक्तये॥२९॥नमस्तेवासुदेवायसर्व भूतक्षयायच।हृषीकेशनमस्तुभ्यंप्रपन्नंपाहिमांप्रभो॥३०॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेअक्रूरस्तुतिर्नामचत्वा रिंशोऽध्यायः॥४०॥श्रीशुकउवाच॥स्तुवतस्तस्यभगवान्दर्शयित्वाजलेवपुः।भूयःसमाहरत्कृष्णोनटोनाट्यमिवात्मनः ॥१॥सोऽपिचांतर्हितंवीक्ष्यजलादुन्मज्ज्यसत्वरः।कृत्वाचावश्यकंसर्वंविस्मितोरथमागमत्॥२॥तमपृच्छद्धृषीकेशःकिंते दृष्टमिवाद्भुतम्।भूमौवियतितोयेवातथात्वांलक्षयामहे॥३॥अक्रूरउवाच॥अद्भुतानीहयावंतिभूमौवियतिवाजले।त्वयिविश्वा त्मकेतानिकिंमेऽदृष्टंविपश्यतः॥४॥यत्राद्भुतानिसर्वाणिभूमौवियतिवाजले।तंत्वाऽनुपश्यतोब्रह्मन्किंमेदृष्टमिहाद्भुतम्॥५॥

तिचभगवान्।प्रकृतिर्ह्यस्योपादानमाधारःपुरुषःपरः।सतोभिव्यंजकःकालोब्रह्मतन्त्रितयंत्वहमिति॥२९॥सर्वप्रत्ययहेतुत्वमभिव्यंजयंस्तौतिनमस्त इतिवासुदेवायचित्ताधिष्ठात्रेसर्वभूतक्षयायक्षयःआश्रयःअहंकारश्चप्राणिनामाश्रयःततश्चअहंकाराधिष्ठात्रेसंकर्षणायेत्यर्थःहृषीकेशेतिबुद्धिमनसोर धिष्ठात्रोःप्रद्युम्नानिरुद्धयोरेकीकृत्यग्रहणंशरणागतंमांपाहीतिप्रार्थना॥३०॥इतिदशमेटीकायांचत्वारिंशोऽध्यायः॥४०॥एकचत्वारिंशकेहत्वरजकंप्रविश्य नपुरीम्।ततोवरानदात्तुष्टःसुदाम्नोवायकस्यच॥१॥सर्वांकमक्रूरमनःप्रबोध्यस्वधामसंदर्शनसत्कृपातः।स्वराजधानींमथुरामपश्यदलंकृतानंतमहोत्सवाढ्याम्॥१॥२॥३॥भूमौवियतिजलेवायावंत्यद्भुतानितत्त्वय्येवसंतितंचत्वांपश्यतोमेकिमद्भुतमदृष्टंअपितुसर्वंदृष्टमित्यर्थः॥४॥नतुमत्साम्येःपूर्वमेवत्वंविस्मितस्तु [illegible]

त्रभूस्यादौ किमद्भुतं दृष्टं त्वां विना न तत्र किंचिदद्भुतमित्यर्थः ब्रह्मणि परमेश्वरे इत्यर्थः ब्रह्मेति वा पाठः ॥ ५ ॥ गांदिनीसुतोऽक्रूरः ॥ ६ ॥ दृष्टिं नाददुः पश्यं
तएव स्थिता इत्यर्थः ॥ ७ ॥ रामकृष्णागमनं प्रतीक्षमाणाः स्थिता इत्यर्थः ॥ ८ ॥ प्रश्रितं विनीतम् ॥ ९ ॥ स्वगृहं च प्रविशतां अवमुच्य उत्तार्य विश्राम्येत्यर्थः
॥ १० ॥ ११ ॥ साग्रजः सह गोपालैरित्यर्थः ॥ १२ ॥ यच्छौचेन यस्य पादरजसः क्षालनोदकेन गृहांगणस्थितेन ॥ १३ ॥ श्लोकः पुण्यकीर्तिः एकांतभक्तानां याग
तिस्तां च लेभे ॥ १४ ॥ अपुनन् पवित्रितवत्यः याभिरद्भिः स्वः स्वर्गं प्राप्ताः ॥ १५ ॥ प्रार्थ्यमानो नमस्करोति देवदेवेति अतः परमन्यत् श्रेयो नास्तीति मत्वा बहुधा

इत्युक्त्वा नोदयामास स्यंदनं गांदिनीसुतः ॥ मथुरामनयद्रामं कृष्णं चैव दिनात्यये ॥ ६ ॥ मार्गे ग्रामजना राजन् तत्र तत्रोपसंग
ताः ॥ वसुदेवसुतौ वीक्ष्य प्रीता दृष्टिं न चाददुः ॥ ७ ॥ तावद्व्रजौकसस्तत्र नंदगोपादयोऽग्रतः ॥ पुरोपवनमासाद्य प्रतीक्षंतोऽवत
स्थिरे ॥ ८ ॥ तान् समेत्याह भगवानक्रूरं जगदीश्वरः ॥ गृहीत्वा पाणिना पाणिं प्रश्रितं प्रहसन्निव ॥ ९ ॥ भवान् प्रविशतामग्रे सहया
नः पुरीं गृहम् ॥ वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम् ॥ १० ॥ अक्रूर उवाच ॥ नाहं भवद्भ्यां रहितः प्रवेक्ष्ये मथुरां प्रभो ॥ त्यक्तुं नार्हसि मां नाथ भक्तं ते भक्तवत्सल ॥ ११ ॥ आगच्छ याम गेहान्नः सनाथान् कुर्वधोक्षज ॥ सहाग्रजः सगोपालैः सुहृद्भिश्च सुहृत्तम ॥ १२ ॥
पुनीहि पादरजसा गृहान्नो गृहमेधिनां ॥ यच्छौचेनानुतृप्यंति पितरः साग्नयः सुराः ॥ १३ ॥ अवनिज्यांघ्रियुगलमासीच्छ्लोक्यो बलि
र्महान् ॥ ऐश्वर्यमतुलं लेभे गतिं चैकान्तिनां तु या ॥ १४ ॥ आपस्तेंघ्र्यवनेजन्यस्त्रींल्लोकान् शुचयोऽपुनन् ॥ शिरसाधत्त याः शर्वः स्वर्या
ताः सगरात्मजाः ॥ १५ ॥ देवदेव जगन्नाथ पुण्यश्रवणकीर्तन ॥ यदूत्तमोत्तमश्लोक नारायण नमोस्तु ते ॥ १६ ॥ श्रीभगवानुवाच ॥ आया
स्ये भवतो गेहमहमार्यसमन्वितः ॥ यदुचक्रद्रुहं हत्वा वितरिष्ये सुहृत्प्रियं ॥ १७ ॥ एवमुक्तो भगवता सोऽक्रूरो विमना इव ॥ पुरीं प्रविष्टः
कंसाय कर्मावेद्य गृहं ययौ ॥ १८ ॥ अथापराह्णे भगवान् कृष्णः संकर्षणान्वितः ॥ मथुरां प्राविशद्गोपैर्दिदृक्षुः परिवारितः ॥ १९ ॥ ददर्श
तां स्फाटिकतुंगगोपुरद्वारां बृहद्धेमकपाटतोरणाम् ॥ ताम्रारकोष्ठां परिखादुरासदामुद्यानरम्योपवनोपशोभिताम् ॥ २० ॥
संबोधयति ॥ १६ ॥ आदौ तावत् यदुचक्रं यद् द्रुह्यतीति यदुचक्रध्रुक् तं कंसं हत्वा सुहृदां प्रियं वितरिष्ये दास्यामि ॥ १७ ॥ रामकृष्णावानीताविति स्व
कृतं कर्मावेद्य समर्प्येति ॥ १८ ॥ गोपैः परिवारितः प्राविशत् ॥ १९ ॥ श्रीकृष्णदृष्टां पुरीमनुवर्णयति चतुर्भिः ददर्श तामिति स्फाटिकानि तुंगानि गोपुराणि पुर
द्वाराणि अन्यानि च द्वाराणि यस्यां तां बृहंति हेममयानि कपाटानि तोरणानि च यस्यां तां ताम्रं च आरः आरकूटश्च तन्मयाः कोष्ठा धान्यागाराश्वशालादयो यस्यां
तां परिखाः परितः खातगर्ताः ताभिर्दुरासदां दुर्गमां उद्यानानि दूरस्थानि वनानि रम्याणि उपवनानि च निकटानि तैरुपशोभिताम् ॥ २० ॥ ॥

सौवर्णाः शृंगाटकाश्चतुष्पथाः हर्म्याणि धनिनां गृहाणि च निष्कुटाः गृहोचिता आरामाश्च तैः श्रेणीनां एकरूपशिल्पोपजीविनां सभाभिः उपवेशस्थानैः अन्यैश्च भवनैः गृहैः उपस्कृतां अलंकृतां अमलाः स्फाटिकाः हरितः मरकताः वैदूर्यादिरत्नैर्जुष्टेषु वलभ्यादिषु आविष्टैरुपविष्टैः पारावतैर्बर्हिभिश्च नादितां तत्र वलभ्यः गृहपुरोभागेषु वक्रदारुच्छादनानि वेदयः वलभीनामधोदेशे विरचिताः अवष्टंभवेदिकाः ॥२१॥ जालामुखरंध्राणि गवाक्षच्छिद्राणि कुट्टिमानि मणिबद्धभूमयः तेष्विति रथ्या राजमार्गाः आपणाः पण्यवीथयः मार्गाः अन्ये च चत्वराणि अंगणानि संसिक्तानि रथ्यादीनि यस्यां तां प्रकीर्णमाल्यादयो यस्यां ताम् ॥२२॥ तथा स्वलंकृतानि द्वाराणि येषां ते गृहा यस्यां तां कैः आपूर्णैः कुंभैः दध्ना चंदनेन च उक्षितैः सिक्तैः प्रसूनानां दीपानां चावलयो येषु तैः वृन्तैः फलगुच्छैः उपलक्षिता रंभाः क्रमुकाश्च तत्सहितैः सकेतुभिः केतवो ध्वजाः तत्सहितैः पट्टिका वितस्तिविस्तारपट्टवस्त्राणि

सौवर्णशृङ्गाटकहर्म्यनिष्कुटैः श्रेणीसभाभिर्भवनैरुपस्कृताम् ॥ वैदूर्यवज्रामलनीलविद्रुमैर्मुक्ताहरिद्भिर्वलभीषु वेदिषु ॥२१॥ जुष्टेषु जालामुखरंध्रकुट्टिमेष्वाविष्टपारावतबर्हिनादिताम् ॥ संसिक्तरथ्यापणमार्गचत्वरां प्रकीर्णमाल्यांकुरलाजतंडुलाम् ॥२२॥ आपूर्णकुंभैर्दधिचंदनोक्षितैः प्रसूनदीपावलिभिः सपल्लवैः ॥ सवृंतरंभाक्रमुकैः सकेतुभिः स्वलंकृतद्वारगृहां सपट्टिकैः ॥२३॥ तां संप्रविष्टौ वसुदेवनंदनौ वृतौ वयस्यैर्नरदेववर्त्मना ॥ द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः ॥२४॥ काश्चिद्विपर्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः ॥ कृतैकपत्रश्रवणैकनूपुरा नांक्त्वा द्वितीयं त्वपराश्च लोचनम् ॥२५॥ अश्नंत्य एकास्तदपास्य भोजनमभ्यज्यमाना अकृतोपमज्जनाः ॥ स्वपंत्य उत्थाय निशम्य निःस्वनं प्रपाययंत्योऽर्भमपोह्य मातरः ॥२६॥ मनांसि तासामरविंदलोचनः प्रगल्भलीलाहसितावलोकैः ॥ जहार मत्तद्विरदेंद्रविक्रमो दृशां ददच्छ्रीरमणात्मनोत्सवम् ॥२७॥

१ तत्सहितैः तत्रेयं रीतिः द्वारेषूभयतस्तंडुलानामुपरि कुंभाः तत्परितः प्रसूनावलयः कंठे पट्टिकाः मुखे चूतादिपल्लवाः तदुपरि पात्रांतरे दीपावलयः तत्संनिधौ रंभाः क्रमुकाः केतवस्तोरणानि चेति ॥२३॥ नरदेवानां वर्त्मना राजमार्गेण तां पुरीं संप्रविष्टौ इति द्वितीयांतम् ॥२४॥ औत्सुक्यमेवाह द्वयेन काश्चिदिति विपर्यक् विपरीतं धृतानि वस्त्राणि भूषणानि च याभिस्ताः युगलेषु धार्येषु कुंडलकंकणादिषु एकं विस्मृत्य समीयुः कृतं एकमेव पत्रं पयोस्ते श्रवणे यासां एकमेव नूपुरं चरणाभरणं यासां ताश्च ताश्च नांक्त्वा अनंक्त्वा एकस्मिन्नेव लोचने अंजनं निधायेत्यर्थः ॥२५॥ तद्भोजनं त्यक्त्वा अभ्यज्यमानाः सखीभिः क्रियमाणतैलाभ्यंगा अकृतोपमज्जना अकृतस्नानाः अर्भं बालकं अपोह्य निरस्य ॥२६॥ प्रगल्भा याः लीलाः तानिभिः हसितानि निरीक्षणानि च तैः श्रियं रमयतीति श्रीरमणः तेनात्मना वपुषा तासां दृशामुत्सवं ददन्मनांसि जहार

मुहुः श्रुत्वा तद्गतचेतसः सत्यस्तं दृष्ट्वा तस्य प्रेक्षणं च उत्स्मितं च तदेव सुधा तया उक्षणं सेचनं तेन लब्धो मानो याभिस्ताः दृशा उद्धाटितेन नेत्रद्वारेण आत्मनि मनसि लब्धं प्राप्तं परिष्वज्य तदप्राप्तिजनितमनंतमाधिं मानसीं व्यथां जहुः हे अरिंदम निर्जितकामेति संबोधनं शृंगाररसे निमग्नो माभूरिति ॥२८॥ सौमनस्यैः शोभनगंधकुसुमसमूहैः शोभनमनोभावैर्वा ॥२९॥३०॥ पौराः पुरस्त्रियः ॥३१॥ रजको वस्त्रनिर्णेजकः सएव वस्त्राणां रंगमपि कुर्वे

दृष्ट्वा मुहुः श्रुतमनुद्रुतचेतसस्तं तत्प्रेक्षणोत्स्मितसुधोक्षणलब्धमानाः। आनंदमूर्तिमुपगुह्य दृशात्मलब्धं हृष्यत्त्वचो जहुरनंतमरिंदमाधिम् ॥२८॥ प्रासादशिखरारूढाः प्रीत्युत्फुल्लमुखांबुजाः। अभ्यवर्षन्सौमनस्यैः प्रमदा बलकेशवौ ॥२९॥ दध्यक्षतैः सोदपात्रैः स्रग्गंधैरभ्युपायनैः। तावानर्चुः प्रमुदितास्तत्रतत्र द्विजातयः ॥३०॥ ऊचुः पौरा अहो गोप्यस्तपः किमचरन्महत्। या ह्येतावनुपश्यंति नरलोकमहोत्सवौ ॥३१॥ रजकं कंचिदायांतं रंगकारं गदाग्रजः। दृष्ट्वायाचत वासांसि धौतान्यत्युत्तमानि च ॥ ॥३२॥ देह्यावयोः समुचितान्यंग वासांसि चार्हतोः। भविष्यति परं श्रेयो दातुस्ते नात्र संशयः ॥३३॥ स याचितो भगवता परिपूर्णेन सर्वतः। साक्षेपं रुषितः प्राह भृत्यो राज्ञः सुदुर्मदः ॥३४॥ ईदृशान्येव वासांसि नित्यं गिरिवनेचराः। परिधत्त किमुद्वृत्ता राजद्रव्याण्यभीप्सथ ॥३५॥ याताशु बालिशा मैवं प्रार्थ्यं यदि जिजीविषा। बध्नंति घ्नंति लुंपंति दृप्तं राजकुलानि हि ॥३६॥ एवं विकत्थमानस्य कुपितो देवकीसुतः। रजकस्य कराग्रेण शिरः कायादपातयत् ॥३७॥ तस्यानुजीविनः सर्वे वासःकोशान्विसृज्य वै। दुद्रुवुः सर्वतो मार्गं वासांसि जगृहेऽच्युतः ॥३८॥ वसित्वात्मप्रिये वस्त्रे कृष्णः संकर्षणस्तथा। शेषाण्यादत्त गोपेभ्यो विसृज्य भुवि कानिचित् ॥३९॥ ततस्तु वायकः प्रीतस्तयोर्वेषमकल्पयत्। विचित्रवर्णैश्चैलेयैराकल्पैरनुरूपितः ॥४०॥ नानालक्षणवेषाभ्यां कृष्णरामौ विरेजतुः। स्वलंकृतौ बालगजौ पर्वणीव सितेतरौ ॥४१॥ तस्य प्रसन्नो भगवान्प्रादात्सारूप्यमात्मनः। श्रियं च परमां लोके बलैश्वर्यस्मृतींद्रियम् ॥४२॥ ततः सुदाम्नो भवनं मालाकारस्य जग्मतुः। तौ दृष्ट्वा स समुत्थाय ननाम शिरसा भुवि ॥४३॥ तयोरासनमानीय पाद्यं चार्घ्यार्हणादिभिः। पूजां सानुगयोश्चक्रे स्रक्तांबूलानुलेपनैः ॥४४॥ ९ रंगकारः ॥३२॥३३॥ रुषितः कुपितः ॥३४॥ हे उद्वृत्ताः गिरिवनेचरा यथा यूयं नित्यं तेयूयं परिधत्तेति संभावनायां लोट् अभीप्सथ प्रार्थयध्वम् ॥३५॥ राजकुलानि राजकीयाः लुंपंति निःस्वं कुर्वंति ॥३६॥३७॥ वासःकोशान् वस्त्रपुटकान् ॥३८॥३९॥ वायकः तंतुवायविशेषः वेषं अलंकारं चैलेयैर्वस्त्रमयैराकल्पैर्भूषणैः ॥४०॥ पर्वणि उत्सवे ॥४१॥ इहलोके परमां श्रियं च बलं च ऐश्वर्यं च स्मृतिं च इंद्रियं च वत्सप्राचर्यं च प्रादात् ॥

॥४५॥ क्षेमाय अभयाय भवाय उद्भवाय ॥४६॥ रजकवधेन वायकानुग्रहेण च युवयोर्विषमदृष्टितया ऽनीश्वरता नाशंकनीयेत्याह नहि वामिति अत्र हेतुः सम योरिति अत्रापि हेतुद्वयं सुहृदोरिति जगदात्मनोरिति च ॥४७॥४८॥ इत्यभिप्रेत्य इत्येवं विज्ञापितवान् अभिप्रेत्य तन्मतं ज्ञात्वा ॥४९॥५०॥५१॥ अन्वयवृद्धिं नीं वंशवृद्धिमतीमित्यर्थः अप्रार्थितं श्रीप्रभृतिकं च दत्वा ततो निर्जगामेति ॥५२॥ स्वैरं चरन्मधुपुरे स्रजकं निकृत्य कृष्णः प्रदाय च वरानथ वायकाय मालाकृ तं समनुकंप्य च कार कुब्जामृज्वीं धनुश्च सहसा नमयन्बभंज ॥१॥ इति दशमे टीकायामेकचत्वारिंशोऽध्यायः ॥४१॥ द्विचत्वारिंशके कुब्जोन्नमनं धनुषो भि



प्राह नः सार्थकं जन्म पावितं च कुलं प्रभो ॥ पितृदेवर्षयो मह्यं तुष्टा ह्यागमनेन वाम् ॥४५॥ भवंतौ किल विश्वस्य जगतः कारणं प रम् ॥ अवतीर्णाविहांशेन क्षेमाय च भवाय च ॥४६॥ नहि वां विषमा दृष्टिः सुहृदोर्जगदात्मनोः ॥ समयोः सर्वभूतेषु भजंतं भजतो रपि ॥४७॥ तावाज्ञापयतां भृत्यं किमहं करवाणि वाम् ॥ पुंसो ऽत्यनुग्रहो ह्येष भवद्भिर्यन्नियुज्यते ॥४८॥ इत्यभिप्रेत्य राजेंद्र सुदा मा प्रीतमानसः ॥ शस्तैः सुगंधैः कुसुमैर्माला विरचिता ददौ ॥४९॥ ताभिः स्वलंकृतौ प्रीतौ कृष्णरामौ सहानुगौ ॥ प्रणताय प्रपन्ना य ददतुर्वरदौ वरान् ॥५०॥ सोपि वव्रेऽचलां भक्तिं तस्मिन्नेवाखिलात्मनि ॥ तद्भक्तेषु च सौहार्दं भूतेषु च दयां पराम् ॥५१॥ इति तस्मै वरं दत्वा श्रियं चान्वयवर्द्धिनीम् ॥ बलमायुर्यशः कीर्तिं निर्जगाम सहाग्रजः ॥५२॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वप्र वेशो नामैकचत्वारिंशोऽध्यायः ॥४१॥ श्रीबादरायणिरुवाच ॥ अथ व्रजन्राजपथेन माधवः स्त्रियं गृहीतांगविलेपभाजनाम् ॥ विलोक्य कुब्जां युवतीं वराननां पप्रच्छ यांतीं प्रहसन्रसप्रदः ॥१॥ का त्वं वरोर्वेतदु हानुलेपनं कस्यांगने वा कथयस्व साधु नः ॥ दे ह्यावयोरंगविलेपमुत्तमं श्रेयस्ततस्ते न चिराद्भविष्यति ॥२॥ सैरंध्र्युवाच ॥ दास्यस्म्यहं सुंदर कंससंमता त्रिवक्रनामा ह्यनुले पकर्मणि ॥ मद्भावितं भोजपतेरतिप्रियं विना युवां कोऽन्यतमस्तदर्हति ॥३॥ रूपपेशलमाधुर्यहसितालापवीक्षितैः ॥ धर्षि तात्मा ददौ सांद्रमुभयोरनुलेपनम् ॥४॥

९ द्वा॥ वधस्तद्रक्षिणां कंसारिष्टरंगोत्सवादि च ॥१॥ अंगविलेपाश्चंदनादयः गृहीतान्यंगविलेपन भाजनानि यया तां रसप्रदः सुखप्रदः ॥१॥ हे अंगने हे वरोरु इति सोपहासं संबोध्याः पृच्छति तं काऽऽएतदनुलेपनं कस्य वा उह इति निपातो ऽभि विसेपयुक्ते वितर्के भस्म सेवा सद्यः फलस्येवेत्याह न चिरादिति ॥२॥ त्रिलः श्री चोरः कस्त्रीवक्रा इति त्रिवक्रेति नाम यस्याः साऽनुलेपनसाधनक्रियायां कंससम्ब [illegible]

स्ववर्णेतरशोभिनारामकृष्णयोर्वर्णाभ्यामितरःपीतादिवर्णस्तेनशोभितुंशीलंयस्यतेनसंप्राप्तपरभागेनसंप्राप्तःपरोनाभेरुपरितनोभागोयेनसः
संप्राप्तःपरभागःशोभाऽतिशयोयेनेतिवातेनानुरंजितौ॥५॥स्वदर्शनेसद्यःफलंदर्शयन्॥६॥तस्याःप्रपदेपादाग्रद्वयंपद्भ्यामापीड्यद्वेअंगुल्यावुत्ता
नेउन्नतेयस्मिन्पाणौतेनचुबुकेमुखस्याधोभागेधृत्वाऽध्यात्मंदेहंउन्नमयामास॥७॥तदैवऋजुसमानमंगंयस्याःबृहत्यौश्रोणीपयोधरौचयस्याः

ततस्तावंगरागेणस्ववर्णेतरशोभिना।संप्राप्तपरभागेनशुशुभातेनुरंजितौ॥५॥प्रसन्नोभगवान्कुब्जांत्रिवक्रांरुचिरानना
म्।ऋज्वींकर्तुंमनश्चक्रेदर्शयन्दर्शनेफलम्॥६॥पद्भ्यामाक्रम्यप्रपदेद्व्यंगुल्युत्तानपाणिना।प्रगृह्यचुबुकेऽध्यात्ममुदनीन
मदच्युतः॥७॥सातदर्जुसमानांगीबृहच्छ्रोणिपयोधरा।मुकुंदस्पर्शनात्सद्योबभूवप्रमदोत्तमा॥८॥ततोरूपगुणौदार्यसंपन्ना
प्राहकेशवम्।उत्तरीयांतमाकृष्यस्मयंतीजातहृच्छया॥९॥एहिवीरगृहंयामोनत्वांत्यक्तुमिहोत्सहे।त्वयोन्मथितचित्तायाः
प्रसीदपुरुषर्षभ॥१०॥एवंस्त्रियायाच्यमानःकृष्णोरामस्यपश्यतः।मुखंवीक्ष्यानुगोपानांप्रहसंस्तामुवाचह॥११॥एष्यामिते
गृहंसुभ्रूःपुंसामाधिविकर्षणम्।साधितार्थोऽगृहाणांनःपांथानांत्वंपरायणम्॥१२॥विसृज्यमाध्व्यावाण्यातांव्रजन्मार्गेवणि
क्पथैः।नानोपायनतांबूलस्रग्गंधैःसाग्रजोऽर्चितः॥१३॥तद्दर्शनस्मरक्षोभादात्मानंनाविदन्स्त्रियः।विस्रस्तवासःकबरवलया
लेख्यमूर्तयः॥१४॥ततःपौरान्पृच्छमानोधनुषःस्थानमच्युतः।तस्मिन्प्रविष्टोददृशेधनुरैंद्रमिवाद्भुतम्॥१५॥पुरुषैर्बहुभिर्गुप्तम
र्चितंपरमर्द्धिमत्।वार्यमाणोनृभिःकृष्णःप्रसह्यधनुराददे॥१६॥करेणवामेनसलीलमुद्धृतंसज्यंचकृत्वानिमिषेणपश्यताम्
नृणांविकृष्यप्रबभंजमध्यतोयथेक्षुदंडंमदकर्युरुक्रमः॥१७॥धनुषोभज्यमानस्यशब्दःखंरोदसीदिशः।पूरयामासयंश्रुत्वाकंस
स्त्रासमुपागमत्॥१८॥तद्रक्षिणःसानुचराःकुपिताआततायिनः।ग्रहीतुकामाआवव्रुर्गृह्यतांबध्यतामिति॥१९॥अथतान्दुर
भिप्रायान्विलोक्यबलकेशवौ।क्रुद्धौधन्वनआदायशकलेतांश्चजघ्नतुः॥२०॥

९ सामुकुंदस्पर्शनादितिमुख्यंकारणम्॥८॥९॥१०॥११॥
आधिविकर्षणंमनःपीडाशमनंकंसवधेनस्वयंसाधितःअर्थःसुहृदांप्रयोजनंयेनसःअगृहाणांअकृतदाराणांपांथानांप्रवासिनांपरमयनंआश्रयस्त्वं॥१२
मधुरयागिरातांप्रस्थाप्यव्रजन्वणिक्पथैर्वणिग्भिरर्चितः॥१३॥लेख्याश्चित्रन्यस्तास्तद्वन्मूर्तयोयासांताः॥१४॥धनुर्मखशालांपृच्छन्॥१५॥प्रसह्यबला
त्॥१६॥निमिषेणअतिशीघ्रंमदकरीमत्तहस्ती॥१७॥१८॥गृह्यतांबध्यतामितिवदंतोजिघृक्षवःआततायिनः॥१९॥नकेवलंक्रुद्धौकिंतुभग्नस्यधनुषःशक

परतः प्रातर्गतव्यमिति शालामुखादेव पुनर्निष्क्रम्य॥२१॥ तेजः प्रभावं प्रागल्भ्यं धृष्टताम्॥२२॥ शकटं शकटावमोचनस्थानम्॥२३॥ मुकुंदस्य विगमे व्रजान्निर्गमनसमये या आशिषः आशासत सुखं प्रभाता रजनीयमद्य ध्रुवं सुखं तत्र दृशो भविष्यत इत्यादि यदुक्तवत्यः ता ऋताः सत्याः बभूवुः पुरुषभूषणस्य श्रीकृष्णस्य गात्रस्य देहस्य लक्ष्मीं शोभां कथंभूतस्य गात्रस्य अहो इतरान् ब्रह्मादीन् हित्वा यदयनम् आश्रयं श्रीः कामयामास यां गात्रलक्ष्मीमिति वा ॥२४॥ अवनिक्तं क्षालितमंघ्रियुगलं याभ्यां तौ क्षीरमिश्रमन्नं भुक्त्वा सुखं न्यवसताम्॥२५॥ परं केवलं गोविंदरामयोर्विक्रीडितं तत् न तु पराक्रमः कश्चित्॥ ॥२६॥ उभयथा स्वप्नजागरितभेदेन प्रत्येकं मृत्योर्दौत्यकराणि च तथा च मंत्रः इत्यादुलूकश्वाऽपघ्नन् हिरण्याक्षो अयोमुखः रक्षसां दूत आगत इत्यादिः त

बलं च कंसप्रहितं हत्वा शालामुखात्ततः। निष्क्रम्य चेरतुर्हृष्टौ निरीक्ष्य पुरसंपदः॥२१॥ तयोस्तदद्भुतं वीर्यं निशाम्य पुरवासिनः। तेजः प्रागल्भ्यरूपं च मेनिरे विबुधोत्तमौ॥२२॥ तयोर्विचरतोः स्वैरमादित्योऽस्तमुपेयिवान्। कृष्णरामौ वृतौ गोपैः पुराच्छकटमीयतुः॥२३॥ गोप्यो मुकुंदविगमे विरहातुरा या आशासताशिष ऋता मधुपुर्य्यभूवन्। संपश्यतां पुरुषभूषणगात्रलक्ष्मीं हित्वेतरान्नु भजतश्चकमेऽयनं श्रीः॥२४॥ अवनिक्तांघ्रियुगलौ भुक्त्वा क्षीरोपसेचनम्। ऊषतुस्तां सुखं रात्रिं ज्ञात्वा कंसचिकीर्षितम्॥ ॥२५॥ कंसस्तु धनुषो भंगं रक्षिणां स्वबलस्य च। वधं निशम्य गोविंदरामविक्रीडितं परम्॥२६॥ दीर्घप्रजागरो भीतो दुर्निमित्तानि दुर्मतिः। बहून्याचष्टोभयथा मृत्योर्दौत्यकराणि च॥२७॥ अदर्शनं स्वशिरसः प्रतिरूपे च सत्यपि। असत्यपि द्वितीये च द्वैरूप्यं ज्योतिषां तथा॥२८॥ छिद्रप्रतीतिश्छायायां प्राणघोषानुपश्रुतिः। स्वर्णप्रतीतिर्वृक्षेषु स्वपदानामदर्शनम्॥२९॥ स्वप्ने प्रेतपरिष्वंगः खरयानं विषादनम्। यायान्नलदमाल्येकस्तैलाभ्यक्तो दिगंबरः॥३०॥ अन्यानि चेत्थंभूतानि स्वप्नजागरितानि च। पश्यन्मरणसंत्रस्तो निद्रां लेभे न चिंतया॥३१॥ व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्यः समुत्थिते। कारयामास वै कंसो मल्लक्रीडामहोत्सवम्॥३२॥

यापदेतद्भुतान्यन्वाविश्य दैवीं वाचं वदसीत्यादिश्च॥२७॥ तानि दर्शयति श्लोकत्रयेण जलादौ प्रतिरूपे दृश्यमानेपि स्वशिरसस्तत्रादर्शनं असत्यपि द्वितीये चक्षुषोंतर्धाने अंगुल्यादौ ज्योतिषां चंद्रादीनां द्वित्वम्॥२८॥ छायायां प्रतिबिंबे छिद्रप्रतीतिः पिहितकर्णपुटस्य यः अंतः श्रूयमाणो ध्वनिः स प्राणघोषः तस्याश्रवणं वृक्षेषु स्वर्णवर्णप्रतीतिः रजःकर्दमादिषु स्वपदानामदर्शनं एतानि जागरितानि दुर्निमित्तानि॥२९॥ स्वाप्नान्याह स्वप्न इति प्रेतैः सह परिष्वंगः खरमारुह्य यानं विषभक्षणं नलदमाली जपाकुसुममाली यायादिति यत्तत्स्वप्ने दुर्निमित्तमिति॥३०॥३१॥ कष्टेन कथंचित्
[illegible]

॥३३॥ यथोपजोषं यथासुखम्॥३४॥ ३५॥ मल्लतालं मल्लानां ताल ... तूर्येषु ... मल्लाचार्याः॥३६॥ उपस्थानं मल्लरंगम्॥३७॥ समा
हूताः समाहूताः निवेदितान्युपायनानि यैस्ते॥३८॥ इतिश्रीभागवते दशमस्कन्धे टीकायां द्विचत्वारिंशोऽध्यायः॥४२॥ त्रिचत्वारिंशके हत्वा गजेंद्रं राम
कृष्णयोः रंगप्रवेशसौभाग्यं चाणूरेण च भाषणम्॥१॥ पूर्वेद्युरेव कृतं शौचं शुद्धत्वं निरपराधत्वं याभ्यां तौ एतदुक्तं भवति धनुर्भङ्गादिना आवाभ्यां किं
च्यर्थैः सूचितेपि पितरौ न मुंचति आवां च पुनः जिघांसति अतोस्य मातुलस्यापि वधेनावयोर्दोष इत्येवं कृतापराधपरिहारौ इति मल्लानां दुंदुभीनां च नि

आनर्चुः पुरुषा रंगं तूर्यभेर्यश्च जघ्निरे। मंचाश्चालंकृताः स्रग्भिः पताकाचैलतोरणैः॥३३॥ तेषु पौरा जानपदा ब्रह्मक्षत्रपुरोग
माः। यथोपजोषं विविशू राजानश्च कृतासनाः॥३४॥ कंसः परिवृतोमात्यै राजमंच उपाविशत्। मंडलेश्वरमध्यस्थो हृदयेन वि
दूयता॥३५॥ वाद्यमानेषु तूर्येषु मल्लतालोत्तरेषु च। मल्लाः स्वलंकृता दृप्ताः सोपाध्यायाः समागताः॥३६॥ चाणूरो मुष्टिकः कूटः
शलस्तोसलएव च। तआसेदुरुपस्थानं वल्गुवाद्यप्रहर्षिताः॥३७॥ नंदगोपादयो गोपा भोजराजसमाहुताः। निवेदितोपायना
स्तेएकस्मिन्मंच आविशन्॥३८॥ इतिश्रीभागवते महापुराणे दशमस्कंधे मल्लरंगोपवर्णनं नाम द्विचत्वारिंशोऽध्यायः॥४२॥
श्रीशुक उवाच॥ अथ कृष्णश्च रामश्च कृतशौचौ परंतप। मल्लदुंदुभिनिर्घोषं श्रुत्वा द्रष्टुमुपेयतुः॥१॥ रंगद्वारं समासाद्य तस्मिन्ना
गमवस्थितम्। अपश्यत्कुवलयापीडं कृष्णोंऽबष्ठप्रचोदितम्॥२॥ बध्वा परिकरं शौरिः समुह्य कुटिलालकान्। उवाच हस्तिपं
वाचा मेघनादगभीरया॥३॥ अंबष्ठांबष्ठ मार्गं नौ देह्यपक्रम मा चिरम्। नो चेत्सकुंजरं त्वाद्य नयामि यमसादनम्॥४॥ एवं निर्भ
र्त्सितोंऽबष्ठः कुपितः कोपितं गजम्। चोदयामास कृष्णाय कालांतकयमोपमम्॥५॥ करींद्रस्तमभिद्रुत्य करेण तरसाऽग्रहीत्। क
राद्विगलितः सोऽमुं निहत्यांघ्रिष्वलीयत॥६॥ संक्रुद्धस्तमचक्षाणो घ्राणदृष्टिः स केशवम्। परामृशत्पुष्करेण स प्रसह्य विनिर्ग
तः॥७॥ पुच्छे प्रगृह्यातिबलं धनुषः पंचविंशतिम्। विचकर्ष यथा नागं सुपर्ण इव लीलया॥८॥ १ घोषं मल्लतालदुंदुभिनिर्घोषं वा
॥१॥ अंबष्ठो हस्तिपः तेन चोदितम्॥२॥ परिकरं युद्धोचितपरिधानं कृत्वा समुह्य निबद्ध्य॥३।४॥ अंतको मृत्युः कालस्तन्निमित्तं यमस्तं नियंता तैरु
पमा यस्य तम्॥५॥ विगलितो विच्युतः मुष्टिना निहत्य आलीयत अदृश्यो बभूव॥६॥ अचक्षाणः अपश्यन् घ्राणमेव घ्राणं तेन दृष्टिर्दर्शनं यस्य सः लोचनागो
चरमपि हि पशवो घ्राणेन जानंतीति प्रसिद्धं परामृशत् धृतवान् पुष्करेण शुंडाग्रेण सः कृष्णः प्रसह्य बलेन॥७॥ धनुषः धनुषां पंचविंशतिर्यावत्तावं
तं देशं गजं विचकर्ष आकृष्य नीतवान् कं कइव विचकर्ष यथा नागं सर्पं वद्धतेमानं गजं सुपर्णवत्स्वयमिति आविरासीद्यथा प्राच्यां दिशींदुरिव पुष्कलइति

सपर्य्यावर्तमानेनेति पुच्छग्राहिणंकृष्णंग्रहीतुंयदिदक्षिणतःपरिवर्त्ततेगजःतर्हिसव्यतोभ्रामयतियदासव्यतःपरिवर्त्ततेतदादक्षिणतोभ्रामयं
स्तेनसहबभ्रामगोवत्सेनभ्राम्यमाणेनबालकःसएवकृष्णोयथाअन्योवाबालकइवेति॥९॥वारणंगजंप्राद्रवन्प्रपं॑वेणसमंततोधावन्पातयामा
सयथापततितथातंवंचयन्प्राद्रवदित्यर्थः॥१०॥किंचसःधावन्निति अहनत्अहन्॥११॥१२॥१३॥१४॥रंगंसमाविशत्तदावीरश्रियाबभौकथंभूतः
अंसेन्यस्तंविषाणंगजदंतोयेनसःअसृजोरक्तस्यमदस्यचबिंदुभिःपरितोंकितः॥१५॥विरूढाउद्गताःस्वेदकणिकास्ताभिरुपलक्षितंवदनांबुरुहंयस्य

सपर्य्यावर्त्तमानेनसव्यदक्षिणतोच्युतः।बभ्रामभ्राम्यमाणेनगोवत्सेनेवबालकः॥९॥ततोऽभिमुखमभ्येत्यपाणिनाहत्यवारण
म्।प्राद्रवन्पातयामासस्पृश्यमानःपदेपदे॥१०॥सधावन्क्रीडयाभूमौपतित्वासहसोत्थितः।तंमत्वापतितंक्रुद्धोदंताभ्यांसोऽह
नत्क्षितिम्॥११॥स्वविक्रमेप्रतिहतेकुंजरेंद्रोऽत्यमर्षितः।चोद्यमानोमहामात्रैःकृष्णमभ्यद्रवद्रुषा॥१२॥तमापततमासाद्यभ
गवान्मधुसूदनः।निगृह्यपाणिनाहस्तंपातयामासभूतले॥१३॥पतितस्यपदाक्रम्यमृगेंद्रइवलीलया।दंतमुत्पाट्यतेनेभंहस्ति
पांश्चाहनद्धरिः॥१४॥मृतकंद्विपमुत्सृज्यदंतपाणिःसमाविशत्।अंसन्यस्तविषाणोऽसृङ्मदबिंदुभिरंकितः॥१५॥विरूढस्वे
दकणिकावदनांबुरुहोबभौ।वृतौगोपैःकतिपयैर्बलदेवजनार्दनौ।रंगंविविशतूराजन्गजदंतवरायुधौ॥१६॥मल्लानामश
निर्नृणांनरवरःस्त्रीणांस्मरोमूर्तिमान्गोपानांस्वजनोऽसतांक्षितिभुजांशास्तास्वपित्रोःशिशुः।मृत्युर्भोजपतेर्विराडविदुषांत
त्त्वंपरंयोगिनांवृष्णीनांपरदेवतेतिविदितोरंगंगतःसाग्रजः॥१७॥हतंकुवलयापीडंदृष्ट्वातावपिदुर्जयौ।कंसोमनस्व्यपितदा
भृशमुद्विविजेनृप॥१८॥तौरेजतूरंगगतौमहाभुजौविचित्रवेषाभरणस्रगंबरौ।यथानटावुत्तमवेषधारिणौमनःक्षिपंतौप्र
भयानिरीक्षताम्॥१९॥निरीक्ष्यतावुत्तमपूरुषौजनामंचस्थितानागरराष्ट्रकानृपाः।प्रहर्षवेगोत्कलितेक्षणाननाःपपुर्न
तृप्तानयनैस्तदाननम्॥२०॥ ९सःनकेवलंसएकःसमाविशत्किंतुवृतौगोपैरिति॥१६॥तत्रचशृंगारादिसर्वरसकदंबमूर्तिर्भगवांस्तत्तद
भिप्रायानुसारेणबभौनसाकल्येनसर्वेषामित्याहमल्लानामितिमल्लादीनांअज्ञानांदृष्टॄणामशन्यादिरूपेणदशधाविदितःसन्साग्रजोरंगंगतइत्यन्वयः
मल्लादिष्वभिव्यक्ताःरसाःक्रमेणश्लोकेननिबद्धास्तेरौद्रोऽद्भुतश्चशृंगारोहास्यंवीरोदयातथा।भयानकश्चबीभत्सःशांतःसप्रेमभक्तिकः।अविदुषांविराट्
विकलःअपर्याप्तोराजनइतितथाअनेनबीभत्सरसउक्तःविकलत्वंचकवज्रसारसर्वांगावित्यादिनावक्ष्यते॥१७॥उद्विविजेभीतोबभूव॥१८॥यथा
नटाविति निर्भयत्वंदर्शितम्॥१९॥प्रहर्षवेगेनउत्कलितानिउत्फुल्लानि ईक्षणानि आननानि चयेषांतेतथाभूताःनयनैःपपुःपरन्तुनतृप्ताःनिमेषकालत्वात्

तदेवाह पिबंत इवेति श्लिष्यंतः परिष्वंगं कुर्वन्त इव ॥  ॥२१॥ यथादृष्टं पूतनामोक्षणादि यथाश्रुतं गोवर्धनोद्धरणादि तत्तदनतिक्रम्य तद्रूपमित्यर्थः प्रत्यक्षं च तयोरूपं गजदंतादियुक्तं गुणाः शौर्यादयः माधुर्यं हसितालापादि प्रागल्भ्यं धाष्टर्यं तैः स्मारिता इव स्मरणं प्रापिता इव ॥२२॥ विस्मितानां वाक्यान्याह दशभिः स्तावित्यादिभिः ॥२३॥ किलेति सर्वत्रान्वयः ॥२४॥ गुह्यकः शंखचूडः अन्ये चाघासुरादयः ॥२५॥२६॥२७॥ आश्रमं दुःखं श्रमयुक्तं मुखं भ

पिबन्त इव चक्षुर्भ्यां लिहंत इव जिह्वया। जिघ्रंत इव नासाभ्यां श्लिष्यंत इव बाहुभिः ॥२१॥ ऊचुः परस्परं ते वै यथादृष्टं यथाश्रुतम्। तद्रूपगुणमाधुर्यप्रागल्भ्यस्मारिता इव ॥२२॥ एतौ भगवतः साक्षाद्धरेर्नारायणस्य हि। अवतीर्णाविहांशेन वसुदेवस्य वेश्मनि ॥२३॥ एष वै किल देवक्यां जातो नीतश्च गोकुलम्। कालमेतं वसन्गूढो ववृधे नंदवेश्मनि ॥२४॥ पूतनानेन नीतांतं चक्रवातश्च दानवः। अर्जुनौ धेनुकः केशी गुह्यकोऽन्ये च तद्विधाः ॥२५॥ गावः सपाला एतेन दावाग्नेः परिमोचिताः। कालियो दमितः सर्प इन्द्रश्च विमदः कृतः ॥२६॥ सप्ताहमेकहस्तेन धृतोऽद्रिप्रवरोऽमुना। वर्षवाताशनिभ्यश्च परित्रातं च गोकुलम् ॥२७॥ गोप्योऽस्य नित्यमुदितहसितप्रेक्षणं मुखम्। पश्यंत्यो विविधांस्तापांस्तरंति स्माश्रमं मुदा ॥२८॥ वदंत्यनेन वंशोऽयं यदोः सुबहुविश्रुतः। श्रियं यशो महत्वं च लप्स्यते परिरक्षितः ॥२९॥ अयं चास्याग्रजः श्रीमान् रामः कमललोचनः। प्रलंबो निहतो येन वत्सको ये बकादयः ॥३०॥ जनेष्वेवं ब्रुवाणेषु तूर्येषु निनदत्सु च। कृष्णरामौ समाभाष्य चाणूरो वाक्यमब्रवीत् ॥३१॥ हे नंदसूनो हे राम भवंतौ वीरसंमतौ। नियुद्धकुशलौ श्रुत्वा राज्ञाहूतौ दिदृक्षुणा ॥३२॥ प्रियं राज्ञः प्रकुर्वंत्यः श्रेयो विंदंति वै प्रजाः। मनसा कर्मणा वाचा विपरीतमतोऽन्यथा ॥३३॥ नित्यं प्रमुदिता गोपा वत्सपाला यथास्फुटम्। वनेषु मल्लयुद्धेन क्रीडंतश्चारयंति गाः ॥३४॥ तस्माद्राज्ञः प्रियं यूयं वयं च करवामहे। भूतानि नः प्रसीदंति सर्वभूतमयो नृपः ॥३५॥ तन्निशम्याब्रवीत्कृष्णो देशकालोचितं वचः। नियुद्धमात्मनोऽभीष्टं मन्यमानोऽभिनंद्य च ॥३६॥ प्रजा भोजपतेरस्य वयं चापि वनेचराः। करवाम प्रियं नित्यं तन्नः परमनुग्रहः ॥३७॥

९ श्रमं सुखमिति वा यद्वा अश्रमं यथा भवति तथा तरंति स्मेति ॥२८॥ अनेन परिरक्षितो यदोर्वंशः सुबहु विश्रुतः सन् श्र्यादि लप्स्यत इति वदंतीति ॥२९॥ धेनुकबकवत्सासुरेषु विपर्ययोक्तिर्जनवादेष्वनिश्चयात् ॥३०॥ जनेष्वेवं ब्रुवाणेषु तदसहमानश्चाणूरोऽब्रवीदिति ॥३१॥३२॥३३॥३४॥ हे कृष्ण प्रियं करवामेति राज्ञि प्रीते भूतानि च प्रसीदेयुः ॥३५॥ ३६ ॥ ३७ ॥ ॥ ॥ ॥

T.

यथोचितंनियुद्धंबाहुयुद्धंभवेत्मल्लसभासदःमल्लसभाधिकृतान्जनान्अधर्मोमास्पृशेत्नस्पृशेतइत्यर्थःहेमल्लेतिवा॥३८॥सहस्रद्विपानांसत्वंबलंबिभर्तीतिसहस्रद्विपसत्वभृत्॥३९॥यथाबलिभिर्मादृशैःसहअनयोऽधर्मःविक्रमंपराक्रमंकुरुमुष्टिकोविक्रमतादितिअनुषंगः॥४०॥इतिदशमेटीकायांत्रिचत्वारिंशोऽध्यायः॥४३॥चतुश्चत्वारिंशकेतुमल्लकंसादिमर्दनम्।कंसयोषित्सभाश्वासस्ताभ्यांपित्रोश्चदर्शनम्॥१॥चर्चितःनिश्चितएवसंकल्पोयस्यसः॥१॥२॥बाहुमध्यात्कनिष्ठांगुलिव्यतिरेकेणकृतमुष्टिर्हस्तोऽरत्निः॥३॥परिभ्रामणंहस्तादिषुगृहीत्वापरितश्चालनंविक्षेपोनोदनंपरिरंभोबाहुभ्यांनिष्पीडनंअवपातनंअधःक्षेपःउत्सर्पणंउत्सृज्यपुरतोगमनंअपसर्पणंपृष्ठतोगमनंएतैःप्रत्यरुंधतांप्रत्यारतवन्तौ॥४॥उत्थापनंपादेजानुनी

बालाववंतुल्यबलैःक्रीडिष्यामोयथोचितम्।भवेन्नियुद्धंमाधर्मःस्पृशेन्मल्लसभासदः॥३८॥चाणूरउवाच॥नबालोनकिशोरस्त्वंबलश्चबलिनांवरः।लीलयेभोहतोयेनसहस्रद्विपसत्वभृत्॥३९॥तस्माद्भवद्भ्यांबलिभिर्योद्धव्यंनाऽनयोऽत्रवै।मयिविक्रमवार्ष्णेयबलेनसहमुष्टिकः॥४०॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेकुवलयापीडवधोनामत्रिचत्वारिंशोऽध्यायः॥४३॥श्रीशुकउवाच॥एवंचर्चितसंकल्पोभगवान्मधुसूदनः।आससादाथचाणूरंमुष्टिकंरोहिणीसुतः॥१॥हस्ताभ्यांहस्तयोर्बध्वापद्भ्यामेवचपादयोः।विचकर्षतुरन्योन्यंप्रसह्यविजिगीषया॥२॥आस्फोत्यहस्तौहस्ताभ्यामूरूश्चैवपुनःपुनः।विसृज्यभूयःसंगृह्यपरिक्रम्यपरस्परम्॥३॥अरत्नीद्वेअरत्निभ्यांजानुभ्यांचैवजानुनी।शिरःशीर्ष्णोरसोरस्तावन्योन्यमभिजघ्नतुः॥४॥परिभ्रामणविक्षेपपरिरंभावपातनैः।उत्सर्पणापसर्पणैश्चअन्योन्यंप्रत्यरुंधताम्॥५॥उत्थापनैरुन्नयनैश्चालनैःस्थापनैरपि।परस्परंजिगीषंतावपचक्रतुरात्मनः॥६॥तद्बलाबलवद्युद्धंसमेताःसर्वयोषितः।ऊचुःपरस्परंराजन्सानुकंपावरूथशः॥७॥महानयंबताधर्मएषांराजसभासदाम्।येबलाबलवद्युद्धंराज्ञोऽन्विच्छंतिपश्यतः॥८॥क्ववज्रसारसर्वांगौमल्लौशैलेंद्रसन्निभौ।क्वचातिसुकुमारांगौकिशोरौनाप्तयौवनौ॥९॥ ९चपिंडीकृत्यपतितस्योच्चाटनम्उन्नयनंहस्ताभ्यामुद्धृत्यनयनम्चालनंकंठादिलग्नस्यनिःसारणंस्थापनंपाणिपादादिपिंडीकरणंएवंपरस्परंआत्मनोदेहस्यापचक्रतुःअपकारंकृतवंतौ॥५॥तद्युद्धंबलाबलवत्एकतोबलंअन्यतोऽबलंतद्युद्धंविषममित्यूचुरित्यर्थःयद्वातद्बलाबलवतोर्युद्धंदृष्ट्वामहानयमधर्मइत्यूचुरित्यन्वयः॥६॥तदेवदर्शयतिमहानितिबालयोर्बलवतोश्चयुद्धंराजाचेत्पश्येत्स्वयंवारणीयःएतेराज्ञःपश्यतःस्वयमप्यन्विच्छंतिअनुमन्यंतइ
[illegible]वज्रसाराणिवज्रवत्कठिनानिसर्वाण्यंगानिययोस्तौ॥९॥समाजसभायां

॥३८॥३९॥निर्वेशोनिष्कृतिःआनृण्यमित्यर्थःतत्कारिणःसतस्यऽभ्यधावन्॥४०॥तथातान्उद्गतिरभसोवेगोयेषांतान्संयतान्उद्युक्तान्॥४१॥४२॥
॥४३॥शोचंत्योविलापांअस्रक्रुःशुचःअश्रूणि॥४४॥धर्मज्ञेत्यादीनिविलापेप्रेमसंबोधनानितैरलदीयावयम्॥४५॥त्वयापत्याविरहितापुरीयंनशोभत
इतिस्वदृष्ट्याऽभिधानम्॥४६॥अनागसामितितुपरमार्थाभिधानं॥४७॥एषःकृष्णःप्रभवत्यस्मादितिप्रभवःअपियंत्यस्मिन्नितिअप्ययःसचसचतद्व

प्रगृह्यकेशेषुचलत्किरीटंनिपात्यरंगोपरितुंगमंचात्।तस्योपरिष्टात्स्वयमब्जनाभःपपातविश्वाश्रयआत्मतंत्रः॥३८॥तं
संपरेतंविचकर्षभूमौहरिर्यथेभंजगतोविपश्यतः।हाहेतिशब्दःसुमहांस्तदाऽभूदुदीरितःसर्वजनैर्नरेंद्र॥३९॥सनित्यदो
द्विग्नधियातमीश्वरंपिबन्वदन्वाविचरन्स्वपन्श्वसन्।ददर्शचक्रायुधमग्रतोयतस्तदेवरूपंदुरवापमाप॥४०॥तस्यानु
जाभ्रातरोऽष्टौकंकन्यग्रोधकादयः॥अभ्यधावन्नभिक्रुद्धाभ्रातुर्निर्वेशकारिणः॥४१॥तथातिरभसांस्तांस्तुसंयत्तान्रोहिणी
सुतः॥अहन्परिघमुद्यम्यपशूनिवमृगाधिपः॥४२॥नेदुर्दुंदुभयोव्योम्निब्रह्मेशाद्याविभूतयः।पुष्पैःकिरंतस्तंप्रीत्याशशंसुर्न
नृतुःस्त्रियः॥४३॥तेषांस्त्रियोमहाराजसुहृन्मरणदुःखिताः।तत्राभीयुर्विनिघ्नंत्यःशीर्षाण्यश्रुविलोचनाः॥४३॥शयानान्वी
रशय्यायांपतीनालिंग्यशोचतीः।विलेपुःसुस्वरंनार्योविसृजंत्योमुहुःशुचः॥४४॥हानाथप्रियधर्मज्ञकरुणानाथवत्सल।त्व
याहतेननिहतावयंतेसगृहप्रजाः॥४५॥त्वयाविरहितापत्यापुरीयंपुरुषर्षभ।नशोभतेवयमिवनिवृत्तोत्सवमंगला॥४६॥अना
गसांत्वंभूतानांकृतवान्द्रोहमुल्बणम्।तेनेमांभोदशांनीतोभूतध्रुक्कोलभेतशम्॥४७॥सर्वेषामिहभूतानामेषहिप्रभवाप्ययः।
गोप्ताचतदवध्यायीनक्वचित्सुखमेधते॥४८॥श्रीशुकउवाच।राजयोषितआश्वास्यभगवाँल्लोकभावनः।यामाहुर्लौ
किकींसंस्थांहतानांसमकारयत्॥४९॥मातरंपितरंचैवमोचयित्वाथबंधनात्।कृष्णरामौववंदातेशिरसास्पृश्यपादयोः
॥५०॥देवकीवसुदेवश्चविज्ञायजगदीश्वरौ।कृतसंवंदनौपुत्रौसस्वजातेनशंकितौ॥५१॥ इतिश्रीभागवतेमहापुराणे
दशमस्कंधेकंसवधोनामचतुश्चत्वारिंशोऽध्यायः॥४४॥

॥ ९ ध्यानंअवज्ञातत्कर्तृशीलंयस्यसः॥४८॥४९॥आस्पृश्यईषत्स्पृ
ष्ट्वा॥५०॥पुत्रभ्रांतिंविहायजगदीश्वराविविज्ञात्वाशंकितौसंतौनसस्वजातेनालिंगितवंतौकिंतुबद्धांजलीतस्थतुरित्यर्थः॥५१॥प्रसह्य
हत्वाहस्तींद्रंमल्लेंद्रान्मल्ललीलया।बीभत्सचरितंकंसंसबीभत्समवारयत्॥१॥ ॥ इतिश्रीदशमेचतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥

पंचचत्वारिंशकेथपितृनंदादिसांत्वनम्॥उग्रसेनाभिषेकश्च गुरौवासात्सुरागमः॥१॥उपलब्धार्थौविदित्वेतिअपमर्थः उपसमीपेआवयोःप्रत्रबुद्ध्या सांसारिकपरमसुखभोगात् पूर्वमेवलब्धार्थौआवामीश्वरावितिलब्धः प्राप्तः परमज्ञानरूपोऽर्थोयाभ्यांतौतथाभूतौज्ञात्वामयिप्रसन्नेसत्यऽनयोर्ज्ञा नन्नामकिंदुर्लभंस्यात्दुर्लभंतुमयिपुत्रतयाप्रेमअतइदानीमेवतत् ज्ञानंमाभूदितिनिजांस्वाधीनांमायांतयोःप्रसारितवानिति॥१॥तदेवदर्शयति उवाचेत्यादिभिरष्टभिःप्रीणयन्सादरंब्रुवन्॥२॥अस्मत्तःअस्मन्निमित्तंनित्यमुत्कंठितयोरपियुवयोःपुत्राभ्यांआवाभ्यांकृताबाल्यपौगंडकैशोराःतत्तद वस्थाऽनुभवसुखानीत्यर्थःनाभवन्निति अस्मत्तःपुत्राभ्यामितिसामानाधिकरण्यंवा॥३॥किंचआवामेवदैवहीनावित्याहनलब्धइतिपितृगेहस्थाबाला

श्रीशुकउवाच॥पितरावुपलब्धार्थौविदित्वापुरुषोत्तमः।माभूदितिनिजांमायांततानजनमोहिनीम्॥१॥उवाचपितरावेत्यसाग्रजःसा त्वतर्षभः।प्रश्रयावनतःप्रीणन्नंबताततेतिसादरम्॥२॥नास्मत्तोयुवयोस्तातनित्योत्कंठितयोरपि।बाल्यपौगंडकैशोराःपुत्राभ्यामभ वन्क्वचित्॥३॥नलब्धोदैवहतयोर्वासोनौभवदंतिके।यांबालाःपितृगेहस्थाविंदंतेलालितामुदम्॥४॥सर्वार्थसंभवोदेहोजनि तःपोषितोयतः।नतयोर्यातिनिर्वेशंपित्रोर्मर्त्यःशतायुषा॥५॥यस्तयोरात्मजःकल्प आत्मनाचधनेनच।वृत्तिंनदद्यात्तंप्रेत्यस्वमांसं खादयंतिहि॥६॥मातरंपितरंवृद्धंभार्यांसाध्वींसुतंशिशुम्।गुरुंविप्रंप्रपन्नंचकल्पोऽबिभ्रच्छ्वसन्मृतः॥७॥तन्नावकल्पयोःकं सान्नित्यमुद्विग्नचेतसोः।मोघमेतेव्यतिक्रांतादिवसावामनर्चतोः॥८॥तत्क्षंतुमर्हथस्तातमातर्नौपरतंत्रयोः।अकुर्वतोर्वां शुश्रूषांक्लिष्टयोर्दुर्हृदाभृशम्॥९॥श्रीशुकउवाच॥इतिमायामनुष्यस्यहरेर्विश्वात्मनोगिरा।मोहितावंकमारोप्यपरिष्वज्यापतुर्मु दम्॥१०॥सिंचंतावश्रुधाराभिःस्नेहपाशेनचावृतौ।नकिंचिदूचतूराजनबाष्पकंठौविमोहितौ॥११॥एवमाश्वास्यपितरौभगवान्दे वकीसुतः।मातामहंतूग्रसेनंयदूनामकरोन्नृपम्॥१२॥आहचास्मान्महाराजप्रजाश्चाज्ञप्तुमर्हसि।ययातिशापाद्यदुभिर्नासितव्यंनृपा

यांमुदंविंदंतेसाचनलब्धेति॥४॥एवंतावत्श्लोकद्वयेनयुवयोरावयोश्चकामहानिर्जातेत्युक्तंआवयोःपुनर्युष्मत्परिचर्यालोपेनधर्महानिरपिजातेत्याहस र्वार्थसंभवइतिसर्वेषांधर्माद्यर्थानांसंभवोयस्मिन्सदेहोयतःयाभ्यांजनितःपोषितश्चतयोःपित्रोर्निर्वेशंनिष्कृतिमानृण्यंमर्त्यःशतसंवत्सरमात्रेणायुषान प्राप्नोति॥५॥तन्मध्येपितुर्यःपुत्रःकल्पःसमर्थःसन्नपिदेहेनधनेनचपित्रोर्वृत्तिंजीविकांनसंपादयेत्तंप्रेत्यलोकांतरेयमदूताःस्वस्यैवमांसंखादयंतीति ॥६॥किंचमात्रादिश्चअपालकुर्वन्विफलजीवितश्चभवतीत्यतआहमातरमितिअबिभ्रत्अपुष्णन्श्वसन्नपिमृततुल्यएवेति॥७॥तत्तस्मान्नौआवयोः

अपराऊचुः नसभामिति अब्रुवन् ज्ञात्वापि तूष्णीं तिष्ठन् विब्रुवन् विपरीतं ब्रुवन् अज्ञः नजानामीति ब्रुवन् अतः प्राज्ञः सभां न प्रविशेदिति॥१०॥
वल्गतः शत्रुमभितइति शत्रोः सर्वतोधावतः श्रीकृष्णस्य श्रमवारिणा उप्तं न्यास्तं वदनांबुजं दृश्यताम्॥११॥अन्याऊचुः किन्नपश्यतइति सामर्षसक्रो
धं हासेन संरंभः आवेशस्तेन शोभितम्॥१२॥अन्याऊचुः पुण्याबतेति नृलिंगेन मनुष्यदेहेन गूढः वनस्थानि चित्राणि माल्यानि यस्य सः गिरित्रः शिवः
रमा च ताभ्यामर्चितौ अंघ्री यस्य सः अयं भावः धिगिमां सभां यस्यामयं पराभूयते तासु व्रजभुवो धन्याः यत् यासु अयं कृष्णो विविधक्रीडयांऽचति गच्छती
ति अहो कष्टमल्पपुण्या वयं यतो स्माभिरनवसरे दृष्टोऽयम्॥१३॥गोप्यस्तु बहुपुण्या इत्याहुस्त्रिभिः गोप्यइति अमुष्य कृष्णस्य रूपं अंगलावण्येन सा

धर्मव्यतिक्रमो ह्यस्य समाजस्य ध्रुवं भवेत्। यत्राधर्मः समुत्तिष्ठेन्न स्थेयं तत्र कर्हिचित्॥१०॥ न सभां प्रविशेत्प्राज्ञः सभ्यदो
षाननुस्मरन्। अब्रुवन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुते॥११॥ वल्गतः शत्रुमभितः कृष्णस्य वदनांबुजम्। वीक्ष्यतां श्रमवार्यु
प्तं पद्मकोशमिवांबुभिः॥१२॥ किन्न पश्यत रामस्य मुखमाताम्रलोचनम्। मुष्टिकं प्रति सामर्षं हाससंरंभशोभितम्॥१३॥ पु
ण्या बत व्रजभुवो यदयं नृलिंगगूढः पुराणपुरुषो वनचित्रमाल्यः। गाः पालयन्सहबलः क्वणयंश्च वेणुं विक्रीडयांचति गिरि
त्ररमार्चितांघ्रिः॥१४॥ गोप्यस्तपः किमचरन्यदमुष्य रूपं लावण्यसारमसमोर्ध्वमनन्यसिद्धम्। दृग्भिः पिबंत्यनुसवाभिन
वं दुरापमेकांतधाम यशसः श्रिय ऐश्वरस्य॥१५॥ या दोहनेऽवहनने मथनोपलेपप्रेंखेंखनार्भरुदितोक्षणमार्जनादौ। गायंति
चैनमनुरक्तधियोऽश्रुकंठ्यो धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः॥१६॥ प्रातर्व्रजाद्व्रजत आविशतश्च सायं गोभिः समं क्वणय
तोऽस्य निशम्य वेणुम्। निर्गम्य तूर्णमबलाः पथि भूरिपुण्याः पश्यंति सस्मितमुखं सदयावलोकम्॥१७॥ एवं प्रभाषमाणासु स्त्री
ष्वयोगेश्वरो हरिः। शत्रुं हंतुं मनश्चक्रे भगवान्भरतर्षभ॥१८॥ ॰ रं श्रेष्ठं किंच असमोर्ध्वं न विद्यते समं ऊर्ध्वमधिकं च यस्य तत्तदपि न अ
न्येन आभरणादिना सिद्धं किंतु स्वत एव ऐश्वरस्य ऐश्वर्यस्य च एकांतधाम अव्यभिचारिस्थानं पाठान्तरे अमुष्य ईश्वरस्येत्यन्वयः एवंभूतं नित्यं
नवीनं रूपं या नेत्रैः पिबंतीति॥१४॥ किंच या दोहनादिषु एनं गायंति ता व्रजस्त्रियो धन्याः प्रेंखं खनं दोलां दोलनं उक्षणं सेचनं कथंभूताः उरुक्र
मे चित्तं उरुक्रमचित्तं तेनैव यानं सर्वविषयप्राप्तिर्यासां ताः पाठांतरे उरुक्रमं चिंतयंत्य इत्यर्थः कुतः अनुरक्तधियः तत्र लिंगं अश्रुकंठ्यः॥१५॥
प्रातरिति या अबला अस्य वेणुं निशम्य गृहात्तूर्णं निर्गम्य पथि सस्मितं मुखं पश्यंति ता भूरिपुण्या इति॥१६॥ एवं सभयं ब्रुवाणासु स्त्रीषु तासां भयं नि
वर्तये कृष्णः शत्रुं हंतुं मनश्चक्रे॥१७॥ सभयाः स्त्रीणां गिरः श्रुत्वा पुत्रयोः स्नेहेन या शुक् तया आतुरौ विक्लवौ पुत्रयोर्बलमजानंतौ पितरावन्वतापं प्राप्ता

टी०॥८८॥

॥१९॥ तदा भगवतो गात्राणां अरत्निजान्वादीनां निष्पातैः प्रहारैः वज्रस्य निष्पेषः तीव्रप्रतापः तद्वन्निष्ठुरैः भज्यमानांगः स्वगात्रव्यथः ॥२०॥ श्येनस्येव वेगो यस्य सः चाणूरः अबाधत अताडयत् ॥२१॥२२॥ भूपृष्ठे भुवउपरि पोथयामास आस्फालयत् इंद्रध्वजो वज्रं यष्टिः इंद्रध्वजो नाम गौडे

सभयाः स्त्रीगिरः श्रुत्वा पुत्रस्नेहशुचातुरौ। पितरावन्वतप्येतां पुत्रयोरबुधौ बलम् ॥१९॥ तैस्तैर्नियुद्धविधिभिर्विविधैरच्युतेतरौ। युयुधाते यथान्योन्यं तथैव बलमुष्टिकौ ॥२०॥ भगवद्गात्रनिष्पातैर्वज्रनिष्पेषनिष्ठुरैः। चाणूरो भज्यमानांगो मुहुर्ग्लानिमवाप ह ॥२१॥ स श्येनवेग उत्पत्य मुष्टीकृत्य करावुभौ। भगवंतं वासुदेवं क्रुद्धो वक्षस्यबाधत ॥२२॥ नाचलत्तत्प्रहारेण मालाहत इव द्विपः। बाह्वोर्निगृह्य चाणूरं बहुशो भ्रामयन्हरिः ॥२३॥ भूपृष्ठे पोथयामास तरसा क्षीणजीवितम्। विस्रस्ताकल्पकेशस्रगिंद्रध्वज इवापतत् ॥२४॥ तथैव मुष्टिकः पूर्वं स्वमुष्ट्याभिहतेन वै। बलभद्रेण बलिना तलेनाभिहतो भृशम् ॥२५॥ प्रवेपितः सरुधिरमुद्वमन्मुखतोऽर्दितः। व्यसुः पपातोर्व्युपस्थे वाताहत इवांघ्रिपः ॥२६॥ ततः कूटमनुप्राप्तं रामः प्रहरतां वरः। अवधील्लीलया राजन्सावज्ञं वाममुष्टिना ॥२७॥ तर्ह्येव हि शलः कृष्णपदापहतशीर्षकः। द्विधा विदीर्णस्तोशलक उभावपि निपेततुः ॥२८॥ चाणूरे मुष्टिके कूटे शले तोशलके हते। शेषाः प्रदुद्रुवुर्मल्लाः सर्वे प्राणपरीप्सवः ॥२९॥ गोपान्वयस्यानाकृष्य तैः संसृज्य विजह्रतुः। वाद्यमानेषु तूर्येषु वल्गन्तौ रुतनूपुरौ ॥३०॥ जनाः प्रजहृषुः सर्वे कर्मणा रामकृष्णयोः। ऋते कंसं विप्रमुख्याः साधवः साधु साध्विति ॥३१॥ हतेषु मल्लवर्येषु विद्रुतेषु च भोजराट्। न्यवारयत्स्वतूर्याणि वाक्यं चेदमुवाच ह ॥३२॥ निःसारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात्। धनं हरत गोपानां नंदं बध्नीत दुर्मतिम् ॥३३॥ वसुदेवश्च दुर्मेधा हन्यतामाश्वसत्तमः। उग्रसेनः पिता चापि सानुगः परपक्षगः ॥३४॥ एवं विकत्थमाने वै कंसे प्रकुपितोऽव्ययः। लघिम्नोत्पत्य तरसा मंचमुत्तुंगमारुहत् ॥३५॥ तमाविशंतमालोक्य मृत्युमात्मन आसनात्। मनस्वी सहसोत्थाय जगृहे सोऽसिचर्मणी ॥३६॥ तं खड्गपाणिं विचरंतमाशु श्येनं यथा दक्षिणसव्यमंबरे। समग्रहीद्दुर्विषहोग्रतेजा यथोरगं तार्क्ष्यसुतः प्रसह्य ॥३७॥ ९ वप्रसिद्धः कस्मिंश्चिदुत्सवे महास्तंभो ध्वजपताकाद्यलंकृतः पुरुषाकृतिः उच्छ्रीयते स यथा पतति तद्वत्पतदिति ॥२३॥२४॥ अर्दितः पीडितः उर्व्युपस्थे भूतले ॥२५॥२६॥२७॥२८॥ वल्गंतौ नृत्यादि कुर्वन्तौ ॥२९॥ साधु साधु इति वदंतः ॥३०॥३१॥३२॥
[illegible] ॥३६॥ [illegible]

ममतादृशी शक्तिर्नास्तीति चेत्तत्राह मयीति मत्प्रसादेन सर्वं भविष्यतीत्यर्थः ॥१४॥ स्वान्ज्ञातीन्संबंधांश्च दिग्भ्य आनाय्येति ॥१५॥१६॥ सिद्धाः पूर्णाः कृ
ष्णरामाभ्यां गतो निवृत्तो ज्वरस्तापो येषां ते ॥१७॥ सदयस्मितं वीक्षणं यस्मिंस्तत् ॥१८॥ प्रवयसो वृद्धा अपि अतिशयितं बलमोजश्च येषां ते ॥१९॥२०॥ भृ
शमात्मनोऽप्याधिक्येन पोषितौ न चाश्चर्यमेतदित्याह पित्रोरिति आत्मनो देहादप्यात्मजेष्वभ्यधिका हि प्रीतिरिति ॥२१॥ देवकीवसुदेवयोः पुत्रौस्ववामन्ना

मयि भृत्य उपासीने भवतो विबुधादयः। बलिं हरंत्यवनताः किमुतान्ये नराधिपाः ॥१४॥ सर्वान्स्वज्ञातिसंबंधान्दिग्भ्यः कंसभयाकु
लान्। यदुवृष्ण्यंधकमधुदाशार्हकुकुरादिकान् ॥१५॥ सभाजितान्समाश्वास्य विदेशावासकर्शितान्। न्यवासयत्स्वगेहेषु वित्तैः
संतर्प्य विश्वकृत् ॥१६॥ कृष्णसंकर्षणभुजैर्गुप्ता लब्धमनोरथाः। गृहेषु रेमिरे सिद्धाः कृष्णरामगतज्वराः ॥१७॥ वीक्षंतोऽहरहः
प्रीता मुकुंदवदनांबुजम्। नित्यं प्रमुदितं श्रीमत्सदयस्मितवीक्षणम् ॥१८॥ तत्र प्रवयसोऽप्यासन्युवानोऽतिबलौजसः। पिब
न्तोऽक्षैर्मुकुंदस्य मुखांबुजसुधां मुहुः ॥१९॥ अथ नंदं समासाद्य भगवान्देवकीसुतः। संकर्षणश्च राजेंद्र परिष्वज्येदमूचतुः ॥२०॥
पितर्युवाभ्यां स्निग्धाभ्यां पोषितौ लालितौ भृशम्। पित्रोरभ्यधिका प्रीतिरात्मजेष्वात्मनोऽपि हि ॥२१॥ स पिता सा च जननी यौ पु
ष्णीतां स्वपुत्रवत्। शिशून्बंधुभिरुत्सृष्टानकल्पैः पोषरक्षणे ॥२२॥ यात यूयं व्रजं तात वयं च स्नेहदुःखितान्। ज्ञातीन्वो द्रष्टुमेष्या
मो विधाय सुहृदां सुखम् ॥२३॥ एवं सांत्वय्य भगवान्नंदं सव्रजमच्युतः। वासोऽलंकारकुप्याद्यैरर्हयामास सादरम् ॥२४॥ इत्युक्त
स्तौ परिष्वज्य नंदः प्रणयविह्वलः। पूरयन्नश्रुभिर्नेत्रे सह गोपैर्व्रजं ययौ ॥२५॥ अथ शूरसुतो राजन्पुत्रयोः समकारयत्। पुरोध
सा ब्राह्मणैश्च यथावद्द्विजसंस्कृतिम् ॥२६॥ तेभ्योऽदाद्दक्षिणा गावो रुक्ममाल्यः स्वलंकृताः। स्वलंकृतेभ्यः संपूज्य सवत्साः क्षौ
ममालिनीः ॥२७॥ याः कृष्णरामजन्मर्क्षे मनोदत्ता महामतिः। ताश्चाददादनुस्मृत्य कंसेनाधर्मतो हृताः ॥२८॥ ततश्च लब्धसं
स्कारौ द्विजत्वं प्राप्य सुव्रतौ। गर्गाद्यदुकुलाचार्याद्गायत्रं व्रतमास्थितौ ॥२९॥ प्रभवौ सर्वविद्यानां सर्वज्ञौ जगदीश्वरौ। नान्यसि
द्धामलज्ञानं गूहमानौ नरेहितैः ॥३०॥

स्वसुतावित्यपि न वाच्यमित्याह स पितेति ॥२२॥२३॥ सव्रजं व्रजवासिभिः सहितम्। कुप्यानि स्व
र्णरजतादिव्यतिरिक्तकांस्यपात्रादीनि तत्प्रभृतिभिः ॥२४॥२५॥ पुरोधसा गर्गाचार्येण द्विजसंस्कृतिमुपनयनम् ॥२६॥ गावो गाः रुक्ममाला विद्य
ते यासां ताः क्षौमवस्त्रमालावतीः ॥२७॥ याः पूर्वं मनोदत्ताः आसन् ता एवाददात् नतु ताः कंसेनापहृताः स्वयं राजगोष्ठादाच्छिद्य दत्ता इत्याह कंसेनाध
र्मत इति ॥२८॥ गायत्रं व्रतं ब्रह्मचर्यम् ॥२९॥ प्रकर्षेण भवंत्याभ्यामिति प्रभवौ अत एव सर्वज्ञौ स्वतः सिद्धममलं ज्ञानं प्रच्छादयंतौ नरचेष्टितैः ॥३०॥

॥३१॥ यथायथावत् उपसाद्य प्राप्य गुरोर्वृत्तिमन्यान् ग्राहयंतौ शिक्षयंतौ गुरुमुपेतौ उपगतौ सेवितवंतावित्यर्थः॥३२॥ शुद्धो भावो यासु ताभिरनुवृत्ति
भिः सांगोपनिषदः अंगानि षडंगानि शिक्षादीनि तैरुपनिषद्भिश्च सहितान्॥३३॥ सरहस्यं मंत्रदेवताज्ञानसहितं धर्मान् मन्वादिधर्मशास्त्राणि न्यायप
थान् मीमांसादीन् आन्वीक्षिकीं तर्कविद्यां षड्विधां संधिविग्रहौ यानमासनं द्वैधमाश्रय इति एवं षड्विधां राजनीतिम्॥३४॥ सकृन्निगदमात्रेण एकवारं गु
रोरुच्चारणमात्रेण॥३५॥ तावतीः चतुःषष्टिकलाः ताश्च शैवतंत्रोक्ता लिख्यंते यथा गीतं१ वाद्यं२ नृत्यं३ नाट्यं४ आलेख्यं५ विशेषकच्छेद्यम्६ तंडुलकु
सुमबलिप्रकाराः७ पुष्पास्तरणम्८ दशनवसनांगरागाः९ मणिभूमिकाकर्म१० शयनरचनम्११ उदकवाद्यम्१२ उदकघातः१३ चित्रयोगाः१४ माल्यग्र
थनविकल्पाः१५ शेखरापीडयोजनम्१६ नेपथ्ययोगाः१७ कर्णपत्रभंगाः१८ सुगंधयंत्रयुक्तिः१९ भूषणयोजनम्२० ऐंद्रजालम्२१ कौतुमारयोगाः२२ हस्त
लाघवम्२३ चित्रशाकापूपभक्ष्यविकारक्रिया२४ पानकरसरागासवयोजनम्२५ सूचीकर्म२६ सूत्रक्रीडा२७ प्रहेलिका२८ प्रतिमाला२९ दुर्वाचकयोगाः३०

अथो गुरुकुले वासमिच्छंतावुपजग्मतुः। काश्यं सांदीपनिं नाम ह्यवंतिपुरवासिनम्॥३१॥ यथोपसाद्य तौ दांतौ गुरौ वृत्तिमनिं
दिताम्। ग्राहयंतावुपेतौ स्म भक्त्या देवमिवादृतौ॥३२॥ तयोर्द्विजवरस्तुष्टः शुद्धभावानुवृत्तिभिः। प्रोवाच वेदानखिलान् सांगोप
निषदो गुरुः॥३३॥ सरहस्यं धनुर्वेदं धर्मान्न्यायपथांस्तथा। तथा चान्वीक्षिकीं विद्यां राजनीतिं च षड्विधाम्॥३४॥ सर्वं नरवरश्रेष्ठौ
सर्वविद्याप्रवर्तकौ। सकृन्निगदमात्रेण तौ संजगृहतुर्नृप॥३५॥ अहोरात्रैश्चतुःषष्ट्या संयत्तौ तावतीः कलाः। गुरुदक्षिणयाचा
र्यं छंदयामासतुर्नृप॥३६॥ द्विजस्तयोस्तं महिमानमद्भुतं संलक्ष्य राजन्नतिमानुषीं मतिम्। संमंत्र्य पत्न्या स महार्णवे मृतं बालं
प्रभासे वरयांबभूव ह॥३७॥ तथेत्यथारुह्य महारथौ रथं प्रभासमासाद्य दुरंतविक्रमौ। वेलामुपव्रज्य निषीदतुः क्षणं सिंधुर्वि
दित्वार्हणमाहरत्तयोः॥३८॥ तमाह भगवानाशु गुरुपुत्रः प्रदीयताम्। योऽसाविह त्वया ग्रस्तो बालको महतोर्मिणा॥ ३९॥

पुस्तकवाचनम्३१ नाटकाख्यायिकादर्शनम्३२ काव्यसमस्यापूरणम्३३ पट्टिकावेत्रबाणविकल्पाः३४ तर्ककर्माणि३५ तक्षणम्३६ वास्तुविद्या३७
रूप्यरत्नपरीक्षा३८ धातुवादः३९ मणिरागज्ञानम्४० आकरज्ञानं४१ वृक्षायुर्वेदयोगाः४२ मेषकुक्कुटलावकयुद्धविधिः४३ शुकसारिकाप्रलापनम्४४
उत्सादनम्४५ केशमार्जनकौशलम्४६ अक्षरमुष्टिकाकथनम्४७ म्लेच्छितकुतर्कविकल्पाः४८ देशभाषाज्ञानम्४९ पुष्पशकटिकानिमित्तज्ञानम्५०
यंत्रमातृकाधारणमातृका५१ संवाच्यम्५२ मानसीकाव्यक्रिया५३ अभिधानकोशः५४ छंदोज्ञानं५५ क्रियाविकल्पाः५६ छलितकयोगाः५७ वस्त्रगोप
नानि५८ द्यूतविशेषः५९ आकर्षक्रीडा६० बालक्रीडनकानि६१ वैनायिकीनाम्६२ वैजयिकीनाम्६३ वैतालिकीनां च विद्यानां ज्ञानम्६४ इति चतुःष
ष्टिकलाः छंदयामासतुरुपलोभितवंतौ॥३६॥ प्रभासे क्षेत्रे महार्णवे मृतं बालकं वरयामास॥३७॥ [illegible]

पंचजनस्त्वसुरोऽह्वार्षीत् स च महान् ममाऽसाध्य इत्यर्थः॥४०॥४१॥४२॥४३॥ सपर्या पूजा सर्वेषां भूतानामाशयाः अंतःकरणानि तान्यालयो निवा
सोयस्य तम्॥४४॥ निजकर्म एव निबंधनम् यस्य तं तथाभूतमपि मदाज्ञापुरस्कारेणानय तस्तेन दोषइत्यर्थः॥४५॥४६॥ वत्सेति प्राधान्येनैकस्य सं
बोधनम् गुरोर्निष्क्रयो गुरुदक्षिणा युष्माद्विधयोर्गुरोर्मम कामानां मध्ये कोन्नु कामोऽवशिष्यते न कोपीति॥४७॥ हे वीरौ स्वगृहं गच्छतम् वां युवयोः अया

समुद्र उवाच॥ नैवाहार्षमहं देव दैत्यः पंचजनो महान्। अंतर्जलचरः कृष्ण शंखरूपधरोऽसुरः॥४०॥ आस्ते तेनाहृतो नू
नं तच्छ्रुत्वा सत्वरं प्रभुः। जलमाविश्य तं हत्वा नापश्यदुदरेऽर्भकम्॥४१॥ तदंगप्रभवं शंखमादाय रथमागमत्। ततः संय
मनीं नाम यमस्य दयितां पुरीम्॥४२॥ गत्वा जनार्दनः शंखं प्रदध्मौ सहलायुधः। शंखनिर्ह्रादमाकर्ण्य प्रजासंयमनो यमः॥४३॥
तयोः सपर्यां महतीं चक्रे भक्त्युपबृंहिताम्। उवाचावनतः कृष्णं सर्वभूताशयालयम्॥४४॥ लीलामनुष्य हे विष्णो युवयोः करवा
म किम्। श्रीभगवानुवाच॥ गुरुपुत्रमिहानीतं निजकर्मनिबंधनम्। आनयस्व महाराज मच्छासनपुरस्कृतः॥४५॥ तथेति ते
नोपानीतं गुरुपुत्रं यदूत्तमौ। दत्त्वा स्वगुरवे भूयो वृणीष्वेति तमूचतुः॥४६॥ गुरुरुवाच॥ सम्यक् संपादितो वत्स भवद्भ्यां गुरुनिष्क्र
यः॥ कोन्नु युष्मद्विधगुरोः कामानामवशिष्यते॥४७॥ गच्छतं स्वगृहं वीरौ कीर्तिर्वामस्तु पावनी। छंदांस्ययातयामानि भवंति
ह परत्र च॥४८॥ गुरुणैवमनुज्ञातौ रथेनानिलरंहसा। आयातौ स्वपुरं तात पर्जन्यनिनदेन वै॥४९॥ समनंदन् प्रजाः सर्वा दृष्ट्वा रा
मजनार्दनौ। अपश्यंत्यो बह्वहानि नष्टलब्धधना इव॥५०॥ इति श्रीभागवते महापुराणे दशमस्कंधे पंचचत्वारिंशोऽध्यायः॥
४५॥ बादरायणिरुवाच॥ वृष्णीनां प्रवरो मंत्री कृष्णस्य दयितः सखा। शिष्यो बृहस्पतेः साक्षादुद्धवो बुद्धिसत्तमः॥१॥ तमा
ह भगवान् प्रेष्ठं भक्तमेकांतिनं क्वचित्। गृहीत्वा पाणिना पाणिं प्रपन्नार्तिहरो हरिः॥२॥ गच्छोद्धव व्रजं सौम्य पित्रोर्नौ प्रीतिमा
वह। गोपीनां मद्वियोगाधिं मत्संदेशैर्विमोचय॥३॥

१९ तयामानि अगतसाराणि॥४८॥ अनिलवद्रंहो वेगो यस्य तेन पर्जन्यो मेघः त
द्वन्निनदो यस्य तेन॥४९॥ नष्टं अदृष्टं तत्पुनर्लब्धं धनं याभिस्ता इवेति॥५०॥ इति श्रीदशमे पंचचत्वारिंशोऽध्यायः॥४५॥ षट्चत्वारिंशके घोषमु
द्धवं प्रेष्य तद्गिरा। यशोदानंदयोरंके कृष्णः शोकापनोदनं॥१॥ कामचारं द्विजातिः सन् परित्यज्याति संयतः। गुरोर्ज्ञानमनुप्राप्य सखा गोपीरुप
दिशत्॥२॥ गोपीनां सांत्वनमतिरहस्यं सन्मंत्रिसाध्यमिति तदर्थं उद्धवं विशिनष्टि वृष्णीनामिति बुद्धिसत्तमः बुद्ध्यातिश्रेष्ठः॥१॥२॥ ३॥

गोपीनां विशेषतः संदेशे कारणमाह ता इति मय्येव संकल्पात्मकं मनो यासां ताः अहमेव प्राणो यासां ताः मदर्थे त्यक्तदैहिकाः पतिपुत्रादयो याभिस्ताः ततः किमत आह ये त्यक्तलोकधर्मा इति मन्निमित्तं त्यक्तौ लोकधर्मौ इहामुत्रसुखे तत्साधनानि च यैस्तान्बिभर्मि संवर्धयामि सुखयामीत्यर्थः॥४॥ तासां वियोगाधिं दर्शयति द्वयेन मयि ता इति॥५॥ विरहेण औत्कंठ्यं तेन विह्वलाः परवशाः गोकुलान्निर्गमनसमये शीघ्रमागमिष्यामीति ये प्रत्यागमनसंदेशास्तैर्मे मदीया वल्लव्यो गोप्यः मदात्मिका इति तासामात्मा यदि स्वदेहे स्यात् तर्हि विरहतापेन दह्येतैव मयि वर्तमानत्वात्कथंचिज्जीवंतीति भावः॥६॥ संदे

तामन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः। ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम्॥४॥ मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः। स्मरंत्योंऽग विमुह्यंति विरहौत्कंठ्यविह्वलाः॥५॥ धारयंत्यतिकृच्छ्रेण प्रायः प्राणान्कथंचन। प्रत्यागमनसंदेशैर्बल्लव्यो मे मदात्मिकाः॥६॥ श्रीशुक उवाच॥ इत्युक्त उद्धवो राजन्संदेशं भर्तुरादृतः। आदाय रथमारुह्य प्रययौ नंदगोकुलम्॥७॥ प्राप्तो नंदव्रजं श्रीमान्निम्लोचति विभावसौ। छन्नयानः प्रविशतां पशूनां खुररेणुभिः॥८॥ वासितार्थेऽभियुध्यद्भिर्नादितं शुष्मिभिर्वृषैः। धावंतीभिश्च वास्राभिरूधोभारैः स्ववत्सकान्॥९॥ इतस्ततो विलंघद्भिर्गोवत्सैर्मंडितं सितैः। गोदोहशब्दाभिरवैर्वेणूनां निःस्वनेन च॥१०॥ गायंतीभिश्च कर्माणि शुभानि बलकृष्णयोः। स्वलंकृताभिर्गोपीभिर्गोपैश्च सुविराजितम्॥११॥ अग्न्यर्कातिथिगोविप्रपितृदेवार्चनान्वितैः। धूपदीपैश्च माल्यैश्च गोपावासैर्मनोरमम्॥१२॥ सर्वतः पुष्पितवनं द्विजालिकुलनादितम्। हंसकारंडवाकीर्णैः पद्मखंडैश्च मंडितम्॥१३॥ तमागतं समागम्य कृष्णस्यानुचरं प्रियम्। नंदः प्रीतः परिष्वज्य वासुदेवधियार्चयत्॥१४॥ भोजितं परमान्नेन संविष्टं कशिपौ सुखम्। गतश्रमं पर्यपृच्छत्पादसंवाहनादिभिः॥१५॥ कच्चिदंग महाभाग सखा नः शूरनंदनः। आस्ते कुशल्यपत्याद्यैर्युक्तो मुक्तः सुहृद्वृतः॥१६॥ दिष्ट्या कंसो हतः पापः सानुगः स्वेन पाप्मना। साधूनां धर्मशीलानां यदूनां द्वेष्टि यः सदा॥१७॥

१ शं भवतीनां वियोगो मे न हि सर्वात्मना क्वचिदित्यादिकम्॥७॥ निम्लोचति अस्तं गच्छति सति छन्नं यानं यस्येति तदा गोपीभिरज्ञातत्वेन नंदसंगं लब्धवानिति सूचयति॥८॥ व्रजं वर्णयति पंचभिः वासितार्थे इत्यादिभिः वासिताः पुष्पवत्यो गावस्तन्निमित्तमभितो युध्यद्भिः शुष्मिभिर्मत्तैः वृषैर्नादितं वास्राभिर्धेनुभिः स्ववत्सकान्प्रति॥९॥ विलंघद्भिः उत्पतद्भिः गोदोहशब्दैः सह अभि

गावोगाः गिरिंगोवर्द्धनम्॥१८॥अप्यायास्यति आगमिष्यति किम्॥१९॥श्रीकृष्णोपकारस्मरणादिभिरनुपमानंदेनाभिभूयमान आह दावाग्नेरित्या-
दिना वातात् वर्षाच्चेति वृषात्सर्पाच्चेति अन्येभ्यश्च दुरतिक्रमेभ्यो मृत्युभ्यः कृष्णेन रक्षिताः स्म॥२०॥किंच स्मरतामिति लीलया अपाङ्गेन निरीक्षितं
अङ्ग हे उद्धव॥२१॥न केवलं शिथिला एव किन्तु शनैरुपरमंतीत्याह सरितश्च शैलाश्च वनोद्देशाश्च तान् आक्रीडान् क्रीडास्थानानि॥२२॥सुराणाम-
र्थाय महद्दंभीरं गर्गस्य वचनं यथा॥२३॥न केवलं तद्वचनानुसारेणैव व्यवहारसंवादादपीत्याह कंसमिति॥२४॥इभराट् यष्टिमिव तालत्रयप्रमाणं धनु

अपि स्मरति नः कृष्णो मातरं सुहृदः सखीन्। गोपान्व्रजं चात्मनाथं गावो वृंदावनं गिरिम्॥१८॥अप्यायास्यति गोविंदः स्वजना-
न्सकृदीक्षितुम्। तर्हि द्रक्ष्याम तद्वक्त्रं सुनसं सुस्मितेक्षणम्॥१९॥दावाग्नेर्वातवर्षाच्च वृषसर्पाच्च रक्षिताः। दुरत्ययेभ्यो मृ-
त्युभ्यः कृष्णेन सुमहात्मना॥२०॥स्मरतां कृष्णवीर्याणि लीलाऽपांगनिरीक्षितम्। हसितं भाषितं चांग सर्वा नः शिथिलाः क्रि-
याः॥२१॥सरिच्छैलवनोद्देशान्मुकुंदपदभूषितान्। आक्रीडानीक्षमाणानां मनो याति तदात्मताम्॥२२॥मन्ये कृष्णं च रामं
च प्राप्ताविह सुरोत्तमौ। सुराणां महदर्थाय गर्गस्य वचनं यथा॥२३॥कंसं नागायुतप्राणं मल्लौ गजपतिं तथा। अवधिष्टां लीलयै-
व पशूनिव मृगाधिपः॥२४॥तालत्रयं महासारं धनुर्यष्टिमिवेभराट्। बभञ्जैकेन हस्तेन सप्ताहमदधाद्गिरिम्॥२५॥प्रलंबो धे-
नुकारिष्टस्तृणावर्तो बकादयः। सुरासुरजितो दैत्या हता येनेह लीलया॥२६॥श्रीशुक उवाच॥इति संस्मृत्य संस्मृत्य नंदः कृष्णानु-
रक्तधीः। अत्युत्कंठोऽभवत्तूष्णीं प्रेमप्रसरविह्वलः॥२७॥यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च। शृण्वंत्यश्रूण्यवास्राक्षीत्स्ने-
हस्नुतपयोधरा॥२८॥तयोरित्थं भगवति कृष्णे नंदयशोदयोः। वीक्ष्यानुरागं परमं नंदमाहोद्धवो मुदा॥२९॥उद्धव उवाच॥युवां श्ला-
घ्यतमौ नूनं देहिनामिह मानद। नारायणेऽखिलगुरौ यत्कृता मतिरीदृशी॥३०॥एतौ हि विश्वस्य च बीजयोनी रामो मुकुंदः पुरुषः
प्रधानम्। अन्वीय भूतेषु विलक्षणस्य ज्ञानस्य चेशात इमौ पुराणौ॥३१॥यस्मिन्जनः प्राणवियोगकाले क्षणं समाविश्य मनो विशु-
द्धम्॥

र्बभंज॥२५॥२६॥२७॥२८॥२९॥३०॥अखिलगुरुत्वमेव जनकत्वेन नियंतृत्वेन चाह एताविति रामो मुकुंदश्चेश्वरौ विश्वस्य बीजयोनी नि-
मित्तोपादाने न तु पुरुषप्रधानयोर्बीजयोनित्वं प्रसिद्धमत आह पुरुषः प्रधानं इति पुरुषोंऽशः प्रधानं शक्तिः अतः प्रधानपुरुषावप्येतावेवेत्यर्थः एवं ज-
नकत्वमुक्तम् किंच अन्वीय भूतेष्वनुप्रविश्य भूतानां च तदुपहितस्य विलक्षणस्य नानाभेदस्य ज्ञानस्य जीवस्य च ईशाते ईश्वरौ नियंतारौ भवतः
कुतः पुराणौ अनादी अनादित्वात् कारणत्वं ततश्च नियंतृत्वमित्यर्थः॥३१॥ननु सृष्ट्यादिकर्मावेशान्मनुष्यादिजन्मदर्शनाच्च तस्यान्येभ्यः॥

कोविशेषइत्याशंक्याह यस्मिन्निति द्वाभ्यां कर्माशयं कर्मवासनां निर्हृत्य त्यक्त्वा ब्रह्ममयः स्वरूपज्ञानवान् अर्कवर्णः शुद्धसत्त्वमूर्त्तिः सम्यगङ्गतिं तत्त्वं यातिं॥३२॥ अखिलस्यात्मा च हेतुश्च तस्मिन्कारणेन मनुष्याकृतौ महात्मन्महात्मनि परिपूर्णे भवंतो भक्तिं कुरुतः अतः कृतकृत्याविंत्यर्थः॥३३॥ प्रस्तुतमाह आगमिष्यतीति पित्रोर्युवयोः। यातयूयं व्रजं तात वयं च स्नेहदुःखितान्। ज्ञातीन्वो द्रष्टुमेष्यामो विधाय सुहृदां सुखमिति। यदाह कृष्णः तत्तत्संकरिष्यतीति॥३४॥३५॥ कालविलंबनमसहमानौ मत्वाहमाखिद्यतमिति हे महाभागौ अन्तिके इदानीमेव समीपे वा कुतइत्यत आह अन्तर्हृदीति न हि सर्वैः किमिति न दृश्यते तत्राह ज्योतिरिवैधसीतितत्यथामथनं विना न दृश्यते तथा भक्तिं विना कृष्णोऽपीति भावः॥३६॥ अहो आस्तामेतस्य लिहागमनं स्वाति प्रियान्मित्रादीन् विहाय न संगच्छ तइतिमन्येत तत्राह न ह्यस्येति अस्य प्रियादयो न हि संतितत्र हेतुः अमानिनः समानस्येति च॥३७॥३८॥ सोपिजन्म

निर्हृत्य कर्माशयमाशु याति परां गतिं ब्रह्ममयोऽर्कवर्णः॥३२॥ तस्मिन्भवंतावखिलात्महेतौ नारायणे कारणमर्त्यमूर्तौ। भावं विधत्तां नितरां महात्मन्किं वाऽवशिष्टं युवयोः सुकृत्यम्॥३३॥ आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः। प्रियं विधास्यते पित्रोर्भगवान्सात्वतां पतिः॥३४॥ हत्वा कंसं रंगमध्ये प्रतीपं सर्वसात्वताम्। यदाह वः समागत्य कृष्णस्तत्करोतिलतत्॥३५॥ माखिद्यतं महाभागौ द्रक्ष्यथः कृष्णमंतिके। अंतर्हृदि स भूतानामास्ते ज्योतिरिवैधसि॥३६॥ न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियो वाऽस्त्यमानिनः। नोत्तमो नाधमो वापि समानस्याऽसमोपि वा॥३७॥ न माता न पिता तस्य न भार्या न सुतादयः। नात्मीयो न परश्चापि न देहो जन्म एव च॥३८॥ न चास्य कर्म वा लोके सदसन्मिश्रयोनिषु। क्रीडार्थं सोऽपि साधूनां परित्राणाय कल्पते॥३९॥ सत्त्वं रजस्तम इति भजते निर्गुणो गुणान्। क्रीडन्नतीतोऽत्र गुणैः सृजत्यवति हंत्यजः॥४०॥ यथा भ्रमरिकादृष्ट्या भ्राम्यतीव महीयते। चित्ते कर्तरि तत्रात्मा कर्त्तेवाहंधियास्मृतः॥४१॥ युवयोरेव नैवायमात्मजो भगवान्हरिः। सर्वेषामात्मजो ह्यात्मा पिता माता स ईश्वरः॥४२॥ दृष्टं श्रुतं भूतभवद्भविष्यत्स्थास्नुश्चरिष्णुर्महदल्पकं च। विनाऽच्युताद्वस्तुतरां न वाच्यं स एव सर्वं परमार्थभूतः॥४३॥

कर्मादिरहितोपि क्रीडाप्रयोजनः सन्साधूनां परिपालनाय सदसन्मिश्रयोनिषु सात्विकराजसतामसयोनिषु मत्स्यादेवादिमत्स्यादिनृसिंहादियोनिषु कल्पते आविर्भवतीत्यर्थः॥३९॥ ननु जन्मकर्मादिरहितस्य कुतएतदित्यत आह सत्त्वमिति क्रीडामतीतोऽपि क्रीडन् तत्यापि मायागुणैर्घटत इत्यर्थः॥४०॥ अत्राविद्योपाधेर्जीवस्य कर्तृत्वं दृष्टांतीकर्वेनतस्यावि ... भ्रमरिका परिभ्रमणं तयोपलक्षितया दृष्ट्या भूरपि भ्राम्यतीव यथा प्रतीयते एवं चित्ते कर्त्तरि सति तत्र [illegible]

[illegible] ...लोकर्त्ता ... इति॥४१॥ किं च युवयोरेव ... [illegible]



दीपानिरूप्य प्रज्वाल्य वास्तून्देहल्यादीन्॥४४॥ मथिभिः ... [illegible]

दीपान्निरूप्य प्रज्वाल्य वास्तून् देहल्यादीन् ॥ ४४ ॥ मणिभिः कंकणादिसुस्थितैः [illegible] अर्थकर्षसु भुजेषु कंकणानां स्रजो यासां ताश्चलंतो नितंबास्तनाहाराश्च यासां ताः कुण्डलैस्त्विष्यंतः स्फुरंतः कपोला यासां ताः अरुणानि कुंकुमानि येषु तानि आननानि यासां ताः एवं ताश्च ताश्च ॥ ४५ ॥ ४६ ॥ ४७ ॥ तदा व्रजौकसो गोप्यः सक्रोधमाहुः अक्रूर इति अर्थं साधितवानित्यर्थं साधकः तदाहुः येननीत इति ॥ ४८ ॥ कंसं घातयित्वा पुनः किमर्थमागत इत्याशंक्य स्वयमेव कारणं संभावयंति किमिति तदा साधितेन कार्येण प्रीतस्य तुष्टस्य भर्तुः पाठांतरे प्रेतस्य कंसस्य निष्कृतिमौर्ध्वदे

एवं निशा साब्रुवतोर्व्यतीता नंदस्य कृष्णानुचरस्य राजन् । गोप्यः समुत्थाय निरूप्य दीपान् वास्तून् समभ्यर्च्य दधीन्यमंथन् ॥ ४४ ॥ ता दीपदीप्तैर्मणिभिर्विरेजू रज्जूर्विकर्षद्भुजकंकणस्रजः । चलन्नितंबस्तनहारकुंडलत्विष्यत्कपोलारुणकुंकुमाननाः ॥ ४५ ॥ उद्गायतीनामरविंदलोचनं व्रजांगनानां दिवमस्पृशद्ध्वनिः । दध्नश्च निर्मंथनशब्दमिश्रितो निरस्यते येन दिशाममंगलम् ॥ ४६ ॥ भगवत्युदिते सूर्ये नंदद्वारि व्रजौकसः । दृष्ट्वा रथं शातकौंभं कस्यायमिति चाब्रुवन् ॥ ४७ ॥ अक्रूर आगतः किं वा यः कंसस्यार्थसाधकः । येन नीतो मधुपुरीं कृष्णः कमललोचनः ॥ ४८ ॥ किं साधयिष्यत्यस्माभिर्भर्तुः प्रीतस्य निष्कृतिम् । इति स्त्रीणां वदंतीनामुद्धवोऽगात्कृताह्निकः ॥ ४९ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे नंदशोकापनयनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ श्रीशुक उवाच ॥ तं वीक्ष्य कृष्णानुचरं व्रजस्त्रियः प्रलंबबाहुं नवकंजलोचनम् । पीतांबरं पुष्करमालिनं लसन्मुखारविंदं परिमृष्टकुंडलम् ॥ १ ॥ शुचिस्मिताः कोऽयमपीच्यदर्शनः कुतश्च कस्याच्युतवेषभूषणः ॥ इति स्म सर्वाः परिवव्रुरुत्सुकास्तमुत्तमश्लोकपदांबुजाश्रयम् ॥ २ ॥ तं प्रश्रयेणावनताः सुसत्कृतं सव्रीडहासेक्षणसूनृतादिभिः । रहस्यपृच्छन्नुपविष्टमासने विज्ञाय संदेशहरं रमापतेः ॥ ३ ॥ जानीमस्त्वां यदुपतेः पार्षदं समुपागतम् । भर्त्रेह प्रेषितः पित्रोर्भवान् प्रियचिकीर्षया ॥ ४ ॥ अन्यथा गोव्रजे तस्य स्मरणीयं न चक्ष्महे । स्नेहानुबंधो बंधूनां मुनेरपि सुदुस्त्यजः ॥ ५ ॥

हि किं अस्माभिः कृत्वा साधयिष्यते किं अस्मन् मांसैः पिंडान् कृत्वा दास्यतीत्यर्थः इति एवं वदंतीनां स्त्रीणां ततस्तस्मिन्नवसरे कृताह्निकः उद्धव आगात् आगत इति ॥ ४९ ॥ इति दशमे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ सप्तचत्वारिंशके यत्कृष्णादेशेन गोपिकाः प्रबोधयिलोद्धवस्तलमत्र ज्ञाप्यागमत्पुरीम् ॥ १ ॥ १ ॥ अपीच्यं सुंदरं दर्शनं यस्य सः अच्युतस्येव वेषो भूषणानि च यस्य सः कोऽयं कुतो वा कस्य चेति वदंत्यस्तं परिवव्रुः ॥ २ ॥ ३ ॥ पार्षदं सेवकम् ॥ ४ ॥ पित्रोः प्रियचिकीर्षये त्वत्र हेतुः स्नेहानुबंध इति ॥ ५ ॥

अन्यथा गोव्रजे तस्येत्यत्र हेतुः अन्येष्विति अर्थे कृता कार्यनिमित्ता विडंबनं अनुकरणमात्रं न तु तात्त्विकी मैत्री पुंभिरिति दृष्टांतः॥ ६॥ अस्यैवान्यार्थेनि दर्शनैः प्रपंचः निःस्वमित्यादिना दत्तादक्षिणायेन तं याज्यं यजमानम्॥ ७॥ पक्षिणो विगत फलं वृक्षं रतां अनुरक्तां मत्तां त्रामित्यर्थः॥ ८॥ त्यक्तलौकिका त्यक्तलोकव्यवहाराः॥ ९॥ प्रियस्य कर्माणि गायंत्यः तथा तस्य बाल्यकैशोरयोर्यानि कर्माणि तानि संस्मृत्य संस्मृत्य गतह्रियः सत्यो रुरुदुः स्वश्रुतमप्यच्छन्नि तिपूर्वक्रियये वसंबंधः॥ १०॥ प्रियेण श्रीकृष्णेन मां प्रसादयितुं प्रस्थापितोऽयं दूत इति कल्पयित्वाऽब्रवीत् यद्वा तस्मिन्नपि उद्धवे प्रियप्रस्थापितं दूत मिति दूतदृष्टिं कृत्वा मधुकरापदेशेनोद्धवमेवाब्रवीदित्यर्थः॥ ११॥ हे मधुप कितवस्य धूर्तस्य बंधो नोऽस्माकं मंघ्रिं मा स्पृश मा मां नमस्कारेण प्रार्थयस्वे त्यर्थः तत् किमित्यपेक्षायां कृष्णवर्णस्य तस्य श्मश्रूणां लोहितत्वे कारणमुत्प्रेक्षमाणा हसपत्न्याः कुचाभ्यां विलुलितासंमर्दिता या कृष्णस्य वनमाला अत

अन्येष्वर्थकृता मैत्री यावदर्थविडंबनम्। पुंभिः स्त्रीषु कृता यद्वत्सुमनःस्विव षट्पदैः॥ ६॥ निःस्वं त्यजंति गणिका अकल्पं नृपतिं प्रजाः। अधीतविद्या आचार्यमृत्विजो दत्तदक्षिणम्॥ ७॥ खगा वीतफलं वृक्षं भुक्त्वा चातिथयो गृहम्। दग्धं मृगास्तथारण्यं जारो भुक्त्वा रतां स्त्रियम्॥ ८॥ इति गोप्यो हि गोविंदे गतवाक्कायमानसाः। कृष्णदूते व्रजं याते उद्धवे त्यक्तलौकिकाः॥ ९॥ गायंत्यः प्रियकर्माणि रुदंत्यश्च गतह्रियः। तस्य संस्मृत्य संस्मृत्य यानि कैशोरबाल्ययोः॥ १०॥ काचिन्मधुकरं दृष्ट्वा ध्यायंती कृष्णसंगमम्। प्रियप्रस्थापितं दूतं कल्पयित्वेदमब्रवीत्॥ ११॥ गोप्युवाच॥ मधुप कितवबंधो मा स्पृशांघ्रिं सपत्न्याः कुचविलुलितमाला कुंकुमश्मश्रुभिर्नः। वहतु मधुपतिस्तन्मानिनीनां प्रसादं यदुसदसि विडंब्यं यस्य दूतस्त्वमीदृक्॥ १२॥ सकृदधरसुधां स्वां मोहिनीं पाययित्वा सुमनस इव सद्यस्तत्यजेऽस्मान् भवादृक्। परिचरति कथं तत्पादपद्मं तु पद्मा ह्यपि बत हृतचेता उत्तम श्लोकजल्पैः॥ १३॥ किमिह बहु षडंघ्रे गायसि त्वं यदूनामधिपतिमगृहाणामग्रतो नः पुराणम्। विजयसखसखीनां गीयतां तत्प्रसंगः क्षपितकुचरुजस्ते कल्पयंतीष्टमिष्टाः॥ १४॥

॥ एव तस्याः कुंकुमं येषु तैः श्मश्रुभिः उपलक्षितः किं तु तासामेव मानिनीनां प्रसा दं मधुपतिर्वहतु किमस्मत्प्रसादेनेन तस्य यदुसदसि विडंब्यं उपहासास्पदं कृतः यस्य दूतस्त्वमीदृक् ईदृशः॥ १२॥ ननु किमित्येवं तमवजानी थ किं वस्तेनापकृतं अत आह सकृदिति भवादृक् त्वादृशो दुर्मनाः सुमनसः कुसुमानि यथा त्यजति तद्वत् अहो बत अविज्ञस्य तस्य पादपद्मं श्रीः कथं सेव ते विदितं मयेत्याह अपीति बत इति खेदे उत्तमश्लोकस्य जल्पैर्मिथ्याकथाभिः प्रलापैः प्रायो हृतचेताः वयं तु न लक्ष्मीवदविचक्षणा इति भावः॥ १३॥ झंकारा [illegible] बहुधा कुर्वंतं भ्रमरं [illegible] श्रीकृष्णं गायतीति मत्वाह किमिहेति पुराणं पुरातनं बहुशोऽनुभूतं विजयः सखा यस्य तस्य श्रीकृष्णस्य संप्रति याः सख्यः [illegible] इति [illegible] १४॥

भोमात मैवंवोचस्त्वामनुस्मृत्यानंगविक्लवः त्वां प्रसादयितुं मामादिष्टवानइत्यत आह दिवीति दिवि भुवि रसातले च याः स्त्रियः स्युः ताः कानामदुरापानकाश्चनतदित्यव्ययं तस्येत्यर्थः कपटेन रुचिरं हासेन भ्रूविजृंभायस्यतस्य हे कपट इतिवा किंच यस्य चरणरजः श्रीः सेवते तत्र वयं का अपिचयद्यप्येवं तथापि कृपणपक्षे कृपणानुकंपिनि त्वयि उत्तमश्लोकशब्दो भवतीति तथा कथनीयं लयेति भावः ॥ १५ ॥ पादमूले प्रविशंतं क्षमापयिष्यंतमिवमत्वाह शिरसि न्यस्तं पादं विसृज तथाप्यमुं चंतमाह वेद्मीति मुकुंदादभ्येत्य ततः शिक्षितेत्यर्थः दौत्यैर्दूतकर्मभिः चाटुकारैः प्रियोक्तिरचनादिभिः अनुनयविदुषः प्रार्थनाचतुरस्य ते तव सर्वमहं वेद्मि मुकुंदवत्त्वमप्यविश्वसनीय इतिभावः ननु तेन किमपराद्धं तत्राह स्वकृत इति स्वकृते कृष्णकृते तदर्थमेव विसृष्टाः अपत्यपत्यन्यलोकाः अपत्यानि पतयश्चेतीहलोकाः अन्यलोका धर्मसाध्याश्च याभिस्तासु अकृतचेताः असंयतचित्तः यो व्यसृजत् अस्मिन् किं नु संधातव्यमिति ॥ १६ ॥ किंच कृष्णस्य पूर्वाणि कर्माण्यनुसंदधाना बिभेम्यहमस्मादित्याह मृगयुरिवेति मृगयुर्लुब्धक इव यः कपीन्द्रं वालिनं विव्यधे अविध्यत् लुब्धधर्मा क्रौर्यवान् अलुब्धधर्मेति वा लुब्धको हि तन्मांसमत्तुकामो विध्यति अयं तु न तथा अतो वृथा कठिन इत्यर्थः तथा स्त्रियं शूर्पणखां स्त्रीजितः सीतापदि विभुवि च रसायां काः स्त्रियस्तद्दुरापाः कपटरुचिरहासभ्रूविजृंभस्य याः स्युः। चरणरज उपास्ते यस्य भूतिर्वयं का अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः ॥ १५ ॥ विसृज शिरसि पादं वेद्म्यहं चाटुकारैरनुनयविदुषस्तेऽभ्येत्य दौत्यैर्मुकुंदात्। स्वकृत इह विसृष्टापत्यपत्यन्यलोका व्यसृजदकृतचेताः किं नु संधेयमस्मिन् ॥ १६ ॥ मृगयुरिव कपींद्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम्। बलिमपि बलिमत्त्वावेष्टयद्ध्वांक्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः ॥ १७ ॥ यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वंद्वधर्मा विनष्टाः। सपदि गृहकुटुंबं दीनमुत्सृज्य दीना बहव इह विहंगा भिक्षुचर्यां चरंति ॥ १८ ॥

रतः कामं स्वयानं प्राप्तिसाधनं यस्याः तां विरूपां छिन्नकर्णनासिकामकरोत् दाशरथिरूपेण तथा बलिमपि तद्दत्तं बलिं पूजामत्त्वा भक्षयित्वा ध्वांक्षवत् काकवत् अवेष्टयत् बबंध वामनरूपेण बलिमत्त्वाऽधोऽक्षिपदिष्टपादिति पाठे बलिं पूजां गृहीत्वा विष्टपात् स्वर्गादधोऽक्षिपदित्यर्थः ततस्मादसितस्य कृष्णस्य सख्यैरलम् एवं चेत् किमिति तन्निसंगाय यतत्र आह दुस्त्यजस्तु तस्य कथारूपोऽर्थ इति ॥ १७ ॥ अपि च जानीम एवं तत्कथा पित्रिवर्गलतामूलोन्मूलनीति तथापि न त्यक्तुं शक्नुमः किंकुर्म इत्याह यदनुचरितेति यस्यानुचरितमेव लीला तदेव कर्णपीयूषं तस्य विप्रुट्कणिका तस्याः सकृददनं सेवनं तेन विधूता निरस्ता द्वंद्वधर्मा रागादयो येषां ते अत एव विनष्टाः असत्तुल्याः दीना इव इव गृहकुटुंबं विहाय दीना भोगहीना विहंगा अपि भिक्षुचर्यां प्राणवृत्तिमात्रं चरंति अतस्त्यक्तुं न शक्नुम इति निंदापरत्वे यं तावदर्थो लोऽर्थः दुस्त्यजत्वे पिपारमार्थिको यमर्थः विधूतद्वंद्वधर्मा इत्यत्र समासः पूर्ववत्तस्ते च ते अविनष्टाश्चेति समासः इतरे पुनर्द्वंद्वधर्मिणो विनष्टा एव सपदि तत्क्षणमेव दीनं तु कुटुंबं गृहसहितं कुटुंबं विहाय दीना इव अकिंचना धीरा इति

वोविहंगाहंसाइवसारासारविवेकचतुराःभिक्षुचर्यापारमहंस्यंचरंतितस्मादेवंपरमपुरुषार्थरूपलाद्दुस्त्यजएवतत्कथार्थइति॥१८॥ननुकिमेवंब्रूषेपूर्वंलयैवसाकंरहसिकिमेवंनावोचदितिअतआहवयमितिहेउपमंत्रिन्दूतआस्तामियंवार्त्तायतःकुलिकस्यमृगयोःरुतंगीतंअज्ञायथाऋतंसत्यमिवश्रद्दधानाःकृष्णस्यहरिणस्यवध्वोभार्याःहरिण्यःशरैःक्षताःसत्योरुचोददृशुःएवंजिह्मस्यकुटिलस्यतस्यव्याहृतंऋतमिवश्रद्दधानाःस्पृहयंत्योवयंअसकृदेतद्ददृशिमकिंततृतस्यनखैःस्पर्शस्तेनतीव्रःस्मरःतेनरुजःपीडाःतस्मादन्यावार्त्ताभण्यतांकथ्यतामिति॥१९॥पराङ्गलापुनरागतंप्रत्याहप्रियसखेतिहेप्रियस्यसखेप्रेयसाकृष्णेनपुनःप्रेषितःकिंलमागतोसिहेअंगहेदूतमेमाननीयःपूज्योसिअतोभवान्

वयमृतमिवजिह्मव्याहृतंश्रद्दधानाःकुलिकरुतमिवाज्ञाःकृष्णवध्वोहरिण्यः।ददृशुरसकृदेतत्तन्नखस्पर्शतीव्रस्मररुजउपमंत्रिन्भण्यतामन्यवार्त्ता॥१९॥प्रियसखपुनरागाःप्रेयसाप्रेषितःकिंवरयकिमनुरुंधेमाननीयोऽसिमेङ्ग॥नयसिकथमिहास्मान्दुस्त्यजद्वन्द्वपार्श्वंसततमुरसिसौम्यश्रीर्वधूःसाकमास्ते॥२०॥अपिबतमधुपुर्यामार्यपुत्रोऽधुनास्तेस्मरतिसपितृगेहान्सौम्यबंधूंश्चगोपान्।क्वचिदपिसकथानःकिंकरीणांगृणीतेभुजमगरुसुगंधंमूर्ध्न्यधास्यत्कदानु॥२१॥श्रीशुकउवाच॥अथोद्धवोनिशम्यैवंकृष्णदर्शनलालसाः।सांत्वयन्प्रियसंदेशैर्गोपीरिदमभाषत॥२२॥उद्धवउवाच॥अहोयूयंस्मपूर्णार्थाभवत्योलोकपूजिताः।वासुदेवेभगवतियासामित्यर्पितंमनः॥२३॥दानव्रततपोहोमजपस्वाध्यायसंयमैः।श्रेयोभिर्विविधैश्चान्यैःकृष्णेभक्तिर्हिसाध्यते॥२४॥भगवत्युत्तमश्लोकेभवतीभिरनुत्तमा।भक्तिःप्रवर्तितादिष्ट्यामुनीनामपिदुर्लभा॥२५॥दिष्ट्यापुत्रान्पतीन्देहान्स्वजनान्भवनानिच।हित्वाऽवृणीतयूयंयत्कृष्णाख्यंपुरुषंपरम्॥२६॥सर्वात्मभावोऽधिकृतोभवतीनामधोक्षजे।विरहेणमहाभागामहान्मेऽनुग्रहःकृतः॥२७॥

किमनुरुन्धेप्राप्तुमिच्छतीत्यर्थःतद्वरयवृणीष्वसंमानितंप्रत्याहनयसीतिइहसतीःअस्मान्दुस्त्यजंद्वंद्वंमिथुनीभावोयस्यतस्यपार्श्वेसमीपंकथंनयसिनेष्यसितथाहिहेसौम्यश्रीर्नामवधूःसाकंसहैववसततमास्तेतत्रापुरसिवक्षस्येव॥२०॥तेनसंमंत्रितासतीब्रूतेअपिबतेतिबतहर्षेहेसौम्यगुरुकुलादागत्यआर्यपुत्रःश्रीकृष्णःअधुनाकिंमधुपुर्यांवर्ततेकदाचिदपिनोऽस्माकंवार्त्ताःकिंब्रूतेअगरुवत्सुगंधंभुजंनोमूर्ध्निकदानुधास्यतीति॥२१॥श्रीकृष्णदर्शनोत्सुकागोपीःप्रियसंदेशैःसांत्वयन्प्रथमंतावदिदमभाषत॥२२॥तदाहषड्भिःअहोइतिसम्यक्तंयूयंपूर्णार्थाःकृतार्थाः॥२३॥श्रेयोभिःश्रेयःसाधनैः॥२४॥अनुत्तमाअतिश्रेष्ठा॥२५॥अवृणीतवृतवत्यः॥२६॥सर्वात्मभावःसर्वात्मभक्तिःअधिकृतःप्राप्तःभगवतोमत्सुखप्रदर्शनेनमेमहाननुग्रहःकृतःइति॥२७॥

भर्तुःकृष्णस्यरहस्करःरहस्यकार्यकर्ता॥२८॥भवतीनां[illegible]वियोगोनास्तिकुतः[illegible]सर्वस्योपादानकारणेनअतएवसर्वेषुमनआदिका
र्येषुअहमनुगतत्वेनस्थितइतिसदृष्टांतमाहयथेतिभूतेषुचराचरेषुमहाभूतानियथावाय्वग्निःवायुसहितोग्निःवायुश्चाग्निश्चेत्यर्थः॥२९॥तथाहंचे
तिमनआदीनिकार्याणिगुणाःकारणंतेषामाश्रयत्वेनानुगतइत्यर्थःननुकारणत्वेचसर्वानुगतत्वेचकार्यकारणभेदःस्यात्अतआहआत्मन्येवेतिननु
नित्यसिद्धस्यकुतःसृष्ट्यादिरूपताअतआहभूतेंद्रियगुणात्मनाबुद्धींद्रियगुणाश्रयइतिवापाठःतद्रूपेणआश्रयइति॥३०॥ननुनिर्विकारस्यकुतस्तद्रू
पत्वेतितत्राहआत्ममायानुभावेनेति॥३१॥नन्वात्मनोभूतादिरूपत्वेतद्दोषप्रसंगःस्यात्तत्राहआत्मेतिआत्मातुशुद्धःकुतोऽगुणान्वयःनगुणेषुअन्वे
तीतितथातत्कुतःव्यतिरिक्तःतदपिकुतःज्ञानमयःज्ञानस्वरूपःनन्वहमितिप्रत्ययेस्वसंवेद्यमेवात्मनोनानाऽवस्थावत्त्वमितिकुतःशुद्धतेतितत्राह

श्रूयतांप्रियसंदेशोभवतीनांसुखावहः।यमादायागतोभद्राअहंभर्तूरहस्करः॥२८॥श्रीभगवानुवाच॥भवतीनांवियोगोमेन
हिसर्वात्मनाक्वचित्।यथाभूतानिभूतेषुखंवाय्वग्निर्जलंमही॥२९॥तथाहंचमनःप्राणभूतेंद्रियगुणात्मना।आत्मन्येवात्म
नात्मानंसृजेहन्म्यनुपालये॥३०॥आत्ममायाऽनुभावेनभूतेंद्रियगुणात्मना॥३१॥आत्माज्ञानमयःशुद्धोव्यतिरिक्तोऽगुणान्व
यः।सुषुप्तिस्वप्नजाग्रद्भिर्मायावृत्तिभिरीयते॥३२॥येनेंद्रियार्थान्ध्यायेतमृषास्वप्नवदुत्थितः।तन्निरुंध्यादिंद्रियाणिविनिद्रः
प्रत्यपद्यत॥३३॥एतदंतःसमाम्नायोयोगःसांख्यंमनीषिणाम्।त्यागस्तपोदमःसत्यंसमुद्रांताइवापगाः॥३४॥यत्त्वहंभवतीनां
वैदूरेवर्तेप्रियोदृशाम्।मनसःसन्निकर्षार्थंमदनुध्यानकाम्यया॥३५॥यथादूरचरेप्रेष्ठेमनआविश्यवर्तते।स्त्रीणांचनतथाचेतः
सन्निकृष्टेऽक्षिगोचरे॥३६॥मय्यावेश्यमनःकृत्स्नंविमुक्ताशेषवृत्तियत्।अनुस्मरंत्योमांनित्यमचिरान्मामुपैष्यथ॥३७॥ सुषुप्तीतिमा

याकार्यैर्मनोवृत्तिभिःविश्वतैजसप्राज्ञरूपेणप्रतीयतेनस्वतइत्यर्थः॥३२॥कुतःमनोनिरोधेनतदभावादितिव्यतिरेकंदर्शयितुंमनोनिरोधंविधत्तेयेने
तिउत्थितःप्रमान्यथामिथ्याभूतमेवस्वप्नंध्यायतिएवंबाधितानपींद्रियार्थान्शब्दादीन्येनमनसाध्यायेतचिंतयेत्ध्यायंश्चयेनइंद्रियाणिप्रत्यपद्य
तप्रापतन्मनःविनिद्रःअनलसःसन्निरुंध्यात्नियच्छेदिति॥३३॥तावताचकृतार्थाभवतीत्याहएतदंतइतिएषमनोनिरोधःअंतःसमाप्तिःफलंय
स्यसःसमाम्नायोवेदःसतत्रपर्यवस्यतीत्यर्थःयोगोऽष्टांगःसांख्यम्आत्मानात्मविवेकःत्यागःसंन्यासःतपःस्वधर्मःदमःइंद्रियदमनंसत्यंयथार्थभाषणं
मार्गभेदेऽपिएकत्रपर्यवसानेदृष्टांतःसमुद्रांताआपगानद्यइवेति॥३४॥ननुकिमन्यानिवास्मानात्मविद्ययाप्रलोभयसिवयंतुसर्वसुन्दरसकलगुणमाया
लंकृतेनत्वयाविरहंनैवसहामहइतिचेत्तत्राहयत्त्वहमितिदृशांदूरेयद्वर्तेतत्मदनुध्यानार्थंतच्चध्यानंमनसःसन्निकर्षार्थमिति॥३५॥एतदुपपादयति

न्येणपश्चाद्दूरचरइति॥३६॥३७॥

उपेक्ष्यथेतिमाधुर्यमात्रमितिचेदत आह याइतिहेकल्याण्यः स्वभर्तृभिः प्रतिबद्धायावनेक्रीडतामयासह अलब्धक्रीडायाभिस्तास्तदेवमामाआपुःप्रा पुः॥३८॥ तस्यसंदेशेन आगतास्मृतिर्यासांताः प्रथमार्थेद्वितीया॥३९॥ यदूनांअहितः शत्रुःअघकृत् दुःखदः दिष्ट्येत्यानंदेआप्तैःप्राप्तैःहितैर्वासह॥४०॥ अन्याऊचुःकच्चिदितिनोऽस्माकंकरणीयांप्रीतिंकच्चित्पुरयोषितांकरोतिस्निग्धंचतत्सव्रीडहासेनोदारमीक्षणंतेनार्चितःताभिरस्माभिर्वा॥४१॥ अन्याऊचुःकथमितितासांवाक्यैर्विभ्रमैश्चानुपूजितः॥४२॥ पुनरन्याऊचुःकिमनयाचिंतयास्मान् कच्चित्प्रस्तुतेप्रस्तावेस्मरतिकिंग्राम्याःअविदग्धाः ॥४३॥ अन्याऊचुःताःकिमितिकुमुदैःकुंदैःशशांकेनचरम्येवृंदावनेक्वणंतिचरणनूपुराणियस्यांतस्यांरासगोष्ठ्यांअस्माभिःप्रियाभिःईडितामनोज्ञाःकथा

याम याक्रीडताराज्यांवनेऽस्मिन् व्रजआस्थिताः। अलब्धरासाः कल्याण्योमापुर्मद्वीर्यचिंतया॥३८॥ श्रीशुकउवाच॥ एवंप्रियतमा दिष्टमाकर्ण्यव्रजयोषितः। ताऊचुरुद्धवंप्रीतास्तत्संदेशागतस्मृतीः॥३९॥ गोप्यऊचुः॥ दिष्ट्याऽहितोहतःकंसोयदूनांसानुगोऽघ कृत्॥ दिष्ट्याप्तैर्लब्धसर्वार्थैःकुशल्यास्तेऽच्युतोऽधुना॥४०॥ कच्चिद्गदाग्रजःसौम्यकरोतिपुरयोषिताम्। प्रीतिंनःस्निग्धसव्रीड हासोदारेक्षणार्चितः॥४१॥ कथंरतिविशेषज्ञःप्रियश्चवरयोषिताम्। नानुबध्येततद्वाक्यैर्विभ्रमैश्चानुपूजितः॥४२॥ अपिस्म रतिनःसाधोगोविंदःप्रस्तुतेक्वचित्। गोष्ठीमध्येपुरस्त्रीणांग्राम्याःस्वैरकथांतरे॥४३॥ ताःकिंनिशाःस्मरतियासुतदाप्रियाभि र्वृन्दावनेकुमुदकुंदशशांकरम्ये। रेमेक्वणच्चरणनूपुररासगोष्ठ्यामस्माभिरीडितमनोज्ञकथःकदाचित्॥४४॥ अप्येष्यतीहदा शार्हस्तप्ताःस्वकृतयाशुचा। संजीवयन्नुनोगात्रैर्यथेंद्रोवनमंबुदैः॥४५॥ कस्मात्कृष्णइहायातिप्राप्तराज्योहताहितः। नरेन्द्र कन्याउद्वाह्यप्रीतःसर्वसुहृद्वृतः॥४६॥ किमस्माभिर्वनौकोभिरन्याभिर्वामहात्मनः। श्रीपतेराप्तकामस्यक्रियेतार्थःकृतात्म नः॥४७॥ परंसौख्यंहिनैराश्यंस्वैरिण्यप्याहपिङ्गला। तज्जानतीनांनःकृष्णेतथाप्याशादुरत्यया॥४८॥ कउत्सहेतसंत्यक्तुमु त्तमश्लोकसंविदम्। अनिच्छतोऽपियस्यश्रीरंगान्नच्यवतेक्वचित्॥४९॥

(यस्यसःतदायासुनिशासुरेमेताःकदाचित्किंनुस्मरतिवानवे ति॥४४॥ स्वनिमित्तेनशोकेनतप्ताःनःअस्मान् गात्रैःकरस्पर्शादिभिःसंजीवयन् किंनुइहएष्यतीति॥४५॥ अन्याऊचुःकस्मादितिअनन्यगतित्वेनपू र्वमत्रावसत्संप्रतिमहदैश्वर्यंप्राप्तःकस्मादिहागमिष्यतीति॥४६॥ अन्यास्तुपरमार्थमूचुःकिमस्माभिरितिवनचरीभिरस्माभिःअन्याभिर्वाराजकन्या भिर्महात्मनोधीरस्यकिंचश्रीपतेःतदप्यास्तांस्वतएवाप्तकामस्यअतएवकृतात्मनःपूर्णस्यकिंकोऽप्यर्थःक्रियेतनकश्चिदिति॥४७॥ यतोऽघटमानायाक [illegible]॥४८॥ [illegible]

किं च तद्धि स्मृतौ न च वा तद्दुःखमस्ति सा ऽपि नाम्ना कं भवतीत्याह सरिच्छैलेति त्रिभिः आचरिता सेविता ॥५०॥५१॥ हे उद्धव कथं विस्मरामेति ॥५२॥५३॥ श्रीकृष्णमधोक्षजं ज्ञात्वा तं च स्वात्मानं ज्ञात्वा ॥५४॥ विनुदन् अपनयन् ॥५५॥५६॥ सरिद्वनगिरिद्रोण्यादिषु प्रत्येकं श्रीकृष्णलीलासंप्रश्नादिभिः संस्मारयन् रेमे ॥५७॥ कृष्णावेशेनात्मनां मनसो विकुर्वं वैकुर्व्यं ताः गोपीर्नमस्यन् नमस्करिष्यन् ॥५८॥ उत्तमश्लोकस्यात्मनो गोपस्त्रीनमस्कृतिर्व्याख्यानं भवतीति दर्शयितुं तासां महत्त्वं पंचभिर्जगौ उवाच एता इति एताः परं केवलं तनुभृतः सफलजन्मानः रूढभावाः परमप्रेमवत्यः यदिति यं रूढं भावं भवभियो मुमुक्षव मुनयः मुक्ता अपि वांछंति वयं च भक्ता अपि अतः अनंतस्य कथासु रसो रागो यस्य तस्य ब्रह्मजन्मभिर्विप्रसंबंधिभिः शौक्लसावित्रयाज्ञिकैस्त्रिभिः किं को ऽतिशयः यत्र त

सरिच्छैलवनोद्देशा गावो वेणुरवा इमे ॥ संकर्षणसहायेन कृष्णेनाचरिताः प्रभो ॥५०॥ पुनः पुनः स्मारयंति नंदगोपसुतं बत ॥ श्रीनिकेतैस्तत्पदकैर्विस्मर्तुं नैव शक्नुमः ॥५१॥ गत्या ललितयोदारहासलीलावलोकनैः ॥ माध्व्या गिरा हृतधियः कथं तं विस्मरामहे ॥५२॥ हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ॥ मग्नमुद्धर गोविंद गोकुलं वृजिनार्णवे ॥५३॥ श्रीशुक उवाच ॥ ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वराः ॥ उद्धवं पूजयांचक्रुर्ज्ञात्वात्मानमधोक्षजम् ॥५४॥ उवास कतिचिन्मासान् गोपीनां विनुदन् शुचः ॥ कृष्णलीलाकथां गायन् रमयामास गोकुलम् ॥५५॥ यावंत्यहानि नंदस्य व्रजे ऽवात्सीत्स उद्धवः ॥ व्रजौकसां क्षणप्रायाण्यासन् कृष्णस्य वार्तया ॥५६॥ सरिद्वनगिरिद्रोणीर्वीक्षन् कुसुमितान् द्रुमान् ॥ कृष्णं संस्मारयन् रेमे हरिदासो व्रजौकसाम् ॥५७॥ दृष्ट्वैवमादि गोपीनां कृष्णावेशात्मविक्लवम् ॥ उद्धवः परमप्रीतस्ता नमस्यन्निदं जगौ ॥५८॥ एताः परं तनुभृतो भुवि गोपवध्वो गोविंद एवमखिलात्मनि रूढभावाः ॥ वांछंति यद्भवभियो मुनयो वयं च किं ब्रह्मजन्मभिरनंतकथारसस्य ॥५९॥ क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः कृष्णे क्व चैष परमात्मनि रूढभावः ॥ नन्वीश्वरो ऽनुभजतो ऽविदुषो ऽपि साक्षाच्छ्रेयस्तनोत्यगदराज इवोपयुक्तः ॥६०॥ नायं श्रियो ऽग उ नितांतरतेः प्रसादः स्वर्योषितां नलिनगंधरुचां कुतो ऽन्याः ॥ रासोत्सवे ऽस्य भुजदंडगृहीतकंठलब्धाशिषां य उदगाद्व्रजसुंदरीणाम् ॥६१॥

त्र जातः स एव सर्वोत्तम इत्यर्थः यद्वा अनंतकथासु रसो रागो यस्य तस्य ब्रह्मजन्मभिश्चतुर्मुखजन्मभिरपि किमित्यर्थः ॥५९॥ किं च ईश्वरप्रसादो महत्त्वे कारणं तस्य च न जातिराचारो ज्ञानं वा कारणं किंतु केवलं भजनमेवेत्याह क्वेमा इति साक्षाद्भज तः प्रसः ननु अहो उपयुक्तः सेवितः अगदराजः अमृतं यथेति ॥६०॥ अत्यंतापूर्वश्चायं गोपीषु भगवतः प्रसाद इत्याह नायमिति अंगे वक्षसि अहो नितांतरतेः एकांतरतिमत्याः श्रियो ऽपि नायं प्रसादः अनुग्रहो ऽस्ति नलिनस्येव गंधो रुक् कांतिश्च यासां तासां स्वर्गांगनानामप्सरसामपि नास्ति अन्याः पुनर्दू

रतो निरस्ताः रासोत्सवे कृष्णभुजदंडाभ्यां गृहीतः आलिंगितः कंठस्तेन लब्धा आशिषो याभिस्तासां गोपीनां य उदगात् आविर्बभूव॥६१॥ किंच आसां ता अ वद्गोपीनां भाग्यं मम त्वेतावत्प्रार्थ्यमित्याह आसामिति गोपीनां चरणरेणुभाजां गुल्मादीनां मध्ये यत् किमप्यहं स्यामित्याशंसा कथंभूतानां या इत्यादि आ र्याणां मार्गं धर्मं च हित्वा॥६२॥ पुनस्ता एव विशिनष्टि या वा इति योगेश्वरैरप्यात्मन्येवार्चितं स्तनेषु न्यस्तं परिरभ्य तापं जहुरिति॥६३॥ एवं महत्वं प्रति पाद्य नमस्करोति वंद इति॥६४॥ अनुज्ञाप्य अनुज्ञां याचित्वा आमंत्र्य स्पृष्ट्वा॥६५॥६६॥ नः अस्माकं मनसो वृत्तयः कृष्णपादांबुजाश्रयाः स्युः अभि

आसामहो चरणरेणुजुषामहं स्यां वृंदावने किमपि गुल्मलतौषधीनाम्। या दुस्त्यजं स्वजनमार्य्यपथं च हित्वा भेजुर्मुकुंदपदवीं श्रुतिभिर्विमृग्याम्॥६२॥ या वै श्रियाऽर्चितमजादिभिराप्तकामैर्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम्। कृष्णस्य तद्भगवतश्चरणारविंदं न्यस्तं स्तनेषु विजहुः परिरभ्य तापम्॥६३॥ वंदे नंदव्रजस्त्रीणां पादरेणुमभीक्ष्णशः। यासां हरिकथोद्गीतं पुनाति भुवनत्रयम्॥६४॥ श्रीशुक उवाच॥ अथ गोपीरनुज्ञाप्य यशोदां नंदमेव च। गोपानामंत्र्य दाशार्हो यास्यन्नारुरुहे रथम्॥६५॥ निर्गतं समासाद्य नानोपायनपाणयः। नंदादयोऽनुरागेण प्रावोचन्नश्रुलोचनाः॥६६॥ मनसो वृत्तयो नः स्युः कृष्णपादांबुजाश्रयाः। वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु॥६७॥ कर्मभिर्भ्राम्यमाणानां यत्र क्वापीश्वरेच्छया। मङ्गलाचरितैर्दानैर्मतिर्नः कृष्ण ईश्वरे॥६८॥ एवं सभाजितो गोपैः कृष्णभक्त्या नराधिप। उद्धवः पुनरागच्छन्मथुरां कृष्णपालिताम्॥६९॥ कृष्णाय प्रणिपत्याह भक्त्युद्रेकं व्रजौकसाम्। वसुदेवाय रामाय राज्ञे चोपायनान्यदात्॥७०॥ इति श्रीभागवते महापुराणे दशमस्कन्धे उद्धवप्रतियाने सप्तचत्वारिंशोऽध्यायः॥४७॥ श्रीशुक उवाच॥ अथ विज्ञाय भगवान्सर्वात्मा सर्वदर्शनः। सैरंध्र्याः कामतप्तायाः प्रियमिच्छन्गृहं ययौ॥१॥ महाऽर्होपस्करैराढ्यं कामोपायोपबृंहितम्। मुक्तादामपताकाभिर्वितानशयनादिभिः। धूपैस्सुरभिभिर्दीपैः स्रग्गंधैरपि मण्डितम्॥२॥ गृहं तमायांतमवेक्ष्य सासनात्सद्यः समुत्थाय हि जातसंभ्रमा॥ यथोपसंगम्य सखीभिरच्युतं सभाजयामास सदासनादिभिः॥३॥

१ धायिनीः अभिधायिन्यः॥६७॥६८॥६९॥ कृष्णे रतिः स्यादिति कृष्णादिभ्यो भक्त्युद्रेकमाह उपायनानि च अदादिति॥७०॥ इति दशमे टीकायां सप्तचत्वारिंशोऽध्यायः॥४७॥ अष्टचत्वारिंशकेऽथ कृष्णः कुब्जामरीरमत्। अक्रूरस्य गृहं गत्वा तं गजाह्वयमादिशत्॥१॥ सैरंध्र्याः काममापूर्य पूरयित्वा मनोरथान्। अक्रूरस्ततः कृष्णस्तेन पार्थान्सांत्वयत्॥२॥ ॥१॥ महार्हैर्मूल्यैः उपस्करैः गृहोपस्करैः [illegible] कामोपायैः [illegible] उपबृंहितम्॥२॥ यथायोग्यमुचितम्॥३॥

॥४॥प्रसाधितोयोग्यतामापादितआत्मादेहोययासासव्रीडंयल्लीलयाउत्स्मितंतेनविभ्रमेणतद्युक्तैरीक्षितैरुपलक्षिता॥५॥अनुलेपार्पणाख्यंतस्याःपुण्यंनास्तीतिदर्शयितुंपुण्यलेशयेत्युक्तंनतुपुण्यस्याल्पत्वविवक्षया॥६॥कुचादीनांरुजोमृजंतीतिजिघ्रंतीवचरणौ॥७॥काममेवप्राकृतदृष्ट्याअयाचतनचगोप्यइवसातन्निष्ठेतिदुर्भगेत्युक्तंकृतार्थत्वेतुतस्यानसंदेहः॥८॥९॥कामएववरस्तंदत्वामानयित्वाचालंकारादिदानैः॥१०॥म

तथोद्धवःसाधुतयाऽभिपूजितोन्यषीदुर्व्यामभिमृश्यचासनम्।कृष्णोपितूर्णंशयनंमहाधनंविवेशलोकाचरितान्यनुव्रतः॥४॥सामज्जनालेपदुकूलभूषणस्रग्गंधतांबूलसुधासवादिभिः।प्रसाधितात्मोपससारमाधवंसव्रीडलीलास्मितविभ्रमेक्षितैः॥५॥आहूयकांतांनवसंगमह्रियाविशंकितांकंकणभूषितेकरे।प्रगृह्यशय्यामधिवेश्यरामयारेमेऽनुलेपार्पणपुण्यलेशया॥६॥साऽनंगतप्तकुचयोरुरसस्तथाऽक्ष्णोर्जिघ्रंत्यनंतचरणेनरुजोमृजंती।दोर्भ्यांस्तनांतरगतंपरिरभ्यकांतमानंदमूर्तिमजहादतिदीर्घतापम्॥७॥श्रीशुकउवाच॥सैवंकैवल्यनाथंतंप्राप्यदुष्प्रापमीश्वरं।अंगरागार्पणेनाहोदुर्भगेदमयाचत॥८॥आहोष्यतामिहप्रेष्ठदिनानिकतिचिन्मया।रमस्वनोत्सहेत्यक्तुंसङ्गंतेंबुरुहेक्षण॥९॥तस्यैकामवरंदत्वामानयित्वाचमानदः।सहोद्धवेनसर्वेशःस्वधामागमदर्चितः॥१०॥दुराराध्यंसमाराध्यविष्णुंसर्वेश्वरेश्वरम्।योवृणीतेमनोग्राह्यमसत्वात्कुमनीष्यसौ॥११॥अक्रूरभवनंकृष्णःसहरामोद्धवःप्रभुः।किंचिच्चिकीर्षयन्प्रागादक्रूरप्रियकाम्यया॥१२॥सतान्नरवरश्रेष्ठानाराद्वीक्ष्यस्वबांधवान्।प्रत्युत्थायप्रमुदितःपरिष्वज्याभिनंद्यच॥१३॥ननामकृष्णंरामंचसतैरप्यभिवादितः।पूजयामासविधिवत्कृतासनपरिग्रहान्॥१४॥पादावनेजनीरापोधारयंछिरसानृप।अर्हणेनांबरैर्दिव्यैर्गंधस्रग्भूषणोत्तमैः॥१५॥अर्चित्वाशिरसानम्यपादावंकगतौमृजन्।प्रश्रयावनतोऽक्रूरःकृष्णरामावभाषत॥१६॥दिष्ट्यापापोहतःकंसःसानुगोवामिदंकुलम्।भवद्भ्यामुद्धृतंकृच्छ्राद्दुरंताच्चसमेधितम्॥१७॥युवांप्रधानपुरुषौजगद्धेतूजगन्मयौ।भवद्भ्यांनविनाकिंचित्परमस्तिनचापरम्॥१८॥

नोग्राह्यंविषयसुखंअसत्वात्तुच्छत्वात्॥११॥किंचिच्चिकीर्षयन्हस्तिनपुरंप्रस्थापनंकारयितुमिच्छन्नित्यर्थःअक्रूरप्रियकाम्ययाच॥१२॥आरात्दूरतएव॥१३॥१४॥आअपइतिछेदःअपआसर्वतोधारयन्नित्यन्वयः॥१५॥१६॥वांयुवयोरिदंकुलंउद्धृतंसमेधितंच॥१७॥वामिदंकुलमित्यादिव्यवहारदृष्ट्योक्तंपरमार्थमाहयुवामितिजगन्मयौयुवांकुतः जगद्धेतूतदपिकुतःप्रधानपुरुषौतदात्मकौअतोभवद्भ्यांविनापरंकारणंअपरंकार्यंचनास्तीति ॥ १८ ॥ ॥ ॥ ॥ ॥ ॥

ननु प्रत्यक्षादिसिद्धं कथं नास्तीत्युच्यते अत आह आत्मसृष्टमिति हे ब्रह्मन् परमेश्वर ब्रह्मेति वा पाठः स्वजआदि स्वशक्तिभिः आत्मनैव सृष्टमिदं विश्वं अन्वाविश्य कारणात्मत्वात् ननु प्रविष्टो पुनः प्रविश्येव स्थितः श्रुतप्रत्यक्षगोचरं यथा भवति तथा बहुधा भवानेव प्रतीयते॥१९॥ एकस्यैव बहुधा प्रतीतिं सदृष्टांतमाह यथा हीति योनिषु स्वस्यैव रूपान्तरेणाभिव्यक्तिस्थानेषु चराचरेषु यथा मह्यादीनि कारणान्येव नाना भांति आत्मयोनिषु स्वकारणेषु भूतभौतिकेषु जीवोपि नरमृगादिशरीरेषु बालयुवादिवस्थासु च तथा तथा प्रतीयत इति तत्त्व्यवच्छेदार्थं आत्मतंत्रग्रहणं॥२०॥ ननु सृष्ट्यादिकर्तृत्वेन सगुणत्वेन च मम किं जीववद्बंध उक्तः नहि नहीत्याह सृजसीति तद्गुणकर्मभिर्वा तैर्गुणैः कर्मभिर्वेत्यर्थः यतः क्व च कदाचिदपि बंधहेतुरविद्या तव नैवास्ति कुत इत्यत आह ज्ञानात्मन इति मायाया आश्रयानावरकत्वादिति भावः॥२१॥ किंच आस्तां तावद्बंधशंका यतोऽविद्योपाधेर्जीवोपाधेर्जीवात्मनोऽपि न वस्तुतो बंधोस्तीत्याह देहाद्युपाधेरिति भवो जन्म तन्मूला भिदा च साक्षात्स्वरूपतो न स्यादिति न त्वमम बंधाभाववत्तात्वयाकिं

आत्मसृष्टमिदं विश्वमन्वाविश्य स्वशक्तिभिः। ईयते बहुधा ब्रह्मन् श्रुतप्रत्यक्षगोचरम्॥१९॥ यथा हि भूतेषु चराचरेषु मह्यादयो योनिषु भांति नाना। एवं भवान् केवल आत्मयोनिष्वात्मात्मतंत्रो बहुधा विभाति॥२०॥ सृजस्यथो लुंपसि पासि विश्वं रजस्तमःसत्वगुणैः स्वशक्तिभिः। न बध्यसे तद्गुणकर्मभिर्वा ज्ञानात्मनस्ते क्व च बंधहेतुः॥२१॥ देहाद्युपाधेरनिरूपितत्वाद्भवो न साक्षान्न भिदात्मनः स्यात्। अतो न बंधस्तव नैव मोक्षः स्यातां निकामस्त्वयि नोऽविवेकः॥२२॥ त्वयोदितोऽयं जगतो हिताय यदा यदा वेदपथः पुराणः। बाध्येत पाखंडपथैरसद्भिस्तदा भवान्सत्वगुणं बिभर्ति॥२३॥ स त्वं प्रभोऽद्य वसुदेवगृहेऽवतीर्णः स्वांशेन भारमपनेतुमिहासि भूमेः। अक्षौहिणीशतवधेन सुरेतरांशराज्ञाममुष्य च कुलस्य यशो वितन्वन्॥२४॥ अद्येश नो वसतयः खलु भूरिभागा यः सर्वदेवपितृभूतनृदेवमूर्तिः। यत्पादशौचसलिलं त्रिजगत्पुनाति स त्वं जगद्गुरुरधोक्षज याः प्रविष्टः॥ २५ ॥

मोक्षोंगीक्रियते ओमिति चेत्तर्हि बंधाभावे मोक्षासंभवादापन्नो बंधोपीत्याशंक्याह अत इति यतो नाविद्या अतो न बंधो मोक्षश्च एवमुभौ न स्यातामित्यर्थः ननु त्वं खलु इमां बहुं श्रुतवान् यमुनाह्रदे तु मुक्तं दृष्टवानसि अतः कथमुभयं नास्ति अत आह निकाम इति स्वाभिप्रायानुरूपस्त्वयि नोऽस्माकमविवेक एव परमेवंभूतद्वैतिमस्माकमविवेक एव तवोभौ स्यातामिति॥२२॥ ननु तर्हि मम अवतारास्तच्चरित्राणि च शुक्तिरजतवदविद्याकल्पितान्येव किं न हि इयं तु तव लीलेत्याह त्वयेन त्वयोदित इति॥२३॥ सुरेतरांशा ये राजानस्तेषामक्षौहिणीशतानां वधेन भूमेर्भारमपनेतुं स्वांशेन रामेण सहावतीर्णोसीति॥२४॥ अत एवंभूतस्य तवागमनेन कृतार्थोस्मीत्याह त्रयेण अद्येति हे ईश अद्य नो वसतयो गृहाः तपोवनादपि भूरिपुण्याः कुतः याः वसतीः त्वं साक्षात्प्रविष्टः कथंभूतः यस्य तव पादस्य सलिलमेव गंगा त्रिजगत्पुनाति यश्च त्वं पंचमहादेवतामूर्तिः स त्वं जगद्गुरुरिति॥२५॥

स्वमनोरथः परिपूरित इति तुष्यन्नाह कः पण्डित इति ... त्वत्तो ... समीयात् गच्छेत् यतो भवान्भजतः सर्वानभि
तः कामांश्च ददाति आत्मानमपीति॥२६॥ नो अविवेकिनां तत्रापि इह गृह एव॥२७॥२८॥ वो युष्माकं प्रजाः पुत्रा हि वयमिति॥२९॥ ननु नृभिर्दे
वाः सेव्या इति प्रसिद्धं तत्राह देवा इति स्वार्थाः स्वकार्यसाधनपराः साधवस्तु केवलं परानुग्रहपराः परमार्थतस्तु साधव एव देवा इति त एव सेव्या इ
त्यर्थः॥३०॥ तर्हि मृच्छिलादिमयाः किं देवा दयो नैवेत्यत आह नहीति अम्मयानि तीर्थानि मृण्मयाः शिलामयाश्च देवा न भवंतीति न अपि तु भवंत्येव त

कःपंडितस्त्वदपरंशरणंसमीयाद्भक्तप्रियादृतगिरःसुहृदःकृतज्ञात्।सर्वान्ददातिसुहृदोभजतोऽभिकामानात्मानमप्यु
पचयापचयौनयस्य॥२६॥दिष्ट्याजनार्दनभवानिहनःप्रतीतोयोगेश्वरैरपिदुरापगतिःसुरेशैः।छिंध्याऽऽशुनःसुतकल
त्रधनाप्तगेहदेहादिमोहरशनांभवदीयमायाम्॥२७॥इत्यर्चितःसंस्तुतश्चभक्तेनभगवान्हरिः।अक्रूरंसस्मितंप्राहगी
र्भिःसंमोहयन्निव॥२८॥श्रीभगवानुवाच॥त्वंनोगुरुःपितृव्यश्चश्लाघ्योबंधुश्चनित्यदा।वयंतुरक्ष्याःपोष्याश्चअनुकंप्याः
प्रजाहिवः॥२९॥भवद्विधामहाभागानिषेव्याअर्हसत्तमाः।श्रेयस्कामैर्नृभिर्नित्यंदेवाःस्वार्थानसाधवः॥३०॥नह्यम्मया
नितीर्थानिनदेवामृच्छिलामयाः।तेपुनंत्युरुकालेनदर्शनादेवसाधवः॥३१॥सभवान्सुहृदांवैनःश्रेयान्श्रेयश्चिकीर्षे
या॥जिज्ञासार्थंपाण्डवानांगच्छस्वत्वंगजाह्वयम्॥३२॥पितर्युपरतेबालाःसहमात्रासुदुःखिताः।आनीताःस्वपुरंरा
ज्ञावसंतइतिशुश्रुम॥३३॥तेषुराजांऽबिकापुत्रोभ्रातृपुत्रेषुदीनधीः।समोनवर्ततेनूनंदुष्पुत्रवशगोऽंधदृक्॥३४॥गच्छ
जानीहितद्वृत्तमधुनासाध्वसाधुवा।विज्ञायतद्विधास्यामोयथाशंसुहृदांभवेत्॥३५॥इत्यक्रूरंसमादिश्यभगवान्हरि
रीश्वरः।संकर्षणोद्धवाभ्यांवैततःस्वभवनंययौ॥३६॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेअष्टचत्वारिंशोऽध्यायः॥
॥४८॥श्रीशुकउवाच॥सगत्वाहास्तिनपुरंपौरवेन्द्रयशोऽङ्कितम्॥ददर्शतत्रांबिकेयंसभीष्मंविदुरंपृथाम्॥१॥

९ यापि साधूनां ते
षां च महदंतरमित्याह ते पुनंतीति॥३१॥ किंचिच्चिकीर्षयन्प्रागादिति यदुक्तं तत्कार्यमादिशति स इति नः सुहृदां मध्ये भवान्श्रेष्ठः अतः पांडवानां
श्रेयश्चिकीर्षया गजाह्वयं गच्छस्व गच्छेति यद्वा त्वेति पृथक्पदं हे त्व आत्मीयेत्यर्थः॥३२॥ राज्ञा धृतराष्ट्रेण वसंते निवसंतीति शुश्रुम श्रुतवंतो वयम्॥३३॥
दुष्टा ये स्य पुत्रा दुर्योधनादयः तद्वशेन गच्छतीति तथा यतः अंधदृक् अंधनेत्रः धृतराष्ट्रः॥३४॥३५॥३६॥ इति दशमे अष्टचत्वारिंशोऽध्यायः॥४८॥ ऊन
पंचाशत्तमे तु गत्वाऽक्रूरो गजाह्वयम्। राज्ञः स्वभ्रातृपुत्रेषु बुध्वा वैषम्यमागमत्॥१॥ पौरवेंद्राणां यशोभिः तत्कृतदेवब्राह्मणायतनादिभिरंकितम्॥१॥

वाल्हीकपुत्रः सोमदत्तः भारद्वाजो द्रोणः गौतमः कृपः॥२॥ अन्वयं कुशलं॥३॥ दुष्प्रजस्य असत्पुत्रस्य अल्पसारस्य मंदधृतेः खलानां कर्णादीनां छंदमिच्छामनुवर्तितुं शीलमस्येति तथा तस्य॥४॥ तेजः प्रभावः ओजः शस्त्रादि नैपुण्यं वीर्यं शौर्यं न सहद्भिः असहमानैः चिकीर्षितं तद्गतउ परिकर्तुं मिष्टं॥५॥ गरस्य विषस्य दानादि अपेशलं अन्याय्यं तेज ओज इत्यादि सर्वं कथयामास॥६॥ तत्कथनात्पूर्वमेव पृथायाः वृत्तमाह पृथात्विति अश्रू

सहपुत्रं च वाल्हीकं भारद्वाजं सगौतमम्। कर्णं सुयोधनं द्रौणिं पांडवान्सुहृदोऽपरान्॥२॥ यथावदुपसंगम्य बंधुभिर्गांदिनीसुतः। संपृष्टस्तैः सुहृद्वार्तां स्वयं चापृच्छदव्ययम्॥३॥ उवास कतिचिन्मासान् राज्ञो वृत्तविवित्सया॥ दुष्प्रजस्याल्पसारस्य खलच्छंदानुवर्तिनः॥४॥ तेज ओजो बलं वीर्य्यं प्रश्रयादींश्च सद्गुणान्। प्रजानुरागं पार्थेषु न सहद्भिश्चिकीर्षितम्॥५॥ कृतं च धार्तराष्ट्रैर्यद्गरदानाद्यपेशलम्। आचख्यौ सर्वमेवास्मै पृथा विदुर एव च॥६॥ पृथा तु भ्रातरं प्राप्तमक्रूरमुपसृत्य तम्। उवाच जन्मनिलयं स्मरंत्यश्रुकलेक्षणा॥७॥ अपि स्मरंति नः सौम्य पितरौ भ्रातरश्च मे। भगिन्यो भ्रातृपुत्राश्च जामयः सख्य एव च॥८॥ भ्रात्रेयो भगवान् कृष्णः शरण्यो भक्तवत्सलः। पैतृष्वस्रेयान्स्मरति रामश्चांबुरुहेक्षणः॥९॥ सपत्नमध्ये शोचंतीं वृकाणां हरिणीमिव। सांत्वयिष्यति मां वाक्यैः पितृहीनांश्च बालकान्॥१०॥ कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वभावन। प्रपन्नां पाहि गोविंद शिशुभिश्चावसीदतीम्॥११॥ नान्यत्तव पदांभोजात्पश्यामि शरणं नृणाम्। बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिकात्॥१२॥ नमः कृष्णाय शुद्धाय ब्रह्मणे परमात्मने। योगेश्वराय योगाय त्वामहं शरणं गता॥१३॥

णं कलाः लेशाः यये ईक्षणे यस्याः सा॥७॥ अपि किं जामयः कुलस्त्रियः॥८॥ पैतृष्वस्रेयान् मत्पुत्रान्॥९॥ शोचंतीं मां वाक्यैः सांत्वयिष्यति किम्॥१०॥ हे महायोगिन् महान् योग उपायो माया यस्यो स्याः स्त्रीति हे विश्वात्मन् सर्वान्तर्यामिन् हे विश्वभावन विश्वपालक प्रपन्नां शरणागतां अवसीदंतीं क्लिश्यंतीम्॥११॥ आपवर्गिकात् मोक्षप्रदात्॥१२॥ शुद्धाय धर्मात्मने ब्रह्मणे अपरिच्छिन्नाय परमात्मने जीवसखा

प्रपितामहीप्रपितामहःपांडुःतस्यभार्यारुरोद॥१४॥एतयासहसमंदुःखंसुखंचयस्यसःतस्याःपुत्राणामुत्पत्तिहेतुभिर्जनकैर्धर्मानिलेंद्रा
दिभिःतत्कथनैरित्यर्थः॥१५॥बंधुभिःरामकृष्णादिभिःसौहृदेनउदितमुक्तंकथितंसंदेशितं॥१६॥भ्रातर्य्युपरतइतिपांडोःपुत्रेषुसत्सुराजास
नंत्वमास्थितइतिकटाक्षः॥१७॥भवतुतथाप्येवंवर्त्तमानःश्रेयोऽवाप्स्यसीत्याहधर्मेणेति॥१८॥तमोनरकंइहचमहद्दुःखमितिभावः॥१९॥न



श्रीशुकउवाच॥इत्यनुस्मृत्यस्वजनंकृष्णंचजगदीश्वरम्॥प्रारुदद्दुःखिताराजन्भवतांप्रपितामही॥१४॥समदुः
खसुखोऽक्रूरोविदुरश्चमहायशाः।सांत्वयामासतुःकुंतींतत्पुत्रोत्पत्तिहेतुभिः॥१५॥यास्यन्राजानमभ्येत्यविष
मंपुत्रलालसम्।अवदत्सुहृदांमध्येबंधुभिःसौहृदोदितम्॥१६॥अक्रूरउवाच॥भोभोवैचित्रवीर्यत्वंकुरूणां
कीर्त्तिवर्द्धन।भ्रातर्य्युपरतेपांडावधुनासनमास्थितः॥१७॥धर्म्मेणपालयन्नुर्वींप्रजाःशीलेनरंजयन्॥वर्त्तमानः
समःस्वेषुश्रेयःकीर्त्तिमवाप्स्यसि॥१८॥अन्यथात्वाचरँल्लोकेगर्हितोयास्यसेतमः।तस्मात्समत्वेवर्त्तस्वपांडवेष्वा
त्मजेषुच॥१९॥नेहचात्यंतसंवासःकर्हिचित्केनचित्सह॥राजन्स्वेनापिदेहेनकिमुजायात्मजादिभिः॥२०॥एकः
प्रसूयतेजंतुरेकएवप्रलीयते।एकोऽनुभुंक्तेसुकृतमेकएवचदुष्कृतम्॥२१॥अधर्मोपचितंवित्तंहरंत्यन्येऽ
ल्पमेधसः।संभोजनीयापदेशैर्जलानीवजलौकसः ॥२२॥

त्वात्मजानात्मजादिषुकथंसमत्वंस्यात्तत्राहनेहचेतिअत्यंतंनित्यंसंवासःसम्यक्स्थितिः॥२०॥तत्रतावदुत्पत्तिमरणयोःसुखदुःखयोश्च
केनापिसाहित्यंनास्तीत्याहएकइति॥२१॥किंचयदाचसहसंवसतितदापिक्लेशोपार्जितवित्तापहारितयापुत्रानामशत्रवएवज्ञेयाइत्या
हअधर्मेतिसंभोजनीयाःपोष्याःपुत्रादयइतिव्यपदेशैःअल्पमेधसोमूढस्यवित्तंहरंतिजलौकसोमत्स्यस्यजीवनभूतानिजलानियथातद्वत्



T

किंचयानेवंपुष्णातितेधनान्यादायमृताजीवंतोपिवातंपरित्यजंतीत्याहपुष्णातीतिस्वबुद्ध्यास्वीयाइत्यभिमानेनराय:अर्था:अकृतार्थंअप्राप्तभोगं॥२३॥सपुनःपापैकपाथेयोनरकंविशतीत्याहस्वयमितिअसिद्धार्थोऽपूर्णमनोरथः॥२४॥स्वप्नश्चमायाचमनोरथश्चतत्तेनतुल्यंआयम्यनियम्यशांतःसन्समोभवेति॥२५॥हेदानपतेअक्रूरनतृप्यामिअलमितिनमन्ये॥२६॥सूनृताप्रियावाक्चलेअस्थिरेहृदिनस्थीयतेनतिष्ठ



पुष्णातियानधर्मेणस्वबुद्ध्यातमपंडितम्॥तेऽकृतार्थंप्रहिण्वंतिप्राणारायःसुतादयः॥२३॥
स्वयंकिल्बिषमादायतैस्त्यक्तोनार्थकोविदः।असिद्धार्थोविशत्यंधंस्वधर्मविमुखस्तमः॥ २४ ॥
तस्माल्लोकमिमंराजन्स्वप्नमायामनोरथम्॥वीक्ष्यायम्यात्मनात्मानंसमःशांतोभवप्रभो॥२५॥
धृतराष्ट्रउवाच॥यथावदतिकल्याणींवाचंदानपतेभवान्।तथाऽनयानतृप्यामिमर्त्यःप्राप्ययथामृतम्॥२६॥तथापिसूनृतासौम्यहृदिनस्थीयतेचले।पुत्रानुरागविषमेविद्युत्सौदामनीयथा॥२७॥ईश्वरस्यविधिंकोनुविधुनोत्यन्यथापुमान्।भूमेर्भारावताराययोऽवतीर्णोयदोःकुले॥२८॥

तीत्यर्थः सुदामापर्वतःतत्रभवाविद्युदिवतस्मिन्स्फटिकशिलामयेसहसैवातिस्फुरिताविद्युद्यथालीयतेतद्वदित्यर्थः यद्वासुदामामाला
तद्वत्...सौदामनीमालाकारेत्यर्थः॥२७॥...

अतस्तस्मैनमस्यतियइति दुर्विमर्शपथ्यया अवितर्क्यमार्गया गुणान् कर्माणि तत्फलानि च विभजते विविच्य ददाति दुःखबोधेयो विहा
रस्तस्य क्रीडा स एव तंत्रं प्रधानं मुख्यं कारणं यस्य संसारचक्रस्य अतएव तस्य गतिर्यस्मात्तस्मै नम इति ॥२९॥ अभिप्रेत्य ज्ञात्वा ॥३०॥३१॥





योदुर्विमर्शपथयानिजमाययेदंसृ
ष्ट्वागुणान्विभजतेतदनुप्रविष्टः।त
स्मैनमोदुरवबोधविहारतंत्रसंसार
चक्रगतयेपरमेश्वराय॥२९॥श्रीशु
कउवाच॥इत्यभिप्रेत्यनृपतेरभिप्रायं
सयादवःसुहृद्भिःसमनुज्ञातःपुनर्य
दुपुरीमगात्॥३०॥शशंसरामकृष्णा
भ्यांधृतराष्ट्रविचेष्टितम्॥पाण्डवान्प्र
तिकौरव्ययदर्थेप्रेषितःस्वयम्॥३१॥



॥इतिश्रीभागवतेमहापुराणेदशम
स्कन्धेवैयासिक्यामेकोनपंचाशत्त
मोऽध्यायः॥४९॥ समाप्तः शुभं ॥

इतिश्रीभागवतेभावार्थदीपिकायांदशमस्कन्धेपूर्वार्द्धटीकायामेकोनपंचाशत्तमोऽध्यायःसमाप्तः ॥४९॥इतिपूर्वार्द्धंसमाप्तम्॥शुभं॥



T

# अथभागवतदशमस्कन्धउंत्तरार्द्धः प्रारम्भः ॥

T

॥श्रीगणेशायनमः॥ ततःपंचाशत्तमेतुजरासंधभयादिव। कारयित्वाब्धौदुर्गंतंनिनायनिजंजनं॥१॥ कपटान्कपटैरेवहत्वादैत्यानयत्त
तः। अजयच्चजरासंधंधर्मेणैवतुधार्म्मिकः॥२॥ अस्तिप्राप्तिसंज्ञिकेईयतुःजग्मतुः॥१॥२॥ कंसेशोकःक्रोधश्चअमर्षःताभ्यांयुतः॥३॥ न्यरुणत्संरोधयामास॥४॥
तस्यबलंसैन्यंउद्वेलंलंघितमर्यादंसागरमिवतेनतत्स्वबलेनसंरुद्धं॥५॥ किंबलमेवहन्मिनमागधंमागधंवाहत्वाबलंग्रहीष्यामियद्वासमागधंसर्वं
हन्मीतिचिंतयामासनतुप्रथमंकथंजेष्यामीत्येवंचिंतयितुंयुक्तंतत्राहकारणमानुषइतिभूभारावतारकारणेनमानुषःनतुतत्त्वतइति॥६॥ एवं

श्रीशुकउवाच॥ अस्तिःप्राप्तिश्चकंसस्यमहिष्यौभरतर्षभामृतेभर्त्तरिदुःखार्त्तेईयतुःस्मपितुर्गृहान्॥१॥ पित्रेमगधराजा
यजरासंधायदुःखितेवेदयांचक्रतुःसर्वमात्मवैधव्यकारणम्॥२॥ सतदप्रियमाकर्ण्यशोकामर्षयुतोनृप। अयादवींम
हींकर्त्तुंचक्रेपरममुद्यमम्॥३॥ अक्षौहिणीभिर्विंशत्यातिसृभिश्चापिसंवृतः। यदुराजधानींमथुरांन्यरुणत्सर्वतोदिशम्
॥४॥ निरीक्ष्यतद्बलंकृष्णउद्वेलमिवसागरम्। स्वपुरंतेनसंरुद्धंस्वजनंचभयाकुलम्॥५॥ चिंतया
मासभगवान्हरिःकारणमानुषः। तद्देशकालानुगुणंस्वावतारप्रयोजनं॥६॥ हनिष्यामिबलंह्ये
तद्भुविभारंसमाहितं। मागधेनसमानीतंवश्यानांसर्वभूभुजाम्॥७॥ अक्षौहिणीभिःसंख्यातंभ
टाश्वरथकुंजरैः। मागधस्तुनहंतव्योभूयःकर्त्ताबलोद्यमं॥८॥ एतदर्थोऽवतारोऽयंभूभारहरणाय
मे। संरक्षणायसाधूनांकृतोऽन्येषांवधायच॥९॥ अन्योपिधर्म्मरक्षायैदेहःसंभ्रियतेमया। विरामा
याप्यधर्म्मस्यकालेप्रभवतःक्वचित्॥१०॥ एवंध्यायतिगोविंदआकाशात्सूर्य्यवर्चसौ। रथावुप



स्थितौसद्यःससूतौसपरिच्छदौ॥११॥ आयुधानिचदिव्यानिपुराणानियदृच्छया। दृष्ट्वातानिहृषीकेशःसंकर्षणमथाब्रवीत्
॥१२॥ पश्यार्य्यव्यसनंप्राप्तंयदूनांत्वावतांप्रभो। एषतेरथआयातोदयितान्यायुधानिच॥१३॥ यानमास्थायजह्येतद्व्यसनात्स्वा

त्रिधाविचिंत्यप्रथमंपक्षंनिर्द्धारितवान्तदाहचतुर्भिःहनिष्यामीति॥७॥ बलायोद्यमंकर्त्ताकरिष्यति॥८॥ समुद्धरा। एतदर्थंहिनौजन्मसाधू
नान्चतएवहंतव्यस्तत्राहएतदर्थइतिएतच्छब्दार्थंस्पष्टयतिभूभारहरणायेति॥९॥ अयमेतदर्थोऽवतारइत्युपलक्षणमित्याहअन्योपीतिप्रभवतः
उद्भवतः॥१०॥ ससूतौसारथिसहितौपरिच्छदःपरिकरोध्वजकवचादिस्तत्सहितौ॥११॥१२॥ त्वमेवअवनरक्षकोनाथोविद्यतेयेषांतेत्वावंतःतेषां॥१३॥१४॥

दंशितौ बद्धकवचौ ।१५। स्वायुधाढ्यौ शोभनायुधसंपन्नौ ।१६। पुरुषाधम अधमायस्मा [illegible] नोऽर्थः हे पुरुषोत्तमेति ।१७। गुप्तेन सर्वान्तरत्वात्
दर्शनानर्हेण हे मंद बध्नातीति बंधुः अविद्या तां हंतीति तथा हे अविद्यानिरसनेति याहि प्राप्नुहि ।१८। अच्छेद्यो देहो सावितिस्वयमेव मत्वा परितो
षात्संसांतरमाह यद्वा मां जहीति ।१९। यथाश्रुतार्थग्रहणेन भगवत उत्तरं नवैशूराइति विकत्थंते श्लाघंते ।२०। माधवौ मधुवंशसंभवौ महता
सैन्यसमूहेनावृतवान् वायुरभ्रैः सूर्य्यं रेणुभिश्चाग्निं यथा तत्र दर्शनमात्रमेवावरणमिति सूचितं ।२१।२२। परस्यानीकानि सैन्यानि तान्येव पर्य्य

त्रयोविंशत्यनीकाख्यं भूमेर्भारमपाकुरु ॥ एवं संमंत्र्य दाशार्हौ दंशितौ रथिनौ पुरात् ।१५। निर्जग्मतुः स्वायुधाढ्यौ बले
नाल्पीयसावृतौ ॥ शंखौ दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ।१६। ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः। तावाह माग
धो वीक्ष्य हे कृष्ण पुरुषाधम ।१७। न त्वया योद्धुमिच्छामि बालेनैकेन लज्जया। गुप्तेन हि त्वया मंद न योत्स्ये याहि बंधुहन्
॥१८॥ तव राम यदि श्रद्धा युद्ध्यस्व धैर्य्यमुद्वह ॥ हित्वा वा मच्छरैश्छिन्नं देहं स्वर्य्याहि मां जहि ।१९। श्रीभगवानुवाच ॥
न वै शूरा विकत्थंते दर्शयंत्येव पौरुषं। न गृह्णीमो वचो राजन्नातुरस्य मुमूर्षतः ।२०। श्रीशुक उवाच ॥ जरासुतस्ता
वभिसृत्य माधवौ महाबलौघेन बलीयसावृणोत् । ससैन्ययानध्वजवाजिसारथी सूर्य्यानलौ वायुरिवाभ्ररेणुभिः
।२१। सुपर्णतालध्वजचिह्नितौ रथावलक्षयंत्यो हरिरामयोर्मृधे। स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रिताः संमु
मुहुः शुचार्दिताः ।२२। हरिः परानीकपयोमुचां मुहुः शिलीमुखात्युल्बणवर्ष पीडितं। स्वसैन्यमालोक्य सुरासुरा
र्चितं व्यस्फूर्जयत शार्ङ्गशरासनोत्तमं ।२३। गृह्णन् निषंगादथ संदधच्छरान् विकृष्य मुंचन् शितबाणपूगान् ॥ निघ्न
न् रथान् कुंजरवाजिपत्तीन् निरंतरं यद्वदलातचक्रं ।२४। निर्भिन्नकुंभाः करिणो निपेतुरनेकशोऽश्वाः शरवृक्णकं
धराः ॥ रथा हताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकंधराः ॥२५॥ ॥ ॥ ॥

मुचो मेघास्तेषां शिलीमुखा बाणाः तेषामत्युल्बणं वर्षं तेन पीडितं व्यस्फूर्जयत ऊर्ज्जंभितवान् ।२३। तदा हरिः गृह्णन् इति निषंगादिषुधेः श
रान् गृह्णन् अथ तान् गुणे संदधत् गुणमाकृष्य निशितबाणसमूहान् मुंचन् निघ्नन् अहरन् पत्तिः पदातिः निरंतरमिति ग्रहणादिक्रियावि
शेषणं ज्वलत्काष्ठभ्रमणे यथा चक्रवद्भवति तद्वद्व्यस्फूर्जयदिति ।२४। हताः अश्वाः ध्वजाः सूताः नायकाः रथिनश्च येषु ते ॥ २५ ॥ २५ ॥

संछिद्यमानाद्विपराद्भावाजिनश्चतेषामंगेभ्यः प्रसृता असृगापगाः रुधिरनद्यः परस्परं प्रवर्तिताः इति तृतीयेनान्वयः प्रसिद्धनदीरूपकमाह भुजा एव अहयो यासु ताः पुरुषाणां शीर्षाण्येव कच्छपा यासु ताः द्विपा एव द्वीपा अंतर्वर्तितटानि तथा हया एव ग्रहाः ग्राहास्तैश्चाकुला व्याप्ताः ॥२६॥ कराः ऊरवश्च मीना यासु ताः नराणां केशा एव शैवलं यासु ताः धनूंष्येव तरंगा आयुधान्येव गुल्मास्तैश्चैतैश्च संकुलाः अच्छूरिका भ्रमाणि चक्राणि वा तान्येवावर्त्तास्तैः भयानकाः महामणीनां प्रवेकाः उत्तमा आभरणानि च यथायथं अश्मानः शर्करा श्च यासु ताः ॥२७॥ भीरूणां भयावहाः मनस्विनां धीराणां हर्षकर्यः ॥२८॥ किंच संकर्षणेनापितद्बलं क्षयं प्रणीतं अंग हे राजन् अर्णववत् दुर्गं दुर्गमं भैरवं भयंकरं च यतो दुरंतपा

संछिद्यमानद्विपदेभवाजिनामंगप्रसूताः शतशोऽसृगापगाः। भुजाऽहयः पूरुषशीर्षकच्छपा हतद्विपद्वीपहयग्रहाकु
लाः॥२६॥ करोरुमीना नरकेशशैवला धनुस्तरंगायुधगुल्मसंकुलाः। अच्छूरिकावर्त्तभयानका महामणिप्रवेकाभरणाश्मश
र्कराः॥२७॥ प्रवर्त्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः परस्परं। विनिघ्नताऽरीन्मुसलेन दुर्मदान् संकर्षणेनापरिमेयते
जसा॥२८॥ बलं तदंगार्णवदुर्गभैरवं दुरंतपारं मगधेंद्रपालितं। क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परं॥२९॥
स्थित्युद्भवांतं भुवनत्रयस्य यः समीहतेऽनंतगुणः स्वलीलया। न तस्य चित्रं परपक्षनिग्रहस्तथापि मर्त्यानुविधस्य वर्ण्यते
॥३०॥ जग्राह विरथं रामो जरासंधं महाबलं। हतानीकावशिष्टासुं सिंहः सिंहमिवौजसा॥३१॥ बध्यमानं हतारातिं पाशै
र्वारुणमानुषैः। वारयामास गोविंदस्तेन कार्यचिकीर्षया॥३२॥ स मुक्तो लोकनाथाभ्यां व्रीडितो वीरसंमतः। तपसे कृ
तसंकल्पो वारितः पथि राजभिः॥३३॥ वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि। स्वकर्मबंधप्राप्तोऽयं यदुभिस्ते पराभवः

रं अतोऽत्र तलं पारमवधिः दुः शब्दो निषेधे विक्रमेणागाधं देशतश्च निरवधिकमित्यर्थः किंच मगधेंद्रेण च पालितं बलं यः ॥३४॥
देवं भूतं तं रामकृष्णयोः कर्मोक्तं तत्परं केवलं तयोर्विक्रीडितं न तु पराक्रमः॥२९॥ न चैतदाश्चर्यमित्याह स्थित्युद्भवांतमिति तर्हि किमित्या
श्चर्यमिव वर्णितं तत्राह तथापीति मर्त्याननुविधत्ते अनुकरोतीति मर्त्यानुविधस्तस्य॥३०॥ किंच जग्राहेति हतान्यनीकानि यस्य अवशिष्टा
असवः एव यस्य तं च तं च॥३१॥ हताः बहुशः अरातयो येन तथाभूतमपि जरासंधं बध्यमानं वारयामासेति॥३२॥३३॥ पवित्रार्थानि धर्मोपदेश
पराणि पदानि येषु तैर्वाक्यैर्नयनैर्नीतिभिः प्राकृतैर्लौकिकैः तत्रलौकिकन्यायमाहुः स्वकर्मेति यदुभिस्त्वयैतैः कृतास्ते महतः पराभवः केवलं कर्म



९ बंधेन प्राप्तः अतस्त्वया न लज्जितव्यमिति शेषः

बार्हद्रथो जरासंधः ॥ ३५ ॥ मुकुंदोऽपि ययावित्यनुषंगः न क्षतं बलं यस्य सः तस्यैवायं ततश्च सास्तत्प्रतिसंधानादिति भावः निस्तीर्णः अनायासेनैवतीर्णो रिबलार्णवो येन साधु साध्विति अनुमोदितश्च ॥ ३६ ॥ प्रत्युद्गतं मथुरावासिभिः जनैर्विसंगम्य मिलित्वा ॥ ३७ ॥ तदा च प्रभौ पुरं प्रविशति सति शंखादयो नेदुः ॥ ३८ ॥ कथंभूतां पुरं तदाह सिक्तमार्गामिति ब्रह्मघोषेण वेदघोषेण निर्घुष्टां निनादितां कौतुकेन उत्सवेन आसंवेतो बद्धानि तोरणानि यस्यां तां ॥ ३९ ॥ निचीयमानः विकीर्यमाणः प्रविवेशेति विपरिणतानुषंगः ॥ ४० ॥ आयोधनं रणभूमिस्तत्रस्थं वित्तं वीराणां भूष



श्रीशुक उवाच ॥ हतेषु सर्वानीकेषु नृपो बार्हद्रथस्तदा ॥ उपेक्षितो भगवता मगधान्दुर्मना ययौ ॥ ३५ ॥ मुकुंदोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः ॥ विकीर्यमाणः कुसुमैस्त्रिदशैरनुमोदितः ॥ ३६ ॥ माथुरैरुपसंगम्य विज्वरैर्मुदितात्मभिः ॥ उपगीयमानविजयः सूतमागधवंदिभिः ॥ ३७ ॥ शंखदुंदुभयो नेदुर्भेरीतूर्याण्यनेकशः ॥ वीणावेणुमृदंगानि पुरं प्रविशति प्रभौ ॥ ३८ ॥ सिक्तमार्गां हृष्टजनां पताकाभिरलंकृतां ॥ निर्घुष्टां ब्रह्मघोषेण कौतुकाबद्धतोरणां ॥ ३९ ॥ निचीयमानो नारीभिर्माल्यदध्यक्षतांकुरैः ॥ निरीक्ष्यमाणः सस्नेहं प्रीत्युत्कलितलोचनैः ॥ ४० ॥ आयोधनगतं वित्तमनंतं वीरभूषणं ॥ यदुराजाय तत्सर्वमाहृतं प्रादिशत्प्रभुः ॥ ४१ ॥ एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः ॥ युयुधे मागधो राजा यदुभिः कृष्णपालितैः ॥ ४२ ॥ अक्षिण्वंस्तद्बलं सर्वं वृष्णयः कृष्णतेजसा ॥ हतेषु स्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः ॥ ४३ ॥ अष्टादशमे संग्रामे आगामिनि तदंतरा ॥ नारदप्रेषितो वीरो यवनः प्रत्यदृश्यत ॥ ४४ ॥ रुरोध मथुरामेत्य तिसृभिर्म्लेच्छकोटिभिः ॥ नृलोके चाप्रतिद्वंद्वो वृष्णीन् श्रुत्वात्मसंमितान् ॥ ४५ ॥ तं दृष्ट्वाऽचिंतयत्कृष्णः संकर्षणसहायवान् ॥ अहो यदूनां वृजिनं प्राप्तं ह्युभयतो महत् ॥ ४६ ॥ यवनोऽयं निरुंधेऽस्मानद्य तावन्महाबलः ॥ मागधोऽप्यद्य वा श्वो वा परश्वो वागमिष्यति ॥ ४७ ॥ आवयोर्युध्यतोरस्य यद्यागंता जरासुतः ॥ बंधून्वधिष्यत्यथवा नेष्यते स्वपुरं बली ॥ ४८ ॥ ७ ॥

णं ॥ ४१ ॥ तावदिति च्छेदः तावति पराजये वर्त्तमानेपि अक्षौहिण्यो बलं यस्य सः सप्तदशवारान्युयुधे ॥ ४२ ॥ अक्षिण्वन् क्षयं निन्युः ॥ ४३ ॥ अष्टादशमे अष्टादशे संग्रामे भाविनि तन्मध्ये अकस्मात्कालयवनः प्राप्तः ॥ ४४ ॥ आत्मसमितान् स्वतुल्यान् ॥ ४५ ॥ वृजिनं दुःखं उभयतः यव नात् जरासंधाच्च ॥ ४६ ॥ तदाह द्वयेन निरुंधे निरुणद्धि ॥ ४७ ॥ अस्य अनेन ॥ ४८ ॥

भा॰ द॰ उ॰ ३

॥४९॥ समुद्रमध्ये दुर्गं तन्मध्ये नगरं कृत्वा अद्भुतं सर्वाश्चर्यमयं अचीकरत् कारयामास ॥५०॥ त्वष्टा विश्वकर्मा तदीयं शिल्पनैपुणं च क्रिया कौशलं तदाह सार्द्धैस्त्रिभिः रथ्येति रथ्या राजमार्गाः पुरतः वीथ्यः उपमार्गाः पश्चिमतः उभयतोपि चत्वराण्यंगणानि तन्मध्ये कोष्ठाः ततोप्यन्तः सुवर्णभवनानि तदुपरि स्फाटिकाट्टालिकास्तदुपरि हेमकुंभाः इति बहुभूमिकं यथावास्तु वास्तुगृहादिनिर्माणस्थानं तदनतिक्रम्य विनिर्मितं ॥५१॥ सुराणां द्रुमा लताश्च येषु तान्युद्यानानि विचित्रोपवनानि च तैः हर्म्यैः दिविस्पृग्भिः अत्युच्चैः स्फाटिकाः अट्टाला उपरिभूमिकाः गोपुराणि च द्वाराणि तैर्निर्मितमित्युत्तरेणान्वयः ॥५२॥ राजतारकूटैः रजतं च आरकूटं च पीतलोहं ताभ्यां निर्म्मितैः कोष्ठैः अश्वशालान्नशालादिभिः कथंभूतैः हेमकुं

तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमं ॥ तत्र ज्ञातीन्समाधाय यवनं घातयामहे ॥४९॥ इति संमन्त्र्य भगवान्दुर्गं द्वादशयोजनं ॥ अंतःसमुद्रे नगरं कृत्स्नाद्भुतमचीकरत् ॥५०॥ दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणं ॥ रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम् ॥५१॥ सुरद्रुमलतोद्यानविचित्रोपवनान्वितं ॥ हेमशृंगैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः ॥५२॥ राजतारकूटैः कोष्ठैर्हेमकुंभैरलंकृतैः ॥ रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥५३॥ वास्तोष्पतीनां च गृहैर्वल्लभीभिश्च निर्मितं ॥ चातुर्वर्ण्यजनाकीर्णं यदुदेवगृहोल्लसत् ॥५४॥ सुधर्मां पारिजातं च महेंद्रः प्राहिणोद्धरेः ॥ यत्र चावस्थितो मर्त्यो मर्त्यधर्मैर्न युज्यते ॥५५॥ श्यामैककर्णान्वरुणो हयान् शुक्लान्मनोजवान् ॥ अष्टौ निधिपतिः कोशान् लोकपालो निजोदयान् ॥५६॥ यद्यद्भगवता दत्तमाधिपत्यं स्वसिद्धये ॥ सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप ॥५७॥ तत्र योगप्रभावेण नीत्वा सर्वजनं हरिः ॥

॥ ((भैरलंकृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः हैमैः सौवर्णैः महामरकतमयानि स्थलानि येषु तैर्गृहैश्च ॥५३॥ किंच नगरद्वाराद्बहिर्वास्तोष्पतीनां देवानां च गृहैर्वलभीभिश्चन्द्रशालिकाभिश्च निर्म्मितं यदुदेवगृहैः राजगृहैः उल्लसत् शोभमानं ॥५४॥ पारिजातं च प्राहिणोत् प्रस्थापयामास सति शुकपरीक्षित्संवादात् पूर्व्वभावित्वात् भूतनिर्देशः मर्त्यधर्मैः क्षुत्पिपासादिषडूर्म्मिभिः ॥५५॥ निधिपतिः कुबेरः अष्टौ कोशान् निधीन् । पद्मश्चैव महापद्मो मत्स्यकूर्मौ तथोदकः । नीलो मुकुंदः शंखश्च निधयोऽष्टौ प्रकीर्त्तिताः ॥ इति प्रसिद्धान् निजोदयान् निजविभूतीः ॥५६॥ अन्यच्च सिद्धाद्यो भगवता स्वाधिकारसिद्धये यत् यदाधिपत्यं दत्तमासीत् तत्सर्वं प्रत्यर्पयामासुरिति ॥५७॥ यथाकाले [illegible] ॥

अ॰ ५०

राम २

सन् विमृष्याह जाने इति सर्वभूतानां यः प्राणः तत्र च यदोजः सहो बलं च इंद्रियहृदयदेहबलादि तत्सर्वं त्वमित्यहं जाने कथं तथा त्वमत आह विष्णुमित्यादि॥२६॥पुराणत्वे हेतुः त्वं हीति स्रष्टा निमित्तं यच्च सत् उपादानं अतः पुराणं प्रभविष्णुत्वे हेतुः काल इति अधीश्वरत्वमप्य त एवेत्याह ईशः पर इति न च तद्वस्थ इत्याह आत्मनामात्मेति।२७।यतं एवंभूतः अतो ममेष्टदेवं श्रीरघुनाथं एव त्वमित्याह यस्येति ईषत् उत्कलितउद्दीपितो योरोषस्तेन कटाक्षमोक्षास्तैः क्षुभिता नक्राग्राहास्तिमिंगिलाश्च महामत्स्याश्च यस्मिन् सोऽब्धिर्वर्त्ममार्गमादिशत् दत्तवान् तथा पि तस्मिन् येन त्वया स्वयशः एव सेतुः कृतः उज्ज्वलिता च दग्धा यस्येषुभिः क्षतानि छिन्नानि रक्षसो दशग्रीवस्य शिरांसि भुवि पेतुः स एव त्वमिति जा

त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत्॥कालः कलयतामीशः पर आत्मा तथात्मनाम्॥२७॥यस्येषदुत्कलितरोष कटाक्षमोक्षैर्वर्त्मादिशत्क्षुभितनक्रतिमिंगिलोऽब्धिः॥सेतुः कृतः स्वयश उज्ज्वलिता च लंका रक्षःशिरांसि भुवि पेतुरिषु क्षतानि॥२८॥इति विज्ञातविज्ञानमृक्षराजानमच्युतः॥व्याजहार महाराज भगवान्देवकीसुतः॥२९॥अभिमृश्यारविंदा क्षः पाणिना शंकरेण तम्॥कृपया परया भक्तं प्रेमगंभीरया गिरा॥३०॥मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम्॥मिथ्याऽभि शापं प्रमृजन् आत्मनो मणिनाऽमुना॥३१॥इत्युक्तः स्वां दुहितरं कन्यां जांबवतीं मुदा॥अर्हणार्थं स मणिना कृष्णायोप जहार ह॥३२॥अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः॥प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः॥३३॥निशम्य देवकी देवी रुक्मिण्यानकदुंदुभिः॥सुहृदो ज्ञातयोऽशोचन्बिलात्कृष्णमनिर्गतम्॥३४॥सत्राजितं शपंतस्ते दुःखिता द्वारकौक सः॥उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये॥३५॥तेषां तु देव्युपस्थानात्प्रत्यादिष्टाशिषा स च॥ प्रादुर्बभूव सिद्धार्थः सदा रो हर्षयन्हरिः॥३६॥उपलभ्य हृषीकेशं मृतं पुनरिवागतम्॥सह पत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः॥३७॥ नो॰२८इति विज्ञातं वि

ज्ञापितं विज्ञानं येन तं विज्ञानशब्दः करणसाधनः कार्य्यसाधनो वा ऋक्षराजं प्रति उक्तवान्।२९।३०।वयं त्विह बहवो बिलद्वारं प्राप्ताः तत्र मिथ्याऽभि शापममुना मणिना प्रमृजन् प्रमार्ष्टुमहमंतर्बिलमिह प्राप्त इत्यर्थः॥३१॥सह मणिना समर्प्पयामास॥३२।३३।३४॥श्रीकृष्णप्राप्तये चन्द्रभागां नाम दु र्गामभजन॥३५॥स च कृष्णस्तेषां प्रादुर्बभूव आसवइति पाठे असवइंद्रियाणि तेषां प्रेष्ठ इत्यर्थः कदा देव्या उपस्थानात् तया तान् प्रति आदिष्टा दत्ता। याआशीः कृष्णो द्रक्ष्यतेति तया सहैव।३६।यद्वा लोकिनो ननः कथंचिन्मृतं वं पुनरागतम्प्रपलभन्ते तद्वत् उपलभ्य सर्वे जातमहोत्सवा आसन्निति॥३७॥

॥३८॥ पाप्मना अपराधेनानुतप्यमानः ॥३९॥ अघं दोषं आत्मनो रजः मलं अपराधमिति ॥४०॥ किं कृत्वा कस्मिन्कृते इत्यर्थः साधु भद्रं अदीर्घदर्शि
नं अविचारकं मां क्षुद्रं कृपणं मूढं मंदमतिम् ॥४१॥ एवं ध्यायन्नुपायं निश्चिनोति दास्य इति स्त्रीरत्नं दुहितरं तावद्दास्यामि नरत्नं तरं पाशिवं हत्वेन र
त्नमपीति ॥४२॥४३॥ बहुभिः कृतवर्मादिभिः ॥४४॥ मणिं न प्रतीच्छामः न स्वीकुर्मः हे राजन् सूर्यस्य लब्धस्यैति कटाक्षः फलभागिन इति तवापुत्रत्वात्त्व
दीयं धनमस्माकमेवेति गूढोऽभिप्रायः ॥४५॥ इति दशमे टीकायां षट्पंचाशत्तमोऽध्यायः ॥५६॥ सप्तपंचाशत्तमे तु पुनः शतधन्वा वधं प्राप्तस्तदुर्म्य

सत्राजितं समाहूय सभायां राजसन्निधौ ॥ प्राप्तिं चाख्याय भगवान्मणिं तस्मै न्यवेदयत् ॥३८॥ स चातिव्रीडितो रत्नं गृहीत्वाऽ
वाङ्मुखस्ततः ॥ अनुतप्यमानो भवनमगमत्स्वेन पाप्मना ॥३९॥ सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ॥ कथं मृजाम्या
त्मरजः प्रसीदेद्वाऽच्युतः कथम् ॥४०॥ किं कृत्वा साधु मह्यं स्यान्न शपेद्वा जनो यथा ॥ अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम्
॥४१॥ दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च ॥ उपायोऽयं समीचीनस्तस्य शांतिर्न चान्यथा ॥४२॥ एवं व्यवसितो बुद्ध्या सत्रा
जित्स्वसुतां शुभाम् ॥ मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह ॥४३॥ तां सत्यभामां भगवानुपयेमे यथाविधि ॥ बहुभिर्याचितां
शीलरूपौदार्यगुणान्विताम् ॥४४॥ भगवानाह न मणिं प्रतीच्छामो वयं नृप ॥ तवास्तां देवभक्तस्य वयं च फलभागिनः ॥४५॥
इति श्रीभागवते महापुराणे दशमस्कंधे षट्पंचाशत्तमोऽध्यायः ॥५६॥ श्रीशुक उवाच ॥ विज्ञातार्थोऽपि गोविंदो दग्धानाक
र्ण्य पांडवान् ॥ कुंतीं च कुल्यकरणे सहरामो ययौ कुरून् ॥१॥ भीष्मं कृपं स विदुरं गांधारीं द्रोणमेव च ॥ तुल्यदुःखौ च संगम्य हा
कष्टमिति होचतुः ॥२॥ लब्ध्वैतदंतरं राजन् शतधन्वानमूचतुः ॥ अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ॥३॥ योऽस्मभ्यं सं
प्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः ॥ कृष्णायादान्न सत्राजित्कस्माद्भ्रातरमन्वियात् ॥४॥ एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्त
मः ॥ शयानमवधील्लोभात्स पापः क्षीणजीवितः ॥५॥ ((श्लोमार्ष्टि कृष्णोऽक्रूराद्धृतान्मणेः ॥१॥ अक्रूरस्य रवीकृत्य मणेः पात्रमथाच्युतः ॥ उपा
मंत्र्य तमेकांते स रामोऽगात्स्वजाह्वयम् ॥२॥ सत्राजितः श्रीकृष्णाभ्राभंग फलं व्यक्तीकर्तुमाह विज्ञातार्थोऽपीति पांडवा बिलद्वारेण जतुगृहान्निर्गता
इत्येवं विज्ञातोऽर्थो येन सः कुंतीं च दग्धामाकर्ण्य कुल्यकरणे कुलोचितसंव्यवहारार्थम् ॥१॥ अन्येषां तद्वा हद्दुःखाभावात् भीष्मादीन्संगम्येत्युक्तम् ॥२॥३॥
नन्वजीवन्सत्राजित्कथं मणिं दास्यतीति तत्राचतुः योऽस्मभ्यमिति भ्रातरं प्रसेनं मृतं कस्मान्नान्वियात् नानुगच्छेत् म्रियतामित्यर्थः ॥४॥५॥ ॥

एवंभिन्नमतिरितिअतएवअसत्तमः नीचः जग्मिवान्जगाम॥६।७।८।९।१०।११॥हेलनंप्रतिकूलम्वृजिनमपराधम्॥१२॥अपीतोमृतःसमद ग्रासंख्याकान्संयुगान्॥१३।१४॥तौरामकृष्णावेकमेवतत्त्वमित्यभिप्रेत्याहयइदमितिअजयामायया मोहिताऽजेयेतिसंधिरार्षः॥१५।१६।१७॥



स्त्रीणांविक्रोशमानानांक्रंदंतीनामनाथवत्॥हत्वापशून्सौनिकवन्मणिमादायजग्मिवान्॥६॥सत्यभामाचपितरंहतंवीक्ष्यशुचार्पिता॥व्यलपत्तातताते तिहाहताऽस्मीतिमुह्यती॥७॥तैलद्रोण्यांमृतंप्रास्यजगामगजसाह्वयम्॥८॥कृष्णायविदितार्थायतप्ताचख्यौपितुर्वधम्॥८॥तदाकर्ण्येश्वरौराजन्ननुसृत्यनृलोकताम्॥अहोनःपरमंकष्टमित्यस्राक्षौविलेपतुः॥९॥आगत्यभगवांस्तस्मात्सभार्य्यःसाग्रजःपुरम्॥शतधन्वानमारेभेहंतुंहर्तुंमणिंततः॥१०॥सोऽपिकृष्णोद्यमंज्ञात्वाभीतःप्राणपरीप्सया॥साहाय्येकृतवर्माणमयाचतसचाब्रवीत्॥११॥नाहमीश्वरयोःकुर्यांहेलनंरामकृष्णयोः॥कोनुक्षेमायकल्पेततयोर्वृजिनमाचरन्॥१२॥कंसःसहानुगोऽपीतोयद्द्वेषात्त्याजितःश्रिया॥जरासंधःसप्तदशसंयुगान्विरथोगतः॥१३॥प्रत्याख्यातःसचाक्रूरंपार्ष्णिग्राहमयाचत॥सोऽप्याहकोविरुध्येतविद्वानीश्वरयोर्बलम्॥१४॥यइदंलीलयाविश्वंसृजत्यवतिहंतिच॥चेष्टांविश्वसृजोयस्यनविदुर्मोहिताजया॥१५॥यःसप्तहायनःशैलमुत्पाट्यैकेनपाणिना॥दधारलीलयाबालउच्छिलींध्रमिवार्भकः॥१६॥नमस्तस्मैभगवतेकृष्णायाद्भुतकर्मणे॥अनंतायादिभूतायकूटस्थायात्मनेनमः॥१७॥प्रत्याख्यातःसतेनापिशतधन्वामहामणिम्॥तस्मिन्न्यस्याश्वमारुह्यशतयोजनगंययौ॥१८॥गरुडध्वजमारुह्यरथंरामजनार्दनौ॥अन्वयातांमहावेगैरश्वैराजन्गुरुद्रुहम्॥१९॥मिथिलायामुपवनेविसृज्यपतितंहयम्॥पद्भ्यामधावत्संत्रस्तःकृष्णोऽप्यन्वद्रवद्रुषा॥२०॥पदातेर्भगवांस्तस्यपदातिस्तिग्मनेमिना॥चक्रेणशिरउत्कृत्यवाससोर्व्यचिनोन्मणिम्॥२१॥अलब्धमणिरागत्यकृष्णआहाग्रजांतिकम्॥वृथाहतःशतधनुर्मणिस्तत्रनविद्यते॥२२॥ततआहबलोनूनंसमणिःशतधन्वना॥कस्मिंश्चित्पुरुषेन्यस्तस्तमन्वेषपुरंव्रज॥२३॥



((अंतर्यामिकृष्णनियुक्तस्तस्मिन्नक्रूरेमणिंन्यस्यययौअपलायत॥१८॥गुरुःश्वशुरःतद्द्रुहंतारम्॥१९॥शतयोजनमात्रगामित्वात्ततःपरंगंतुमशक्तस्तत्रपतितःतंहयंविसृज्य॥२०॥व्यचिनोन्मृगयामास॥अक्रूरेमणिरस्तीतिसर्वज्ञेनतयाविदितार्थोऽपिरामवंचनायतथाकृतवानितिभावः॥२१।२२॥अन्वेषअन्विच्छ॥२३॥

सर्वज्ञस्यैवंविचेष्टितंमह्यंचनायेतिमत्वागूढमन्यराहाहमिति।२५।कतिचित्समाःसंवत्सरान्।२५।प्रासंगिकमाहततइति।२६।सत्यभामामप्यवंच
यन्नितिसूचयन्नाहकेशवइति।२७।बंधोःसत्राजितःसांपरायिकाःपारलौकिकाः।२८।व्यूषतुःद्वारकायाःसकाशात्क्वापिपलायितौप्रयोजकौमणि
हरणेशतधन्वनःप्रवर्तकौनत्वाक्रूरःकृष्णानुमतेनैवगतःकृतवर्मातुभक्तपक्षपातप्राकट्यभयादिवोपेक्षितइतिगम्यतेकथमन्यथासर्वज्ञेश्वर
वंचनंतयोःसंभवतीति।२९।तदेवंवाराणस्यांदानपतिसमाख्ययामणिहस्तेअक्रूरेरुक्मवेदिकैर्महाध्वरैर्यजमानेनिवसतिपुनःश्रीकृष्णेनैवप्र
स्थापितोऽक्रूरइतिकर्णेकर्णेजपतिजनेसत्यभामारामादीनामप्यविश्वासेजनसंग्रहायाक्रूरंसमाहूयसाक्षेपंश्रीकृष्णःप्राहइदंचभगवन्मतंसंज्ञा

अहंविदेहमिच्छामिद्रष्टुंप्रियतमंमम॥इत्युक्त्वामिथिलांराजन्विवेशयदुनंदनः॥२४॥तंदृष्ट्वासहसोत्थायमैथिलःप्रीत
मानसः॥अर्हयामासविधिवदर्हणीयंसमर्हणैः॥उवासतस्यांकतिचिन्मिथिलायांसमाविभुः॥२५॥ततोऽशिक्षद्गदांकालेधार्तरा
ष्ट्रःसुयोधनः॥मानितःप्रीतियुक्तेनजनकेनमहात्मना॥२६॥केशवोद्वारकामेत्यनिधनंशतधन्वनः॥अप्राप्तिंचमणेःप्रा
हप्रियायाःप्रियकृद्विभुः॥२७॥ततःसकारयामासक्रियाबंधोर्हतस्यवै॥साकंसुहृद्भिर्भगवान्यायाःस्युःसांपरायिकाः॥२८॥
अक्रूरःकृतवर्माचश्रुत्वाशतधनोर्वधम्॥व्यूषतुर्भयवित्रस्तौद्वारकायाःप्रयोजकौ॥२९॥अक्रूरेप्रोषितेऽरिष्टान्यासन्वैद्वार
कौकसाम्॥शारीरामानसास्तापामुहुर्दैविकभौतिकाः॥३०॥इत्यंगोपदिशंत्येकेविस्मृत्यप्रागुदाहृतम्॥मुनिवासनिवासे
किंघटेतारिष्टदर्शनम्॥३१॥देवेवर्षतिकाशीशःश्वफल्कायागतायवैःस्वसुतांगांदिनींप्रादात्ततोऽवर्षत्स्मकाशिषु॥३२॥तत्सु
तस्तत्प्रभावोऽसावक्रूरोयत्रयत्रहदेवोऽभिवर्षतेतत्रनोपतापानमारिकाः॥३३॥इतिवृद्धवचःश्रुत्वानैतावदिहकारण
म्॥इतिमत्वासमानाय्यप्राहाक्रूरंजनार्दनः॥३४॥ ९ ॥ ६ ॥ ९ ॥((एकेचनऋषयोऽन्यत्कारणमक्रूरानयनेवर्ण
यंतितद्यथाश्रुतंदूषयितुमनुवदति।अक्रूरेप्रोषितइति।३०।दूषयतिइतीति।अंगहेराजन्श्रीकृष्णमाहात्म्यंविस्मृत्येतिनदेवाहमुनिवासनिवा
सइतिमुनीनांवासोयस्मिन्सःश्रीकृष्णस्तस्यनिवासेसतिअक्रूरापगममात्रेणारिष्टदर्शनंकिंघटेतनतदिच्छांविनानघटेतेत्यर्थः।३१।पुनस्तन्मत
मेवानुवर्णयतिदेवइतिकाशिषुदेशेषुदेवेमघवतिअवर्षतिसति।३२।३३।इत्येवंभूतमक्रूरमहिमप्रतिपादनपरंवृद्धानांवाक्यंश्रुत्वासत्यमेवं
॥तथाप्येतावदेवकारणंनभवतिकिंतुमणेरप्यपगमइतिमत्वेत्येतदंतपरमतम्।३४॥

विज्ञातमखिलंयेनसचासौअतएवचित्तज्ञश्चअयंभावःमहाभागवतस्यास्यमयाहृतेऽपिमणावपेक्षानास्त्येवयस्मादाहृतोमणिनासौहेवागत इतिज्ञात्वेति॥३५।३६॥ततःकिमतआहसत्राजितइतिअपःपिंडांश्चनिनीयदत्वाऋणंचविमुच्यापाकृत्यशेषितमवशिष्टंदायंदुहितुःसत्यभामायाःसुतागृण्हीयुरितिशास्त्रम्तथाचस्मरंतिपत्नीदुहितरश्चैवपितरौभ्रातरस्तथातत्सुतागोत्रजाबंधुशिष्यसब्रह्मचारिणइति॥३७॥अग्रजोऽपिनप्रत्येतिनविश्वसतीति॥३८॥नास्तीतिनवक्तव्यंयतःअव्युच्छिन्नाःसंततामखावर्ततइति॥३९॥आलब्धउक्तःहृदिस्पृष्टइतिवा॥४०॥रजःमिथ्याभि

पूजयित्वाऽभिभाष्यैनंकथयित्वाप्रियाःकथाः॥विज्ञाताखिलचित्तज्ञःस्मयमानउवाचह॥३५॥ननुदानपतेन्यस्तस्त्वय्यास्तेशतधन्वना॥स्यमन्तकोमणिःश्रीमान्विदितःपूर्वमेवनः॥३६॥सत्राजितोऽनपत्यत्वाद्गृण्हीयुर्दुहितुःसुताः॥दायंनिनीयापःपिंडान्विमुच्यर्णंचशेषितम्॥३७॥तथाऽपिदुर्धरस्त्वन्यैस्त्वय्यास्तांसुव्रतेमणिः॥किंतुमामग्रजःसम्यङ्नप्रत्येतिमणिंप्रति॥३८॥दर्शयस्वमहाभागबंधूनांशांतिमावह॥अव्युच्छिन्नामखास्तेऽद्यवर्तन्तेरुक्मवेदयः॥३९॥एवंसामभिरालब्धःश्वफल्कतनयोमणिम्॥आदायवाससाच्छन्नंददौसूर्यसमप्रभम्॥४०॥स्यमंतकंदर्शयित्वाज्ञातिभ्योरजआत्मनः॥विमृज्यमणिनाभूयस्तस्मैप्रत्यर्पयत्प्रभुः॥४१॥यस्त्वेतद्भगवतईश्वरस्यविष्णोर्वीर्याढ्यंवृजिनहरंसुमङ्गलंच॥आख्यानंपठतिशृणोत्यनुस्मरेद्वादुष्कीर्तिंदुरितमपोह्ययातिशांतिम्॥४२॥इतिश्रीभा॰द॰स्यमंतकोपाख्यानेसप्तपंचाशत्तमोऽध्यायः॥५७॥श्रीशुकउवाच॥एकदापांडवान्द्रष्टुंप्रतीतान्पुरुषोत्तमः॥इन्द्रप्रस्थंगतःश्रीमान्युयुधानादिभिर्वृतः॥१॥दृष्ट्वातमागतंपार्थामुकुन्दमखिलेश्वरम्॥उत्तस्थुर्युगपद्वीराःप्राणामुख्यमिवागतम्॥२॥परिष्वज्याच्युतंवीराअङ्गसङ्गहतैनसः॥सानुरागस्मितंवक्त्रंवीक्ष्यतस्यमुदंययुः॥३॥युधिष्ठिरस्यभीमस्यकृत्वापादाभिवंदनम्॥फाल्गुनंपरिरभ्याथयमाभ्यांचाभिवंदितः॥४॥परमासनआसीनंकृष्णाकृष्णमनिंदिता॥नवोढाव्रीडिताकिञ्चिच्छनैरेत्याभ्यवंदत॥५॥

((१))आपंसंमृज्यअन्यैर्दुर्धरइत्यादिमिषेणप्रीत्याभूयस्तस्मैप्रत्यर्पितवानिति॥४१॥दुष्कीर्तिंतन्मूलंदुरितंचेति॥४२॥इतिद॰टी॰सप्तपंचाशत्तमोऽध्यायः॥५७॥अष्टपंचाशत्तमेतुकृष्णःपंचकरेऽग्रहीत्कालिंदींमित्रविंदांचसत्यांभद्रांचलक्ष्मणाम्॥१॥कालिंदींनिजलाभायतपःपरमुपेयुषीम्परिणेष्यन्प्रियावासमिंद्रप्रस्थमथागमत्॥२॥प्रतीतान्नष्टानपिलाक्षागारेद्रुपदगृहेपुनःसर्वैर्दृष्टान्युयुधानःसात्यकिः॥१॥प्राणाइंद्रियाणिमुख्यंपंचवृत्तिमाणमिवा॥२॥३॥ज्येष्ठयोःप्रणामंकृत्वासमेनालिंगितःकनिष्ठाभ्याम्अभिवंदितोबभूव॥४॥कृष्णाद्रौपदीबहुभार्यासत्यपिनिंदारहितापार्थैर्नवमचिरमुढापरिणीता॥५॥

॥६॥ अतिहार्देन स्नेहेन आर्द्रेस जलेदृशौयस्यास्तयापरिरब्धः सयापरिपृष्टाबांधवायस्य सः॥ प्रेम्णावैक्लव्यंतेनरुद्धः कंठोयस्याः क्लेशापाये आत्मनिदर्शनंयस्यतंभजतां क्लेशापायेआत्मानंदर्शयतीतिवा॥८ ज्ञातीन्वधूंश्चनोऽस्मान्यदाभ्राताअक्रूरः प्रेषितः॥९॥ ज्ञातीनितिवचनात्स्मां मोहंवारयंतीस्तौतिनतेऽस्तीतितत्रहेतुःविश्वस्यतिसुहृच्च आत्माचतस्यहंसिनाशयसि॥१०॥ कुमेधसांविषयासक्तचित्तानांदृष्टोऽसि॥११॥ सुखमव

तथैवसात्यकिःपार्थैःपूजितश्चाभिवंदितः॥ निषसादासनेऽन्येचपूजिताःपर्युपासिता॥४॥ पृथांसमागत्यकृताभिवादनस्त यातिहार्दार्द्रदृशाऽभिरंभितः॥ आपृष्टवांस्तांकुशलंसहस्नुषांपितृष्वसारंपरिपृष्टबांधवः॥७॥ तमाहप्रेमवैक्लव्यरुद्धकंठाश्रु लोचना॥ स्मरंतीतान्बहून्क्लेशान्क्लेशापायात्मदर्शनम्॥८॥ तदैवकुशलंनोऽभूत्सनाथास्तेकृतावयम्॥ ज्ञातीन्नस्मरताकृ ष्णभ्राताप्रेषितस्त्वया॥९॥ नतेऽस्तिस्वपरभ्रांतिर्विश्वस्यसुहृदात्मनः॥ तथापिस्मरतांशश्वत्क्लेशान्हंसिहृदिस्थितः॥१०॥ युधिष्ठिरउवाच॥ किन्नआचरितंश्रेयोनवेदाहमधीश्वर॥ योगेश्वराणांदुर्दर्शोयन्नोदृष्टःकुमेधसाम्॥११॥ इतिवैवार्षिका न्मासान्राज्ञासोऽभ्यर्थितःसुखम्॥ जनयन्नयनानंदमिंद्रप्रस्थौकसांविभुः॥१२॥ एकदारथमारुह्यविजयोवानरध्वजम्॥ गां डीवंधनुरादायतूणौचाक्षयसायकौ॥१३॥ साकंकृष्णेनसन्नद्धोविहर्तुंगहनंवनम्॥ बहुव्यालमृगाकीर्णंप्राविशत्परवीरहा॥ १४॥ तत्राविध्यच्छरैर्व्याघ्रान्सूकरान्महिषान्रुरून्॥ शरभान्गवयान्खड्गान्हरिणान् शशशल्लकान्॥१५॥ तान्निन्युःकिंक रा राज्ञेमेध्यान्पर्वण्युपागते॥ तृट्परीतःपरिश्रांतोबीभत्सुर्यमुनामगात्॥१६॥ तत्रोपस्पृश्यविशदंपीत्वावारिमहारथौ॥ कृष्णौ ददृशतुःकन्यांचरंतींचारुदर्शनाम्॥१७॥ तामासाद्यवरारोहांसुद्विजांरुचिराननाम्॥ पप्रच्छप्रेषितःसख्याफाल्गुनःप्रमदो त्तमाम्॥१८॥ कात्वंकस्यासिसुश्रोणिकुतोऽसिकिंचिकीर्षसि॥ मन्येत्वांपतिमिच्छंतींसर्वंकथयशोभने॥१९॥ कालिंद्युवाच॥ अहंदेवस्यसवितुर्दुहितापतिमिच्छती॥ विष्णुंवरेण्यंवरदंतपःपरममास्थिता॥२०॥ नान्यंपतिंवृणेवीरतमृतेश्रीनिकेतनं ॥म॥ तुष्यतांमेसभगवान्मुकुंदोऽनाथसंश्रयः॥२१॥

सदितिशेषःसुखमभ्यर्थितइतिवाक्रियासमाप्तिः॥१२॥ कालिंदीदर्शनमसङ्गमाह एकदेति अक्षयाः सायकाययोस्तौतूणौइषुधी॥१३॥१४॥१५॥ राज्ञेयुधिष्ठिरायमेध्यान्कमोहीन्बीभत्सुरर्जुनः॥१६॥१७॥ सख्याश्रीकृष्णेन॥१८॥१९॥२०॥ अयंमांकामयेदित्याशंकायामाहनान्यमिति॥२१॥

॥१९॥ आरादेवतद्विद्वान्॥२०॥ प्रसङ्गात्तत्कालीनंचरित्रांतरमाह यदैवेति पार्थैर्यदैवसंदिष्टोविज्ञापितःश्रीकृष्णस्तदैववेतेषांविश्वकर्मणादे
वशिल्पिनानगरंकारयामास॥२१॥ किंचभगवान्निरतिशयैश्वर्यगुणवानपिअर्जुनस्यधनुरादिलाभायसारथिरासखांडवमिंद्रस्यवनम्॥२२॥
अक्षयौअक्षयसायकौ॥२३॥खांडवदाहकवह्नेःसख्येअर्जुनाययस्मिन्नितिसामान्यतोनिर्दिष्टःजलस्थलयोर्दृष्टौभ्रमःयद्वाजलस्थलवत्दृक्

कालिंदीतिसमाख्यातावसामियमुनाजले॥ निर्मितेभवनेपित्रायावदच्युतदर्शनम्॥१९॥तथाऽवदद्गुडाकेशोवासुदेवा
यसोऽपितां॥ रथमारोप्यतद्विद्वान्धर्मराजमुपागमत्॥२०॥यदैवकृष्णःसंदिष्टःपार्थानांपरमाद्भुतम्॥कारयामासनगरंविचि
त्रंविश्वकर्मणा॥२१॥भगवांस्तत्रनिवसन्स्वानांप्रियचिकीर्षया॥अग्नयेखांडवंदातुमर्जुनस्याऽससारथिः॥२२॥सोऽग्निस्तु
ष्टोधनुरदाद्धयान्श्वेतान्रथंनृप॥अर्जुनायाक्षयौतूणौवर्मचाभेद्यमस्त्रिभिः॥२३॥मयश्चमोचितोवह्नेःसभांसख्यउपाहर
त्॥यस्मिन्दुर्योधनस्यासीज्जलस्थलदृशिभ्रमः॥२४॥सतेनसमनुज्ञातःसुहृद्भिश्चानुमोदितः॥आययौद्वारकांभूयःसात्य
किप्रमुखैर्वृतः॥२५॥अथोपयेमेकालिंदींसुपुण्यर्त्वृक्षऊर्जिते॥वितन्वन्परमानंदंस्वानांपरममंगलम्॥२६॥विंदानुविंदा
वावंत्यौदुर्योधनवशानुगौ॥स्वयंवरेस्वभगिनींकृष्णेसक्तांन्यषेधताम्॥२७॥राजाधिदेव्यास्तनयांमित्रविंदांपितृष्वसुः॥
प्रसह्यहृतवान्कृष्णोराजन्राज्ञांप्रपश्यताम्॥२८॥नग्नजिन्नामकौसल्यआसीद्राजाऽतिधार्मिकः॥तस्यसत्याऽभवत्कन्या
देवीनाग्नजितीनृप॥२९॥नतांशेकुर्नृपावोढुमजित्वासप्तगोवृषान्॥तीक्ष्णशृंगान्सुदुर्धर्षान्वीर्यगंधासहान्खलान्॥३०॥
तांश्रुत्वावृषजिल्लभ्यांभगवान्सात्वतांपतिः॥जगामकौसल्यपुरंसैन्येनमहतावृतः॥३१॥सकोसलपतिःप्रीतःप्रत्यु
त्थानासनादिभिः॥अर्हणेनापिगुरुणापूजयन्प्रतिनंदितः॥३२॥वरंविलोक्याभिमतंसमागतंनरेन्द्रकन्याचकमेरमा
पतिम्॥भूयादयंमेपतिराशिषोऽनलाःकरोतुसत्यायदिमेधृतोव्रतः॥३३॥

दृष्टिर्यस्मिन्तत्जलस्थलदृक्तस्मिन्भ्रमआसीदि
ति॥२४॥२५॥सुपुण्यऋतुःऋक्षंचयस्मिन्॥२६॥पंचममित्रविंदाविवाहमाहविंदानुविंदावितिद्वाभ्यांआवंत्यौअवंत्याराजानौ॥२७॥२८॥षष्ठमाह
नग्नजिदितिकौसल्यःअयोध्यापतिःतस्यसत्यानामकन्याऽभवत्आसीत्देवीकांतिमतीनाग्नजितीतिपितृनाम्नाप्रसिद्धेत्यर्थः॥२९॥वीर्यगंध
मपिनसहंतइतितथातान्खलान्दुर्बलान्॥३०॥वृषान्जयतीतिवृषजित्तेनलभ्या॥३१॥प्रतिनंदितःतंप्रतिनंदितवान्श्रीकृष्णेनचासौप्रतिनंदितः॥

॥३७।३८।३९॥ हे नरेन्द्र राजन्यबंधोः क्षत्रियस्य शुल्कदाः इत्यादि मदाः ॥४०॥ गुणानामेकमेव धाम स्थानं तथाभूतस्य यस्य तवाङ्गे ॥४१॥४२॥ दुर्दान्ता अशिक्षिताः दुरवग्रहाः अपराप्ताः क्रुतः नदाहए तैरिति भग्नाः भंगमाप्ताः ॥४३॥ एतान्योनिगृण्हाति तस्य कन्येति समयः कृतः यदी मे गोवृषाः निगृही ताः दमिताः मथिता इतियावत् ॥४४॥ सप्तधाक्रत्वेति बव्हीनां योषितां संपूर्ण एवाहं संभोगयोग्यः स्यामिति सत्याभत्यसापत्न्यदर्शनार्थमात्मनः सप्तधा

यत्पादपंकजरजः शिरसा बिभर्ति श्रीरब्जजः सगिरिशः सहलोकपालैः॥ लीलातनूः स्वकृतसेतुपरीप्सया यः काले दधत्स भ
गवान्मम केन तुष्येत्॥३७॥ अर्चितं पुनरित्याह नारायण जगत्पते॥ आत्मानंदेन पूर्णस्य करवाणि किमल्पकः॥३८॥ श्रीशुक उ
वाच॥ तमाह भगवान्हृष्टः कृतासनपरिग्रहः॥ मेघगंभीरया वाचा सस्मितं कुरुनन्दन॥३९॥ श्रीभगवानुवाच॥ नरेंद्र याञ्चा
कविभिर्विगर्हिता राजन्यबंधोर्निजधर्मवर्तिनः॥ तथापि याचे तव सौहृदेच्छया कन्यां त्वदीयां न हि शुल्कदा वयम्॥४०॥ राजो
वाच॥ कोऽन्यस्तेऽभ्यधिको नाथ कन्यावर इहेप्सितः॥ गुणैकधाम्नो यस्यांगे श्रीर्वसत्यनपायिनी॥४१॥ किंत्वस्माभिः कृतः पू
र्वं समयः सात्वतर्षभ पुंसां वीर्यपरीक्षार्थं कन्यावरपरीप्सया॥४२॥ सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः॥ एतैर्भग्नाः सुबह
वो भिन्नगात्रा नृपात्मजाः॥४३॥ यदीमे निगृहीताः स्युस्त्वयैव यदुनंदन॥ वरो भवानभिमतो दुहितुर्मे श्रियः पते॥४४॥ एवं सम
यमाकर्ण्य बध्वा परिकरं प्रभुः॥ आत्मानं सप्तधा कृत्वा न्यगृण्हाल्लीलयैव तान्॥४५॥ बध्वा तान् दामभिः शौरिर्भग्नदर्पान्हतौ
जसः॥ व्यकर्षल्लीलया बद्धान्बालो दारुमयान्यथा॥४६॥ ततः प्रीतः सुतां राजा ददौ कृष्णाय विस्मितः॥ तां प्रत्यगृण्हाद्भग
वान्विधिवत्सदृशीं प्रभुः॥४७॥ राजपत्न्यश्च दुहितुः कृष्णं लब्ध्वा प्रियं पतिम्॥ लेभिरे परमानंदं जातश्च परमोत्सवः॥४८॥
शंखभेर्यानका नेदुर्गीतवाद्यद्विजाशिषः॥ नरा नार्यः प्रमुदिताः सुवासःस्रगलंकृताः॥४९॥ दशधेनुसहस्राणि पारिबर्हम
दाद्विभुः॥ युवतीनां त्रिसाहस्रं निष्कग्रीवसुवाससाम्॥५०॥ नवनागसहस्राणि नागाच्छतगुणान्रथान्॥ रथाच्छतगु
णानश्वानश्वाच्छतगुणान्नरान्॥५१॥ दंपती रथमारोप्य महत्या सेनया वृतौ॥ स्नेहप्रक्लिन्नहृदयो यापयामास कोस
लः॥५२॥ ७ ॥ ७ ॥ करणम् ॥४५॥४६॥४७॥४८॥४९॥ निष्कग्रीवा अश्वताः सुवाससश्च तासां युवतीनां च दासीनां त्रिसाहस्र
मदादिति ॥५०॥ नागान् नागेभ्यः शतगुणान्नवलक्षाणि रथान् रथेभ्यः शतगुणान् नवकोटीः अश्वान् अश्वेभ्यः शतगुणान्नवपद्मानि॥ ५१ ॥ ५२ ॥

यदुभिर्गोवृषैश्च भग्नवीर्या अपि सुदुर्मर्षा असहनशीलाः रुरुधुः ॥५३॥ अस्यतः क्षिपतः प्रयुंजानानिति यावत् ५४।५५ सप्तमं विवाहमाह श्रुतकीर्ते
रिति श्रुतकीर्तिर्नाम या पितृष्वसा तस्याः सुतां भद्रां नाम कैकेयीं तद्देशजाम् ॥५६॥ अष्टमं विवाहमाह सुतां चेति एक एव सः श्रीकृष्णो लक्ष्मणां जहा
र ॥५७॥ तस्य निरोधीं तः पुरं तस्मात् ॥५८॥ भैष्मी जांबवती भामा सत्या भद्रा च लक्ष्मणा कालिंदी मित्रविन्दा चेत्यष्टौ पट्टमहास्त्रियः ॥ इति दशमे टीका
यामष्टपंचाशत्तमः ॥५८॥ ऊनषष्टितमे भौमं हत्वा तेनाहृता हरिः ॥ कन्याः सहस्रशः प्राप पारिजातं दिवो हरन् ॥ परिणीय ततस्ताभिस्तन्मनोरथपूरणैः ॥
आत्मारामोप्यसौ रेमे नरगेहेषु गृहस्थवत् ॥ येन ताः स्त्रियो निरुद्धाः स भौमः च कारात् येन कारणेन हतः तदाचक्ष्वेति ॥१॥ इन्द्रेण भौमचेष्टितं वि॥

श्रुत्वैतद्रुरुधुर्भूपा नयंतं पथि कन्यकाम् ॥ भग्नवीर्याः सुदुर्मर्षा यदुभिर्गोवृषैः पुरा ॥५३॥ तानस्यतः शरव्रातान्बंधुप्रि
यकृदर्जुनः ॥ गांडीवी कालयामास सिंहः क्षुद्रमृगानिव ॥५४॥ पारिबर्हमुपागृह्य द्वारकामेत्य सत्यया रेमे यदूनामृषभो भगवा
न्देवकीसुतः ॥५५॥ श्रुतकीर्तेः सुतां भद्रामुपयेमे पितृष्वसुः ॥ कैकेयीं भ्रातृभिर्दत्तां कृष्णः संतर्दनादिभिः ॥५६॥ सुतां च मद्रा
धिपतेर्लक्ष्मणां लक्षणैर्युताम् ॥ स्वयम्वरे जहारैकः स सुपर्णः सुधामिव ॥५७॥ अन्याश्चैवंविधा भार्याः कृष्णस्यासन्सहस्र
शः ॥ भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शनाः ॥५८॥ इति श्री॰ द॰ अष्टमहिष्युद्वाहो नामाष्टपंचाशत्तमोऽध्यायः ॥५८॥ राजो
वाच ॥ यथा हतो भगवता भौमो येन च ताः स्त्रियः ॥ निरुद्धा एतदाचक्ष्व विक्रमं शार्ङ्गधन्वनः ॥१॥ श्रीशुक उवाच ॥ इन्द्रेण हृ
तच्छत्रेण हृतकुंडलबंधुना ॥ हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ॥२॥ स भार्यो गरुडारूढः प्राग्ज्योतिषपुरं ययौ
॥ गिरिदुर्गैः शस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमम् ॥ मुरपाशायुतैर्घोरैर्दृढैः सर्वत आवृतम् ॥३॥ गदया निर्बिभेदाद्रीन्शस्त्रदु
र्गाणि सायकैः ॥ चक्रेणाग्निं जलं वायुं मुरपाशांस्तथाऽसिना ॥४॥ शंखनादेन यंत्राणि हृदयानि मनस्विनाम् ॥ प्राकारं गदया गु
र्व्या निर्बिभेद गदाधरः ॥५॥ १ ज्ञापितः सन् प्राग्ज्योतिषपुरं भौमनगरं ययावित्यन्वयः कथंभूतेन हृतं छत्रं यस्य तेन लोकपालप्रधानत्वादिं
द्रस्य वरुणच्छत्रहरणे पितस्यैवमानभंग इति तथोक्तम् हृते कुंडले यस्याः सा अदितिर्बन्धुर्माता यस्य तेन हृतममराद्रेः स्थानं मणिपर्वतलक्षणं
यस्य तेन सत्यभामाया गृहे भगवंतमिंद्र आगत्य विज्ञापितवांस्तदा तस्याः कौतुकाय तया भार्यया सह ययाविति यद्वा त्वदनुज्ञयैव त्वत्सुतं महानि
ष्यामीति इति हासात् कं भूम्यैव रं दत्तं सत्यं कर्तुं सत्यभामाया भूम्यंशत्वात्तया सह ययौ यद्वा नारदानीतपारिजातैककुसुमे रुक्मिण्यै दत्ते सति कुपितां स
त्यभामां सांत्वयन् तां त्वमप्यपि पारिजातमेव दास्यामीति श्रीकृष्णेन प्रतिश्रुतमिति हरिवंशप्रसिद्धं तदर्थं तामानीतवानिति ज्ञेयम् ॥२॥ गरुडेन याने कारणं गिरि
॥ दुर्गैरित्यादि गिरिरूपैर्लक्षितं मज्जलाग्न्यनिलैश्चस्वतैश्चावृतैर्मानैर्दुर्गमम् ॥३।४।५॥

युगांताशनेर्ध्वनिवद्भीषणं परिखाया जलात्॥६॥७॥ आविध्य आलोड्य समहान्नादङ्कृत्यन्वयः॥८॥ तस्मै श्रीकृष्णाय गदां व्यमुंचत् व्यक्षिपत्॥९॥
१०॥ इन्द्रतेजसा वज्रेण प्रतिक्रियया हेतुभूतया अमर्षजुषः॥११॥ पीठं पीठनामानं निरगन् निरगमन्॥१२॥ कृत्तानि शीर्षादीनि येषां तान्॥१३॥१४॥ ॥

पांचजन्यध्वनिं श्रुत्वा युगांताशनिभीषणम्॥ मुरः शयान उत्तस्थौ दैत्यः पंचशिरा जलात्॥६॥ त्रिशूलमुद्यम्य सुदुर्निरीक्षणो युगांतसूर्यानललोचनोल्बणः॥ ग्रसंस्त्रिलोकीमिव पंचभिर्मुखैरभ्यद्रवत्तार्क्ष्यसुतं यथोरगः॥७॥ आविध्य शूलं तरसा गरुत्मते निःरस्य वक्त्रैर्व्यनदत्स पंचभिः॥ स रोदसी सर्वदिशोऽम्बरं महानापूरयन्नंडकटाहमावृणोत्॥८॥ तदापतद्वै त्रिशिखं गरुत्मते हरिः शराभ्यामभिनत्त्रिधौजसा॥ मुखेषु तं चापि शरैरताडयत्तस्मै गदां सोपि रुषा व्यमुंचत॥९॥ तामापतंतीं गदया गदां मृधे गदाग्रजो निर्बिभिदे सहस्रधा॥ उद्यम्य बाहूनभिधावतोऽजितः शिरांसि चक्रेण जहार लीलया॥१०॥ व्यसुः पपातांभसि कृत्तशीर्षो निकृत्तशृंगोऽद्रिरिवेन्द्रतेजसा॥ तस्यात्मजाः सप्त पितुर्वधातुराः प्रतिक्रियामर्षजुषः समुद्यताः॥११॥ ताम्रोंतरिक्षः श्रवणो विभावसुर्वसुर्नभस्वानरुणश्च सप्तमः॥ पीठं पुरस्कृत्य चमूपतिं मृधे भौमप्रयुक्ता निरगन्धृतायुधाः॥१२॥ प्रायुंजतासाद्य शरानसीन् गदाः शक्त्यृष्टिशूलान्यजिते रुषोल्बणाः॥ तच्छस्त्रकूटं भगवान्स्वमार्गणैरमोघवीर्यस्तिलशश्चकर्त ह॥१३॥ तान्पीठमुख्याननयद्यमालयं निकृत्तशीर्षोरुभुजांघ्रिवर्मणः॥ स्वानीकपानच्युतचक्रसायकैस्तथा निरस्तान्नरको धरासुतः॥१४॥ निरीक्ष्य दुर्मर्षण आस्रवन्मदैर्गजैः पयोधिप्रभवैर्निराक्रमत्॥ दृष्ट्वा सभार्यं गरुडोपरि स्थितं सूर्योपरिष्टात्सतडिद्घनं यथा॥ कृष्णं स तस्मै व्यसृजच्छतघ्नीं योधाश्च सर्वे युगपत्स्म विव्यधुः॥१५॥ तद्भौमसैन्यं भगवान् गदाग्रजो विचित्रवाजैर्निशितैः शिलीमुखैः॥ निकृत्तबाहूरुशिरोध्रविग्रहं चकार तर्ह्येव हताश्वकुंजरम्॥१६॥ यानि योधैः प्रयुक्तानि शस्त्रास्त्राणि कुरूद्वह॥ हरिस्तान्यच्छिनत्तीक्ष्णैः शरैरेकैकशस्त्रिभिः॥१७॥

तच्छतघ्नीं शक्तिविशेषाम्॥१५॥ विचित्रा वाजाः पक्षा येषां तैर्बाणैः निकृत्ताः बाहवः ऊरवः शिरोध्राः कंधराः विग्रहा देहाश्च यस्मिन् तत् तर्ह्येव तं यदा विव्यधुः तस्मिन्नेव क्षणे॥१६॥ अत्याश्चर्ये कुरूद्वहेति संबोधनं तथाहि तैर्यानि प्रयुक्तानि शस्त्रास्त्राणि तत्प्रहारात्पूर्वमेव तत्सैन्यं सर्वं हत्वा पश्चात् ॥निशस्त्राण्यस्त्राणि च चिच्छेद तत्राप्येकैकं शस्त्रमस्त्रं च त्रिभिस्त्रिभिः शरैरित्याश्चर्यम्॥१७॥

किंचगरुत्मतेति॥१८।१९॥यतःयथाशक्त्यावज्रःप्रतिहतःअसौगरुडस्तुनाकंपत॥२०॥गरुडेवितथोद्यमःसन्शूलंत्रिशूलंआददेधृतवान्॥२१॥
२२॥प्रतप्तजांबूनदेयानिरत्नानितैर्भास्वरेमेवंशभूतंमंदरशिखरंमहामणिंचार्पयदिति॥२३।२४॥ऐश्वर्यंज्ञात्वाभूमिःस्तौतिनमस्तइतिपरमात्मन्हेदेवा
द्यंतर्यामिन्॥२५॥येनमंत्रेणकुंत्याःप्रसन्नःपूर्वमासीत्तेनमंत्रेणनमस्यतिनमइतिपंकजंनाभौयस्यतस्मैजगत्कारणायेत्यर्थःअतएवसत्कीर्तिमयी
पंकजमालाविद्यतेयस्यतस्मैएवंभूतंध्यायतांपंकजवत्सुप्रसन्नेनतापोपशमनेनेत्रेयस्यतस्मैपंकजवत्सुसेव्यौपंकजांकितौवांघ्रीयस्यतस्मैनमइति
॥२६॥किंचभगवतेनिरतिशयैश्वर्यायवासुदेवायसर्वभूताश्रयायअतएवविष्णवेव्यापिनेनहिसर्वभूताश्रयत्वंपरिच्छिन्न

ऊह्यमानःसुपर्णेनपक्षाभ्यांनिघ्नतागजान्॥गरुत्मताहन्यमानास्तुंडपक्षनखैर्गजाः॥१८॥पुरमेवाविशन्नार्तानरकोयु
ध्ययुध्यत॥दृष्ट्वाविद्रावितंसैन्यंगरुडेनार्दितंस्वकम्॥१९॥तंभौमःप्राहरच्छक्त्यावज्रःप्रतिहतोयतः॥नाकंपततयाविद्धोमा
लाहतइवद्विपः॥२०॥शूलंभौमोऽच्युतंहंतुमाददेवितथोद्यमः॥तद्विसर्गात्पूर्वमेवनरकस्यशिरोहरिः॥अपाहरद्गजस्थस्य
चक्रेणक्षुरनेमिना॥२१॥सकुंडलंचारुकिरीटभूषणंबभौपृथिव्यांपतितंसमुज्ज्वलत्॥हाहेतिसाध्वित्यृषयःसुरेश्वरामा
ल्यैर्मुकुंदंविकिरंतईडिरे॥२२॥ततश्चभूःकृष्णमुपेत्यकुंडलेप्रतप्तजांबूनदरत्नभास्वरे॥सवैजयंत्यावनमालयार्पयत्प्रा
चेतसंछत्रमथोमहामणिम्॥२३॥अस्तौषीदथविश्वेशंदेवीदेववरार्चितम्॥प्रांजलिःप्रणताराजन्भक्तिप्रवणयाधिया॥२४
॥भूमिरुवाच॥नमस्तेदेवदेवेशशंखचक्रगदाधर॥भक्तेच्छोपात्तरूपायपरमात्मन्नमोऽस्तुते॥२५॥नमःपंकजनाभायनमः
पंकजमालिने॥नमःपंकजनेत्रायनमस्तेपंकजांघ्रये॥२६॥नमोभगवतेतुभ्यंवासुदेवायविष्णवे॥पुरुषायादिबीजायपूर्ण
बोधायतेनमः॥२७॥अजायजनयित्रेऽस्यब्रह्मणेऽनन्तशक्तये॥परावरात्मन्भूतात्मन्परमात्मन्नमोऽस्तुते॥२८॥ ५ ॥

स्यसंभवतीतिकुतःसर्वाश्रयत्वंतत्राहपुरुषायसर्वस्मात्कार्यात्पूर्वमेवसतेपूर्वमेवाहमिहासमितितत्पुरुषस्यपुरुषत्वमितिश्रुतेःएतदपि
कुतःआदिबीजायआदेर्जगत्कारणस्यापिकारणायएवमपिनमृदादिवज्जाड्यमित्याहपूर्णबोधायेति॥२७॥नन्वेवमपिस्वकारणात्पूर्वंसत्त्वंन
स्यादतआहअजायेतिस्वयमजायअस्यचजगतःजनयित्रेउभयत्रापिक्रमेणहेतुद्वयंब्रह्मणेबृहतेअनंतशक्तयइतिचबृहत्त्वादजत्वंअनंत
शक्तित्वात्जनयितृत्वमित्यर्थःननुपित्रादयःप्रजादीनांजनकास्तेषांचतत्सुवेतेषांचभूतानितेषांचतत्कर्मद्वारेणजीवाःकिमत्राहतत्राहपराव
॥रात्मन्नित्यादिपित्राद्यात्मकत्वात्त्वमेवजनकइत्यर्थः॥ ५९ ॥ २८ ॥ ५ ॥

ननु गुणाविष्टोऽत्यत्यादिहेतवः ते च प्रधानस्यैव तत्स्वभावत्वात् ... इदं किमत्राह त्वं वा इति तमसो धारणे प्रसं



हृत एव स्थानाय पालनाय जगतः सृष्ट्याद्यर्थं उत्कटं रज आदित्वमेव बिभर्षि सृजसीत्यर्थः कालप्रधानपुरुषाश्च त्वद्व्यतिरिक्ता न सन्ति त्वं तु परः सर्व व्यतिरिक्तः अतस्त्वमेव जनयितेत्यर्थः॥२९॥ कार्यकारणस्य प्रपंचस्य तद्व्यतिरेकं तस्य च सर्वव्यतिरेकमुपपादयति अहमिति अहं भूमिः मात्रा णीति देवा मन इंद्रियाणीति च त्रिविधाहंकारकार्याणि कर्ता अहंकारः॥३०॥ एवं स्तुत्वा प्रार्थयते तस्येति हे प्रपन्नार्तिहर तस्य नरकस्यायं भगद

त्वं वै सिसृक्षू रज उत्कटं प्रभो तमो निरोधाय बिभर्ष्यसंवृतः॥ स्थानाय सत्त्वं जगतो जगत्पते कालः प्रधानं पुरुषो भवान्परः॥ २९॥ अहं पयो ज्योतिरथानिलो नभो मात्राणि देवा मन इन्द्रियाणि॥ कर्ता महानित्यखिलं चराचरं त्वय्यद्वितीये भगवन्नयं भ्रमः ॥३०॥ तस्यात्मजोऽयं तव पादपंकजं भीतः प्रपन्नार्तिहरोपसादितः॥ तत्पालयैनं कुरु हस्तपंकजं शिरस्यमुष्याखिलकल्मषापहम्॥३१॥ श्रीशुक उवाच॥ इति भूम्यर्थितो वाग्भिर्भगवान्भक्तिनम्रया॥ दत्त्वाऽभयं भौमगृहं प्राविशत्सकलर्द्धिमत्॥३२॥ तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम्॥ भौमाहृतानां विक्रम्य राजभ्यो ददृशे हरिः॥३३॥ तं प्रविष्टं स्त्रियो वीक्ष्य नरवीरं विमोहिताः॥ मनसा वव्रिरेऽभीष्टं पतिं दैवोपसादितम्॥३४॥ भूयात्पतिरयं मह्यं धाता तदनुमोदताम्॥ इति सर्वाः पृथक्कृष्णे भावेन हृदयं दधुः॥३५॥ ताः प्राहिणोद्द्वारवतीं सुमृष्टविरजोंबराः॥ नरयानैर्महाकोशान्रथाश्वान्द्रविणं महत्॥३६॥ ऐरावतकुलेभांश्च चतुर्दंतांस्तरस्विनः॥ पांडुरांश्च चतुःषष्टिं प्रेषयामास केशवः॥३७॥ गत्वा सुरेन्द्रभवनं दत्त्वाऽदित्यै च कुंडले॥ पूजितस्त्रिदशेन्द्रेण सहेन्द्राण्या च सप्रियः॥३८॥ नोदितो भार्ययोत्पाट्य पारिजातं गरुत्मति॥ आरोप्य सेन्द्रान्विबुधान्निर्जित्योपानयत्पुरम्॥३९ ॥ स्थापितः सत्यभामाया गृहोद्यानोपशोभनः॥ अन्वगुर्भ्रमराः स्वर्गात्तद्गंधासवलंपटाः॥४०॥ ययाच आनम्य किरीटकोटिभिः पादौ स्पृशन्नच्युतमर्थसाधनम्॥

((त्तो नाम भीतः अत एव मया तव पादपंकजमुपसादितः॥३१॥ अभयं दत्त्वा॥३२॥ शताधिकमित्यपि ज्ञातक म् यथाह श्रीपराशरः कन्यापुरे स कन्यानां षोडशातुलविक्रमः शताधिकानि ददृशे सहस्राणि महामते इति राजभ्य इत्युपलक्षणं सिद्धादीनाम पितया हि तेनैवोक्तं देवसिद्धासुरादीनां नृपाणां च जनार्दन हृत्वा हि सोऽसुरः कन्या रुरोध निजमंदिर इति॥३३॥३४॥३५॥ प्राहिणोत्प्रस्थापयामा स सुमृष्टाः कमनीयाश्च ताः विरजोंबराश्च ताः नरयानैः शिबिकादिभिः अपि च महाकोशानिति॥३६॥३७॥ सप्रियः सत्यभामासहितः॥३८॥३९॥ गृहोद्यानं निष्कुटं तदुपशोभयतीयः॥४०॥ सेन्द्रान्विबुधान्निर्जित्येतीन्द्रकृष्णयोः संग्रामस्तु तत्र न नु कथं प्रसाधितः स्वमनोरथेन॥ ७ ॥

श्रीकृष्णेन महेंद्रस्य संग्रामः इत्याशंक्याह पयाच इति अच्युतं अर्थसाधनमिति च कर्म हूयं याचति धातोः विगृह्यते विग्रहं करोति महानपि तमः क्रोधः स्याद्धयतां धनिकतां धिगिति ॥ ४१ ॥ यथा यथावत् अनेन देवक्यादिबंधुजनसमागमोपि प्रतिगृहं यौगपद्येन सूचितः अव्ययः सर्वत्रापि संपूर्ण एव ॥ ४२ ॥ अहो भाग्यं नारीणामित्याह त्रिभिः गृहे ष्विति अतव्यीणि कर्माणि करोतीति तथा सः निरस्तं साम्यमतिशयश्च यैस्तेषां तेषु गृहेषु अनपायी अवस्थि तः रमाभिः लक्ष्म्या अंशभूताभिः निजकामसंप्लुतः स्वानंदपरिपूर्णः गार्हकमेधिकान् गृहस्थधर्मान् ॥ ४३ ॥ अनुरागहाससहितमवलोकं च तत्पूर्वक नवसंगमं च तद्गतं जल्पं च तस्मिं ल्लज्जां च भेजुः ॥ ४४ ॥ विश्रमणं पादसंवाहनं केशप्रसारः केशप्रसाधनं दासीनां शतानि विद्यंते यासां तथा भूता ।

सिद्धार्थ एतेन विगृह्यते महानहो सुराणां च तमो धिगाढ्यताम् ॥ ४१ ॥ अथो मुहूर्त एकस्मिन्नानागारेषु ताः स्त्रियः ॥ यथोपये मे भगवांस्तावद्रूपधरोव्ययः ॥ ४२ ॥ गृहेषु तासामनपाय्यतर्क्यकृन्निरस्तसाम्यातिशयेष्ववस्थितः ॥ रेमे रमाभिर्निजकाम संप्लुतो यथेतरो गार्हकमेधिकांश्चरन् ॥ ४३ ॥ इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोपि न विदुः पदवीं यदीयाम् ॥ भेजुर्मुदाविरतमेधितयानुरागहासावलोकनवसंगमजल्पलज्जाः ॥ ४४ ॥ प्रत्युद्गमासनवरार्हणपादशौचताम्बूलविश्रमणवीजनगंधमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥ ४५ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे पारिजाताहरणनरकवधो नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ ॥ श्रीशुक उवाच ॥ कर्हिचित्सुखमासीनं स्वतल्पस्थं जगद्गुरुम् ॥ पतिं पर्यचरद्भैष्मी व्यजनेन सखीजनैः ॥ १ ॥ यस्त्वेतल्लीलया विश्वं सृजत्यत्त्यवतीश्वरः ॥ स हि जातः स्वसेतूनां गोपीथाय यदुष्वजः ॥ २ ॥ तस्मिन्नंतर्गृहे भ्राजन्मुक्तादामविलंबिना ॥ विराजिते वितानेन दीपैर्मणिमयैरपि ॥ ३ ॥ मल्लिकादामभिः पुष्पैर्द्विरेफकुलनादिते ॥ जालरंध्रप्रविष्टैश्च गोभिश्चंद्रमसोऽमलैः ॥ ४ ॥ पारिजातवनामोदवायुनोद्यानशालिना ॥ धूपैरगरुजै राजन् जालरंध्रविनिर्गतैः ॥ ५ ॥

॥ अपि स्वयं विभोर्दास्यं विदधुरिति ॥ ४५ ॥ इति श्रीदशमे टीकायामेकोनषष्टितमोऽध्यायः ॥ ५९ ॥ अथ षष्टितमे कृष्णः परिहासेन रुक्मिणीं प्रकोपयित्वा ततः प्रेमकलहे तामसांत्वयत् ॥ १ ॥ रामारामजनानंदमहोदयविडंबनैः रुक्मिण्याः प्रेमकलहच्छद्मनेश्वर्यमीर्यते ॥ स्वतल्पस्थं स्वपर्यंकस्थम् ॥ १ ॥ वक्ष्यमाणं रुक्मिण्याः श्रियः श्रीकृष्णे परमं प्रेमसंभावयितुं तस्योत्कर्षमेव तत्त्वमनुस्मारयति यस्त्विति । ॥ २ ॥ आदौ तावत्त्रिभिः श्लोकैर्मंदिरं मनुवर्णयति तस्मिन्निति नु चकेनातिप्रसिद्धमाह भ्राजंति मुक्तादामानि तेषां विलंबाः संति यस्मिंस्तेन वितानेन विराजिते [illegible] ॥ ३ ॥ [illegible] ॥ ४ ॥ निर्गच्छद्भिः अगरुसंभवैर्धूपैः [illegible]

पयसः क्षीरस्य फेनद्ववन्मृदुनि पर्यंकस्य कशिपूत्तमे [illegible] ॥६॥ [illegible] पति बालव्यजनमिति ।७। उपाच्युतं अच्युतस्य
समीपे सा मणिनूपुराभ्यां रेजे क्वणयती मणिमयौ नूपुरौ कूजयंती तथा अंगुलीयवलयव्यजनानि अग्रहस्ते हस्ताग्रे यस्याः सा वस्त्रांतेन गूढौ स्थगि
तौ कुचौ तयोः कुंकुमं तेन शोणो हाररत्नस्य भासा तथा नितंबधृतया परार्ध्या अमूल्या कांचीं तया च रेजे ।८। तां निरीक्ष्य प्रीतः सन् स्मयमानो हरिराबभाषे
कथंभूतां या लीलया धृततनरत्नोः तस्य अनुरूपरूपा अनुरूपं रूपं यस्यास्तां यथोक्तं श्रीपराशरेण देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी विष्णोर्देहानु
रूपां वै करोत्येषात्मनस्तनुमिति किंच अलकैः कुण्डलाभ्यां निष्केण पदकेन चालंकृतकंठेन चतुर्दिक्षु शोभिते वक्त्रे उल्लसंती स्मितसुधा यस्यास्ताम् ।९।

पयःफेननिभे शुभ्रे पर्यंके कशिपूत्तमे ॥ उपतस्थे सुखासीनं जगतामीश्वरं पतिं ॥६॥ बालव्यजनमादाय रत्नदंडं सखीकरात् ॥
तेन वीजयती देवी उपासां चक्र ईश्वरम् ॥७॥ सोपाच्युतं क्वणयती मणिनूपुराभ्यां रेजेंगुलीयवलयव्यजनाग्रहस्ता ॥ वस्त्रांतगूढ
कुचकुंकुमशोणहारभासा नितंबधृतया च परार्ध्यकांच्या ॥८॥ तां रूपिणीं श्रियमनन्यगतिं निरीक्ष्य या लीलया धृततनोरनुरू
परूपाम् ॥ प्रीतः स्मयन्नलककुंडलनिष्ककंठवक्त्रोल्लसत्स्मितसुधां हरिराबभाषे ॥९॥ श्रीभगवानुवाच ॥ राजपुत्रीप्सिता भूपै
र्लोकपालविभूतिभिः महानुभावैः श्रीमद्भी रूपौदार्य्यबलोर्जितैः ॥१०॥ तान्प्राप्तानर्थिनो हित्वा चैद्यादीन्स्मरदुर्मदान् ॥ द
त्ता भ्रात्रा स्वपित्रा च कस्मान्नो ववृषेऽसमान् ॥११॥ राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतान् ॥ बलवद्भिः कृतद्वेषान्प्रायस्त्य
क्तनृपासनान् ॥१२॥ अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम् ॥ आस्थिताः पदवीं सुभ्रूः प्रायः सीदंति योषितः ॥१३॥ निष्किं
चना वयं शश्वन्निष्किंचनजनप्रियाः ॥ तस्मात्प्रायेण न ह्याढ्या मां भजंति सुमध्यमे ॥१४॥ ययोरात्मसमं वित्तं जन्मैश्वर्याकृति
र्भवः ॥ तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥१५॥ वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया ॥ वृता वयं गुणैर्हीना भिक्षु
भिः श्लाघिता मुधा ॥१६॥ अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम् ॥ येन त्वमाशिषः सत्या इहामुत्र च लप्स्यसे ॥१७॥ ७ ॥

सर्वगुणयुक्ता या अपि तव बुद्धिं मर्दे इत्यां आशयेनाह राजपुत्रीत्याद्येकादशभिः हे राजपुत्रि लोकपालानामिव विभूतिरैश्वर्यं येषां तैः तथा महानुभावैः
महाप्रभावैः श्रीमद्भिः राढ्यै रूपादिभिरूर्जितैश्च पूर्वमीप्सितासि ॥१०॥ तान् हित्वा नोऽस्मान् असमानान् कस्माद्वृषे वृतवती त्वम् ॥११॥ किंच प्रायशः
राजभ्यो जरासंधादिभ्यो बिभ्यतः भयं प्राप्नुवतः त्यक्तनृपासनान् ॥१२॥ अस्पष्टवर्त्मनाम् अविज्ञाताचाराणाम् अलोकपथं अस्त्रीपारतंत्र्यं पदवीं मार्गं आस्थि
ता अनुसृताः ॥१३॥ किंच निष्किंचना इ ति ॥१४॥ आत्मसमं परस्परमनुरूपं जन्मैश्वर्याभ्यां सहिता आकृतिः रूपं जातिर्वा समा भवः आयतिः ॥१५॥ नदी
॥र्घा समीक्षा विचारो यस्यास्तया ॥१६॥ अथ इदानीमपि ॥१७॥

तर्हि किमित्यानीताऽहमिति चेत्तत्राह चैद्यशाल्वजरासंधेति मम मां द्विषंति ।१८। स्मयप्रनुत्तये गर्वापनयनाय ।१९। स्त्रीणामति दुःसहमौदासीन्यमकाम-
मत्वं चाह उदासीनाः इति गेहयोर्देहगेहयोः उदासीनाः अतएव ज्योतिरक्रियाः ज्योतिः प्रदीपादिः तद्वत्साक्षिमात्रतया क्रियारहिता आस्महे वर्त्तामहे इ-
ति ।२०। अविश्लेषाद्वेतोरात्मानमेव वल्लभामित्येवार्थे इवशब्दः ।२१।२२। चिंतालक्षणमाह पदेति नखैररुणा श्रीः कांतिर्यस्य तेन सुजातेन सुको-
मलेन पदा ।२३। सुदुःखमप्रियश्रवणात् भगवत्त्यागशंकया शोकः अनुतापः तैर्विनष्टा बुद्धिर्यस्याः तस्याः श्लथंति पतंति वलयानि यस्मात् हस्तात्

चैद्यशाल्वजरासंधदंतवक्रादयो नृपाः ॥ मम द्विषंति वामोरु रुक्मी चापि तवाग्रजः ॥१८॥ तेषां वीर्यमदांधानां दृप्तानां स्मयनु-
त्तये ॥ आनीतासि मया भद्रे तेजोऽपहरता सताम् ॥१९॥ उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः ॥ आत्मलब्ध्यास्महे पूर्णा गे-
हयोर्ज्योतिरक्रियाः ॥२०॥ श्रीशुक उवाच ॥ एतावदुक्त्वा भगवानात्मानं वल्लभामिव मन्यमानामविश्लेषात्तद्दर्पघ्न उपारमत् ॥२१
॥ इति त्रिलोकेशपतेस्तदात्मनः प्रियस्य देव्यश्रुतपूर्वमप्रियम् ॥ आश्रुत्य भीता हृदि जातवेपथुश्चिंतां दुरंतां रुदती जगाम ह
॥२२॥ पदा सुजातेन नखारुणश्रिया भुवं लिखंत्यश्रुभिरंजनासितैः ॥ आसिंचती कुंकुमरूषितौ स्तनौ तस्थावधोमुख्यतिदुः-
खरुद्धवाक् ॥२३॥ तस्याः सुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतो व्यजनं पपात ॥ देहश्च विक्लवधियः सहसैव मु-
ह्यन् रंभेव वातविहता प्रविकीर्य केशान् ॥२४॥ तद्दृष्ट्वा भगवान् कृष्णः प्रियायाः प्रेमबंधनम् ॥ हास्यप्रौढिमजानंत्याः करुणः
सोऽन्वकंपत ॥२५॥ पर्यंकादवरुह्याशु तामुत्थाप्य चतुर्भुजः ॥ केशान् समुह्य तद्वक्त्रं प्रामृजत्पद्मपाणिना ॥२६॥ प्रमृज्याश्रुक-
लेनेत्रे स्तनौ चोपहतौ शुचा ॥ आश्लिष्य बाहुना राजन्ननन्यविषयां सतीम् ॥२७॥ सांत्वयामास सांत्वज्ञः कृपया कृपणां प्रभुः ॥
हास्यप्रौढिभ्रमच्चित्तामतदर्हां सतां गतिः ॥२८॥ श्रीभगवानुवाच ॥ मा मा वैदर्भ्यसूयेथा जाने त्वां मत्परायणाम् ॥ त्वद्वचः श्रो-
तुकामेन क्ष्वेल्याचरितमंगने ॥२९॥ मुखं च प्रेमसंरंभस्फुरिताधरमीक्षितुम् ॥ कटाक्षेपारुणापांगसुंदरभ्रुकुटीतटम् ॥३०॥

देहश्च पपात विक्लवा अवशा धीर्यस्याः ॥२४॥ हास्यस्य प्रौढिं गांभीर्यम् ॥२५॥ चतुर्भुज इति उत्थापनाश्लेषणवक्त्रपरिमार्जनाद्यर्थमाविष्कृतच-
तुर्भुज इत्यर्थः समुह्य निरुह्य ॥२६॥ अश्रुकले अश्रुभिः शोभिते शुचा शोकाश्रुभिः ॥२७॥ सांत्वयामास अनुनीतवान् ॥२८॥ मा मा त्वद्वचः किं नु वदि-
ष्यसीति श्रोतुकामेन श्रोतुमिच्छता क्ष्वेल्या नर्मणा एवमाचरितमुक्तं न तत्त्वतः हे अंगने सुंदरि ॥२९॥ प्रेमसंरंभेण प्रणयकोपेन स्फुरितः कंपितो अधरो य-
[illegible] अतएव सुंदरं स्फुरितं भ्रुकुटीतटं यस्मिंस्तत् ॥ ३० ॥

ननु कलहे किं कौतुकं सुखं वा अत आह अयं हीति नर्मभिः हास्यवचनैः याम कालः॥३१॥ भगवतस्तस्यैश्वर्ययुक्तं मुखं सव्रीडहासेन रुचिरेण स्निग्धेनापांगेन वीक्षमाणा॥३३॥ असमत्वभयं दुर्गाश्रयणं प्रबलैः कलिः अराजत्वम विज्ञाता लौकिकेहा वसादने निष्किंचनत्वं तत्स्त्रीतिर ष्ठाः नादरणीयता अनौचित्यं निर्गुणत्वं वृथा श्लाघा च भिक्षुभिः औदासीन्यमकामत्वं स्वदोषान् षोडश शासतः अज्ञत्वादीर्घदर्शित्वे भैम्या राज्ञां बहून्गु णान् संख्यानमौदिताम् भैष्मीन्यषेधत्तद्गुणस्तवैः भगवतास्वनिन्दापराणि वचांसि निवचनानि तानि सर्वोत्कर्षपरतया व्याचक्षाणा प्रतिभाषते तत्र यदुक्तं कस्मा नो वरषेः समानिति तत्र साम्यं सत्यमेवेत्याह नन्वेवमिति हे अरविंदलोचन त्वमधीशः त्रयाणां ब्रह्मादीनामप्यधीशो नियंता त्वं क्व च अहं गुणप्रकृतिः त्रिगुण स्वभावा माहृता गुणमयी प्रकृतिर्वा ननु त्वमेवाधीश्वरी श्रीः सर्वैरुपास्यत्वादिति चेदत आह अज्ञैः सकामैः गृहीतो पादो यस्याः सा॥३४॥ पदुक्तं राजभ्यो बिभ्यतः सुभ्रूः समुद्रं शरणं गतानिति तत्राह सत्यमिति हे उरुक्रमेति भयाभावं दर्शयति गुणाः शब्दादय एव राजानस्तद्रूपा राजानस्तेभ्यो भयादिवेति अंतः हृदये समुद्रे तद

अयं हि परमो लाभो गृहेषु गृहमेधिनाम्॥ यन्नर्मैर्नीयते यामः प्रियया भीरु भामिनि॥३१॥ श्रीशुक उवाच॥ सैवं भगवता राजन् वैदर्भी परिसान्त्विता॥ ज्ञात्वा तत्परिहासोक्तिं प्रियत्यागभयं जहौ॥३२॥ बभाष ऋषभं पुंसां वीक्षन्ती भगवन्मुखम्॥ सव्रीडहासरु चिरस्निग्धापांगेन भारत॥३३॥ रुक्मिण्युवाच॥ नन्वेवमेतदरविंदविलोचनाहं यद्वै भवान्भगवतोऽसदृशी विभूम्नः क्व स्वे महि म्न्यभिरतो भगवांस्त्र्यधीशः क्वाहं गुणप्रकृतिरज्ञगृहीतपादा॥३४॥ सत्यं भयादिव गुणेभ्य उरुक्रमान्तः शेते समुद्र उपलम्भनमा त्र आत्मा॥ नित्यं कदिन्द्रियगणैः कृतविग्रहस्त्वं त्वत्सेवकैर्नृपपदं विधुतं तमोऽन्धम्॥३५॥ त्वत्पादपद्ममकरन्दजुषां मुनीनां वर्त्मा स्फुटं नृपशुभिर्ननु दुर्विभाव्यम्॥ यस्मादलौकिकमिवेहितमीश्वरस्य भूमंस्तवेहितमथो अनु ये भवन्तम्॥३६॥ निष्किञ्चनो ननु भवान्न यतोऽस्ति किंचिद्यस्मै बलिं बलिभुजोऽपि हरन्त्यजाद्याः॥ न दृगादेर्विषयाकारैरपरिच्छिन्न इत्यर्थः शेते निश्चलतया प्रकाशते उपलं भनमात्रः चैतन्यघनः आत्मा भवानिति बलवद्भिः कृतद्वेषानिति यदुक्तं तदपि सत्यमित्याह नित्यमिति कदिन्द्रियगणैः कुत्सितैः बहिर्मुखैरिन्द्रियगणैः वृत्त्यभिप्रायेण बहुवचनम् कुत्सितं इन्द्रियगणो येषामिति वा तैस्त्वं नित्यं कृतविग्रहः तेषु तवाप्रतीतेः यदुक्तं त्यक्तनृपासनानिति तदपियुक्तमेवे त्याह त्वत्सेवकैरिति नृपाणां पदमासनं अंधं गाढं तम एव तत् अविवेकबहुलत्वात् त्वत्सेवकैरेव तत्त्यक्तं किं पुनर्वक्तव्यं त्वया त्यक्तमिति॥३५॥ अ स्पष्टवर्त्मनां पुंसामलोकपथमीयुषामिति यदुक्तं तदपि तथैवेत्याह त्वत्पादेति नृपशुभिर्नराकारैः पशुभिः किं पुनर्वक्तव्यं तव वर्त्मास्फुटमिति किंच यस्मा द्ये भवंतमनुवर्तन्ते तेषामपीहितमलौकिकमिव अथो अतः किमु वक्तव्यं तवेश्वरस्येहितमलौकिकमित्यर्थः आस्थिताः पदवीं सुभ्रू प्रायः सीदन्ति योषित इत्यस्य परिहारं वक्ष्यति यद्वांछयेति पंचमश्लोके॥३६॥ निष्किंचना वयं शश्वन्निष्किंचनजनप्रियाः तस्मात्प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे इत्येत

॥च्छ्लोकोक्तदोषत्रयं परिहरति॥ ॥ ॥

निष्किंचन इति दरिद्रतालक्षणं निष्किंचनत्वंतु तव न घटत इत्याह यस्मादिति अन्यतो बलिभुजः पूज्या अपि ब्रह्मादयो यस्मै भगवते बलिं हरंति तस्य सर्वेश्वरस्य भवतो दरिद्रता न घटत इत्यर्थः निष्किंचनजनप्रिया इत्यत्र तत्पुरुषेण बहुव्रीहिणा वा निंदास्यादिति स्वयमप्युभयथा स्तौति प्रेष्ठो भवानिति बलिभुजां ब्रह्मादीनां लोकेश्वराणां त्वं प्रेष्ठः ते पितुभ्यं तवेति तस्मात्प्रायेण नह्याढ्या मां भजन्तीति तस्योत्तरं नत्वा विदंतीति आढ्यतयांधाः त्वा त्वामंतकं न विदंति अतस्ते असुतृपः असूनेव तर्पयंति न त्वां भजंतीत्यर्थः ॥ ३७ ॥ बलिभुजामपि भवान्प्रेष्ठ इत्यत्र हेतुर्वदंतियथो रेवसंवित्तमित्यनेनोक्तमनो चित्यपरिहरति त्वं वा इति फलात्मा परमानंदरूप इत्यर्थः एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति श्रुतेः समाजः सेव्यसेवकलक्षणसंबंधः न तु पुंसस्त्रियाश्च मिथो रतयोः अतएव तत्कृत सुखदुःखिनोस्तदाकुलयोरित्यर्थः ॥ ३८ ॥ भिक्षुभिः श्लाघितामुधेत्यस्य परिहारः त्वमिति भिक्षुपदव्याख्यानं न्यस्तदंडैर्मुनिभिरिति मुधेत्यस्य परिहारः आत्मेति यदर्थं सर्वं प्रियं भवति तस्य जगतामात्मनस्तव वरणं न वृथेत्यर्थः किंच आत्मद इति वैरंभ्यं

नत्वा विदंत्यसुतृपोंऽतकमाढ्यतांधाः प्रेष्ठो भवान्बलिभुजामपि तेऽपितुभ्यम् ॥ ३७ ॥ त्वं वै समस्तपुरुषार्थमयः फलात्मा यद्वांछया सुमतयो विसृजंति कृत्स्नम् ॥ तेषां विभो समुचितो भवतः समाजः पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्न ॥ ३८ ॥ त्वं न्यस्तदंडमुनिभिर्गदितानुभाव आत्मात्मदश्च जगतामिति मे वृतोऽसि हित्वा भवद्भ्रुव उदीरितकालवेगध्वस्ताशिषोऽब्जभवनाकपतीन्कुतोऽन्ये ॥ ३९ ॥ जाड्यं वचस्तव गदाग्रज यस्तु भूपान्विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम् ॥ सिंहो यथा स्वबलिमीश पशून्स्वभागं तेभ्यो भयाद्यदुदधिं शरणं प्रपन्नः ॥ ४० ॥ यद्वांछया नृपशिखामणयोंऽगवैन्यजायंतनाहुषगयादय ऐकपत्यम् ॥ राज्यं विसृज्य विविशुर्वनमंबुजाक्ष सीदंति तेऽनुपदवीं त इहास्थिताः किम् ॥ ४१ ॥ कान्यं श्रयेत तव पादसरोजगंधमाघ्राय सन्मुखरितं जनताऽपवर्गम् ॥ तद्विज्ञायत्वया दीर्घसमीक्षयेति स्वस्मिन्नुक्तं दोषद्वयं परिहरति इतीति दृतिज्ञात्वैव मे मया वृतोऽसीत्यज्ञानपरिहारः हित्वेत्यदीर्घसमीक्षापरिहारः भवतो भ्रुवः सकाशादुदीरितो यः कालः तस्य वेगः तेन ध्वस्ता आशिषो येषां तान्ब्रह्मादीनपि विहाय कुतोऽन्ये वराका इत्यर्थः ॥ ३९ ॥ स्वाज्ञानपरिहृत्य पुरुषां तरगुणवर्णनप्रदीप्तकोपसंरंभेण तस्मिन्नेवाज्ञानमापादयति जाड्यमिति सिंहो यथा पशून्विद्राव्य स्वबलिं हरति तथा शार्ङ्गधनुर्निनादेनैव जरासंधादीन्विद्राव्य मां स्वभागं श्रियं यस्त्वं हृतवानसि तस्य तव राजभ्यो भयादुदधिं प्रपन्न इति यदुचो भाषणं तज्जाड्यं मां प्रति न घटत इत्यर्थः ॥ ४० ॥ यच्चान्यद्राजन्यबन्धुरास इत्यादिना अर्थी त्वां भजंतः सीदंतीत्यवसादनं श्रमावह तमुक्तं तदपि मंदमेवेत्याह यद्वांछयेति यस्य तव भजनं वांछया नृपोत्तमाः अंगो वेनस्य पिता वैन्यः पृथुः जायंतो भरतः नाहुषो ययातिः गय आदिर्येषां ते यदेतत्तव पदवीं मार्गमाश्रिताः ते किं सीदंति न [illegible]

हकाऽन्यमिति श्लोकद्वयेन गुणानामालयस्य तव पादसरोजगन्धं जननातापं अपवर्गमोक्षरूपं लक्ष्म्या आलयं तत्त्वेत्थं सद्भिर्मुखरितं वर्णितं माघ्राय तमविगणय्य मर्त्यामरणधर्मिकास्तदा उरुभयं यस्य तमन्यकास्त्री श्रयेत सेवेत अर्थे विविक्तदृष्टिर्यस्याः सा गुणालयस्येत्यनेन गुणैर्हीनाद्भूतिपदुक्त तदपास्तम्॥४२॥ अतस्त्वामेवाहमभजमित्याह तत्त्वेति किंच प्रार्थयते स्यादिति अरणं शरणं सृतिभिर्देवतिर्यगादिभिर्जन्मभिः पाठान्तरे स्वर्थवाद् बहुल कर्मश्रवणैरित्यर्थः कथंभूतस्य तव यस्त्वं अनृतस्य संसारस्यापवर्गो नाशो यस्मात्तः भजन्तमुपयाति आत्मसात्करोतीति तस्य तवाङ्घ्रिरिति भीतस्य हि शरण मेवानुरूपं भजनयोग्यं अतस्त्वामहमभजमित्यर्थः॥४३॥ ये चोक्ता राज्ञां बह्वो गुणाः राजपुत्र्यीप्सिता भूपैर्लोकपालविभूतिभिरित्यादिना तत्रसेष्वसश्च पं सांगुलिभंगं चाह द्वाभ्यां तस्याः स्युरिति खरादिवत्केवलं भारवाहाः गावो बलीवर्दा इव नित्यं व्यापारक्लिष्टाः श्वान इवावमत्ताः बिडाला इव कृपणाः हिंस्रा श्च भृत्या इव किंकराः नृपास्तस्याद्भवेगायाः पतयः स्युः यस्याः कर्णपथं त्वत्कथा न प्राप्नुयादिति॥४४॥ तथा हि ते पदाम्बुजमकरन्दमजिघ्रती सती या स्त्री

लक्ष्म्यालयं त्वः विगणय्य गुणालयस्य मर्त्या सदोरुभयमर्थविविक्तदृष्टिः॥४२॥ तं त्वानुरूपमभजं जगतामधीशमात्मा नमत्र च परत्र च कामपूरम्॥ स्यान्मे तवाङ्घ्रिररणं सृतिभिर्भ्रमन्त्या यो वै भजन्तमुपयात्यनृतापवर्गः॥४३॥ तस्याः स्युरच्युत नृपा भवतोपदिष्टाः स्त्रीणां गृहेषु खरगोश्वबिडालभृत्याः॥ यत्कर्णमूलमरिकर्षण नोपयायाद्युष्मत्कथा मृडविरिञ्चसभासु गीता॥४४॥ त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविट्कफपित्तवातम्॥ जीवच्छवं भजति कान्तमतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्री॥४५॥ अस्त्वम्बुजाक्ष मम ते चरणानुराग आत्मन्रतस्य मयि चानतिरिक्तदृष्टेः॥ यर्हिस्य वृद्धय उपात्तरजोऽतिमात्रो मामीक्षसे तदु ह नः परमानुकम्पा॥४६॥ नैवालीकमहं मन्ये वचस्ते मधुसूदन॥ अम्बाया इव हि प्रायः कन्यायाः स्याद्रतिः क्वचित्॥४७॥ व्यूढायाश्चापि पुंश्चल्या मनोऽभ्येति नवं नवम्॥ बुधोऽसतीं न बिभृयात्तां बिभ्रदुभयच्युत

विमूढा सा कान्तोऽयमिति मतिर्यस्याः सा कान्तमतिः जीवच्छवं भजति त्वगादिभिर्बहिः पिनद्धं छन्नं अन्तर्मांसादिमयमिति॥४५॥ यदुक्तमुदासीना वय मित्यादिना तत्राह अस्त्विति यद्यपि त्वं निरपेक्षस्तथापि मम ते चरणानुरागोऽस्तु मयि च मय्यपि नातिरिक्ता अतिशयवती दृष्टिर्यस्य तस्य ते आत्मन् आत्मन्येव रतस्य न हि नवेन तेन को लाभः त्वच्चरणानुराग एव महान्लाभः किंच यर्हि अस्य विश्वस्य वृद्धये उपात्तो रजसः अतिमात्रो ऽत्युत्कटो येन सः तथाभूतः सन्मां समीक्षसे तदेव अर्थिहृदयेन देवनः परमानुकम्पा अत्यनुग्रह इति॥४६॥ तदेवं तदुक्तं सर्वं प्रतिव्याख्याय प्रसन्नचित्ता मंत्रमुपदिशन्त्याह द्वाभ्यां नैवेति अयाऽऽत्मनोऽनुरूपमित्यादि तव वचः अलीकं मिथ्येति नैव मन्ये यतो लोके कन्याया एवं क्वचिद्रतिर्भवति यथा काशिराजकन्यानामम्बाम्बिकाम्बालिकानां तिसृणां मध्ये अम्बायाः कन्याया एव शाल्वे रतिर्जाता तद्वृत्तममरनिसुत त्थैव पर्यवस्यतीत्यभिप्रायः॥४७॥ व्यूढायाः परिणीताया अपीति उभयस्मादिह परलोकद्वयाच्च

प्रलंभिता उपहासिता अन्वात्थ अन्वाख्यातवती ॥४९॥ मयि एकान्तभक्तायास्ते कामाः संत्येव अकामाय कामनिवृत्तये मोक्षपर्य्यवसायिन इत्यर्थः ॥५०॥ अनुवादेन वरान् दत्वा नाम भिनंदति उपलब्धमिति यद्यस्मान्मयि प्रवर्त्तमाना धीर्नोपकर्षिता नान्यविषया जाता ॥५१॥ एकांतभक्तिमभिनंद्य तामेव द्रढीकर्तुं सकामान्भक्तान्निंदति ये मामिति दांपत्यं दंपत्युपभोगसुखार्थम् ॥५२॥ मायामोहितत्वमेवोपपादयति मां प्राप्येति अपवर्गेण सह संपदो यस्मिन् तं मां प्राप्य प्रसाद्य ये केवलं संपद एव विषयान् वांछंति न तु मां तत्पतिं तासां संपदामपि योऽहमेव पतिस्तं तथा ये विषया निरयेऽपि अतिनिकृष्टयोनावपि स्युः तान् किंच तेषां पुंसां मात्रात्मकत्वात् विषयात्मकत्वान्निरयः सुसङ्गमः शोभनसंगम एव स्यात् अतो मंदभाग्या एव त इत्यर्थः ॥५३॥ तस्मात्हे गृहेश्वरि त्वया मयि भवमो

श्रीभगवानुवाच ॥ साध्व्येतच्छ्रोतुकामैस्त्वं राजपुत्रि प्रलंभिता ॥ मयोदितं यदन्वात्थ सर्व्वं तत्सत्यमेव हि ॥४९॥ यान्यान्कामयसे कामान्मय्यकामाय भामिनि ॥ संति ह्येकांतभक्तायास्तव कल्याणि नित्यदा ॥५०॥ उपलब्धं पतिप्रेम पातिव्रत्यं च तेऽनघे ॥ यद्वाक्यैश्चाल्यमानाया न धीर्मय्यपकर्षिता ॥५१॥ ये मां भजन्ति दांपत्ये तपसा व्रतचर्य्यया ॥ कामात्मानोऽपवर्गेशं मोहिता मम मायया ॥५२॥ मां प्राप्य मानिन्यपवर्गसंपदं वांछंति ये संपद एव तत्पतिम् ॥ ते मंदभाग्या निरयेऽपि ये नृणां मात्रात्मकत्वान्निरयः सुसङ्गमः ॥५३॥ दिष्ट्या गृहेश्वर्य्यसकृन्मयि त्वया कृतानुवृत्तिर्भवमोचनी खलैः ॥ सुदुष्करासौ सुतरां दुराशिषो ह्यसुंभराया निकृतिं जुषः स्त्रियाः ॥५४॥ न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि मानिनि यया स्वविवाहकाले ॥ प्राप्तान्नृपान्न विगणय्य रहोहरो मे प्रस्थापितो द्विज उपश्रुतसत्कथस्य ॥५५॥ भ्रातुर्विरूपकरणं युधि निर्जितस्य प्रोद्वाहपर्वणि च तद्वधमक्षगोष्ठ्याम् ॥ दुःखं समुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीः किमपि तेन वयं जितास्ते ॥५६॥ दूतस्त्वयात्मलभने सुविविक्तमंत्रः प्रस्थापितो मयि चिरायति शून्यमेतत् ॥

चनी निष्कामानुवृत्तिः कृता एतद्दिष्ट्या भद्रं कथंभूता खलैः सुदुष्करा दुराशिषो दुरभिप्रायायाः अत एवासुंभरायाः प्राणतर्पणपरायाः निकृतिं जुषो वंचनपरायाः स्त्रियाः सुतरामसावनुवृत्तिर्दुष्करेति ॥५४॥ किंच संति निष्कामाः प्रेम्णैवमप्यनुवर्त्तमाना बह्व्यः किं तु त्वया सदृशीं कापि न पश्यामीति तत्स्याभर्त्ता बहुमानेनाभिनंदति न त्वादृशीमिति त्रिभिः उपश्रुताः सत्यः कथा यस्य मे ॥५५॥ प्रोद्वाहपर्वणि अनिरुद्धविवाहे अक्षगोष्ठ्यां द्यूतसभायां तस्य भ्रातुर्वधं तस्मिन् काले कालांतरे तदनुस्मरणतः पुनः पुनः समुत्थं दुःखमस्माभिर्योगो वियोगस्तद्भीत्या असहः सोढुमशक्तासि अनेनैवानिरुद्धविवाहानंतर्य्यमस्य ज्ञातव्यं ॥५६॥ अपि च दूत इति आत्मलभने मत्प्राप्त्यर्थं मयि चिरायति श्रीभा ॥ विनिविवाहे आगंतव्यमिति ॥

इतेसमयेकथंचिदप्राप्तवतिसतिएतद्दिग्वं... अनन्यत्वयोग्यं अंगं जिह्वा... स्वामीत्येवंवृतःअस्यापितुःतथाप्युक्तं त्वया
यदीयं व्रजात्मनलभेयभवत्प्रसादंजह्यामसून्व्रतकृशान्शतजन्मभिःस्यादितियद्वा अजिह्मसइतिच्छेदः त्वत्कृमेच्छइत्यर्थः तत्तवकर्मत्वय्येवतिष्ठत
ननत् प्रतिकर्तुंशक्यमित्यर्थः किंतुकेवलंत्वामतिनंदयामः हर्षयामइति॥५७॥सोरतसंलापैःसुरतनर्मगोष्ठीभिः॥५८॥५९॥इतिश्रीदशमेटीकायांषष्टि
तमोऽध्यायः॥६०॥एकषष्टितमेशौरेः पुत्रपौत्रादिसंततिः अनिरुद्धविवाहेचरुक्मिणोरामतोवधः॥१॥अष्टाधिकशतद्व्यष्टसहस्रस्त्रीसमुद्भवान्। को
टिशः पुत्रपौत्रादीन् हरिर्दारैरयोजयत्॥२॥तदेतदुक्तमाह एकैकशइतिकृष्णस्याबलाभार्याःसर्वायाआत्मनिसंपत्तयापितुःसकाशाद्दशवमान् अन्यू
नान्॥१॥प्रेष्ठंन्यमंसत अच्युतस्यप्रियतमंप्रत्येकंस्वंस्वमेनिरे ननस्यतत्त्वमात्मारामत्वंविदंतिता॥२॥ आत्मारामत्वंव्यनक्ति हृद्येन चार्विनिचार्वब्जकोशव

मत्वा जिह्मसइदमंगमनन्ययोग्यं तिष्ठततत्त्वयिवयंप्रतिनंदयामः॥५७॥श्रीशुकउवाच॥एवंसौरतसंलापैर्भगवान्देवकीसुतः॥स्व
रतोरमयांरेमेनरलोकंविडंबयन्॥५८॥तथाऽन्यासामपिविभुर्गृहेषुगृहवानिव॥आस्थितोगृहमेधीयान्धर्मांल्लोकगुरुर्हरिः
॥५९॥इतिश्रीभागवतेमहापुराणेदशमस्कन्धेकृष्णरुक्मिणीसंवादेषष्टितमोऽध्यायः॥६०॥श्रीशुकउवाच॥एकैकशस्ताःकृ
ष्णस्यपुत्रान्दशदशाबलाः॥अजीजनन्ननवमान्पितुःसर्वात्मसंपदा॥१॥गृहादनपगंवीक्ष्यराजपुत्र्योऽच्युतंस्थितम्॥प्रेष्ठंन्य
मंसतस्वंस्वंनतत्तत्त्वविदःस्त्रियः॥२॥चार्वब्जकोशवदनायतबाहुनेत्रसप्रेमहास ———— रसवीक्षितवल्गुजल्पैः॥संमोहिता
भगवतोनमनोविजेतुंस्वैर्विभ्रमैःसमशकन्वनिताविभूम्नः॥३॥स्मायावलोकलवदर्शितभावहारिभ्रूमंडलप्रहितसौरतमंत्रशौ
ण्डैः॥पत्न्यस्तुषोडशसहस्रमनंगबाणैर्यस्येंद्रियंविमथितुंकरणैर्नशेकुः॥४॥इत्थंरमापतिमवाप्यपतिंस्त्रियस्ताब्रह्मादं
योऽपिनविदुःपदवींयदीयाम्॥भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसंगमलालसाद्यम्॥५॥ ((इदनंचआय
तानिबाहुनेत्राणिचसप्रेम्णाहासस्यरसेनवीक्षितानिचवल्गुजल्पाश्चभगवतःएतैःसंमोहिताःवनिताःस्वैःस्वैरनेकैर्विभ्रमैस्तस्यश्रीकृष्णस्यमनो
विजेतुंहर्तुंनसमशकन्नशक्ताबभूवुःविभूम्नःपरिपूर्णस्य॥३॥तासांविभ्रमान्वर्णयन्नेवतद्दिवृणोतिस्मायेतिस्मायोगूढहसितंतद्युक्तःअवलोकलवः
कटाक्षःतेनदर्शितःसूचितोभावोऽभिप्रायःतेनहारिमनोहरणशीलंयद्भ्रूमंडलंतेनप्रहिताःप्रस्थापितायेसौरतामंत्रास्तेषुशौण्डैःप्रगल्भैरनङ्गस्यबा
णैःशरैरन्यैश्चकरणैःकामशास्त्रप्रसिद्धैःयस्येंद्रियंमनोविमथितुंक्षोभयितुं षोडशसहस्रमपिपत्न्योनशेकुरिति॥४॥अनुरागेणहासोऽवलोकश्चन
वसंगमेलालसमौत्सुक्यंचतेआद्यायस्यविभ्रमकदंबस्यतंभेजुः अनुरागहासावलोकनवसंगमलालसाद्यंभेजुरितिवातस्यमनोविजेतुंनशेकुरि

किंतु मत्युद्गमादिभिर्विभोस्तस्य दास्यं नित्यं विदधुरिति प्रौढभावे पिनवसंगमाद्यभिधानम् अगतसारत्वेनौत्सुक्येन च तत्र प्रतीतेः तेषामेव श्लोकानां प्रस्तावांतरे पुनः पुनराहृत्तिरतिसौन्दर्यात् ॥६॥ प्रासंगिकमुक्त्वा प्रस्तुतमाह तासामिति दश दश पुत्रा यासां तासां मध्ये अष्टौ महिष्यो याः प्राग्युक्तास्तत्पुत्रानिति ॥७।८।९।१०।११।१२॥ श्रीमानिति वसोः कुंतेर्वा विशेषणं ॥१३॥ भद्रो नाम एकलः एकः सोमकः अवरः कनीयान् एते कालिंद्याः सुता इति ॥१४॥ मा

प्रत्युद्गमासनवरार्हणपादशौचतांबूलविश्रमणवीजनगंधमाल्यैः ॥ केशप्रसारशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुः स्म दास्यम् ॥६॥ तासां या दशपुत्राणां कृष्णस्त्रीणां पुरोदिताः ॥ अष्टौ महिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणामि ते ॥७॥ चारुदेष्णः सुदेष्णश्च चारुदेहश्च वीर्यवान् ॥ सुचारुश्चारुगुप्तश्च भद्रचारुस्तथाऽपरः ॥८॥ चारुचन्द्रो विचारुश्च चारुश्च दशमो हरेः ॥ प्रद्युम्नप्रमुखा जाता रुक्मिण्यां नावमाः पितुः ॥९॥ भानुः सुभानुः स्वर्भानुः प्रभानुर्भानुमांस्तथा ॥ चन्द्रभानुर्बृहद्भानुरतिभानुस्तथाष्टमः ॥१०॥ श्रीभानुः प्रतिभानुश्च सत्यभामात्मजा दश ॥ सांबः सुमित्रः पुरुजिच्छतजिच्च सहस्रजित् ॥११॥ विजयश्चित्रकेतुश्च वसुमान्द्रविणः क्रतुः ॥ जांबवत्याः सुता ह्येते सांबाद्याः पितृसंमताः ॥१२॥ वीरश्चंद्रोऽश्वसेनश्च चित्रगुर्वेगवान्वृषः ॥ आमः शंकुर्वसुः श्रीमान्कुंतिर्नाग्नजितेः सुताः ॥१३॥ श्रुतः कविर्वृषो वीरः सुबाहुर्भद्र एकलः ॥ शांतिर्दर्शः पूर्णमासः कालिंद्याः सोमकोऽवरः ॥१४॥ प्रघोषो गात्रवान्सिंहो बलः प्रबल ऊर्ध्वगः ॥ माद्र्याः पुत्रा महाशक्तिः सह ओजोऽपराजितः ॥१५॥ वृको हर्षोऽनिलो गृध्रो वर्द्धनोऽन्नाद एव च ॥ महांशः पावनो वह्निर्मित्रविंदात्मजाः क्षुधिः ॥१६॥ संग्रामजिद्बृहत्सेनः शूरः प्रहरणोऽरिजित् ॥ जयः सुभद्रो भद्राया वाम आयुश्च सत्यकः ॥१७॥ दीप्तिमांस्ताम्रतप्ताद्या रोहिण्यास्तनया हरेः ॥ प्रद्युम्नाच्चानिरुद्धोऽभूद्रुक्मवत्यां महाबलः ॥१८॥ पुत्र्यां तु रुक्मिणो राजन्नाम्ना भोजकटे पुरे ॥ एतेषां पुत्रपौत्राश्च बभूवुः कोटिशो नृप ॥ मातरः कृष्णजातानां सहस्राणि च षोडश ॥१९॥

द्याः लक्ष्मणायाः ॥१५॥ क्षुधिश्च रशमः एते मित्रविंदात्मजाः ॥१६॥ संग्रामजित्प्रमुखाः सत्यकांताः भद्रायाः सुताः शैव्या नामापि से
वरोहिण्याः सुतानामुक्तिरन्यासामुपलक्षणार्थम् ॥१७।१८॥ एतेषामिति अन्येषामपि श्रीकृष्णपुत्राणां शतसंख्यस्त्रीषु पुत्राः पौत्राश्च कोटिशो बभूवुः त
[illegible] मातरः कृष्णजातानामिति [illegible] ॥१९॥ ॥ ॥ ॥

यः कृष्णं हन्तुं रन्ध्रं प्रतीक्षते स कथं प्रादादिति वैवाहिकं विवाहनिमित्तं ॥२०॥ [illegible] विप्रकृष्टमर्थं कथं जानीम इति चेत्तत्राह अनागतमिति अ-
तीन्द्रियमस्मदादीन्द्रियागोचरं विप्रकृष्टं दूरस्थं व्यवहितं कुड्याद्यन्तरितं ॥२१॥ तत्र उत नरं स्वयंवरे रुक्मवत्या वृतः सन् राज्ञो निर्जित्य जहारेति ॥२२॥ यद्यपि
श्रीकृष्णावमानितः तथापि वैरमनुस्मरन् अपि व्यतरत् प्रादात् अन्वमोदतेत्यर्थः ॥२३॥ सर्वासामप्येकैका कन्या तत्र सर्वविवाहोपलक्षणार्थं ज्येष्ठकन्याविवा-

राजोवाच ॥ कथं रुक्म्यरिपुत्राय प्रादाद्दुहितरं युधि । कृष्णेन परिभूतस्तं हन्तुं रन्ध्रं प्रतीक्षते । एतदाख्याहि मे विद्वन्द्विषोर्वैवाहिकं
मिथः ॥२०॥ अनागतमतीतं च वर्तमानमतीन्द्रियम् ॥ विप्रकृष्टं व्यवहितं सम्यक्पश्यन्ति योगिनः ॥२१॥ श्रीशुक उवाच ॥ वृतः
स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया ॥ राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥२२॥ यद्यप्यनुस्मरन्वैरं रुक्मी कृष्णावमानितः ॥
व्यतरद्भागिनेयाय सुतां कुर्वन्स्वसुः प्रियम् ॥२३॥ रुक्मिण्यास्तनयां राजन्कृतवर्मसुतो बली ॥ उपयेमे विशालाक्षीं कन्यां चारु-
मतीं किल ॥२४॥ दौहित्रायानिरुद्धाय पौत्रीं रुक्म्याददाद्धरेः ॥ रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ॥ जानन्नधर्मं तद्यौनं स्नेह-
पाशानुबन्धनः ॥२५॥ तस्मिन्नभ्युदये राजन्रुक्मिणी रामकेशवौ ॥ पुरं भोजकटं जग्मुः साम्बप्रद्युम्नकादयः ॥२६॥ तस्मिन्नि-
वृत्त उद्वाहे कालिङ्गप्रमुखा नृपाः ॥ दृप्तास्ते रुक्मिणं प्रोचुर्बलमक्षैर्विनिर्जय ॥२७॥ अनक्षज्ञो ह्ययं राजन्नपि तद्व्यसनं महत् ॥
इत्युक्तो बलमाहूय तेनाक्षै रुक्म्यदीव्यत ॥२८॥ शतं सहस्रमयुतं रामस्तत्राददे पणम् ॥ तं तु रुक्म्यजयत्तत्र कालिङ्गः प्राहसद्बल-
म् ॥ दन्तान्सन्दर्शयन्नुच्चैर्नामृष्यत्तद्धलायुधः ॥२९॥ ततो लक्षं रुक्म्यगृह्णाद्ग्लहं तत्राजयद्बलः ॥ जितवानहमित्याह रुक्मी
कैतवमाश्रितः ॥३०॥ मन्युना क्षुभितः श्रीमान्समुद्र इव पर्वणि ॥ जात्यारुणाक्षोऽतिरुषा न्यर्बुदं ग्लहमाददे ॥३१॥ तं चापि जित-
वान्रामो धर्मेण छलमाश्रितः ॥ रुक्मी जितं मयात्रेमे वदन्तु प्राश्निका इति ॥३२॥ तदाब्रवीन्नभोवाणी बलेनैव जितो ग्लहः
॥ धर्मतो वचनेनैव रुक्मी वदति वै मृषा ॥३३॥ तामनादृत्य वैदर्भो दुष्टराजन्यचोदितः ॥ सङ्कर्षणं परिहसन्बभाषे कालनोदि-
तः ॥३४॥

हमाह रुक्मिण्या इति ॥२४॥ यौनं विवाहः तद्यौनमधर्मं जानन्निति द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत् इत्यादि लोकविरोधात् अस्व-
र्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नत्विति निषेधाच्चेत्यर्थः ॥२५॥२६॥ लोकविरुद्धाचरणफलं वक्तुमाह तस्मिन्निति ॥२७॥ अदीव्यत् क्रीडितवान् ॥२८॥२९॥
निष्काणां लक्षं ग्लहं पणं कृतवान् कैतवं कपटं ॥३०॥ न्यर्बुदं दशकोटीः ग्लहं क्षुभितो राम आददे ॥३१॥ छलमाश्रितो रुक्मी मया जितमित्याह ॥३२॥
॥३३॥३४॥

॥ ३५ ॥ नृम्णसंसदि मंगलसभायाम् ॥ ३६ । ३७ । ३८ । ३९ ॥ सूर्येयानेनोदयासिद्धाः अखिला अर्थाः अभ्युदयमात्रवधाद्यो येषां ते ॥ ४० ॥ इति श्रीभागवते महापुराणे दशमस्कंधे टी॰ अनिरु॰ हे रुक्मिवधोनाम एकषष्टितमोऽध्यायः ॥ ६१ ॥ द्विषष्टितमे भोक्तमनिरुद्धस्य रोधनम् । कन्यया रममाणस्य बाणे



नैवाक्षकोविदा यूयं गोपाला वनगोचराः ॥ अक्षैर्दीव्यंति राजानो बाणैश्च न भवादृशाः ॥ ३५ ॥ रुक्मिणैवमधिक्षिप्तो राजभिश्चोपहासितः ॥ क्रुद्धः परिघमुद्यम्य जघ्ने तं नृम्णसंसदि ॥ ३६ ॥ कलिंगराजं तरसा गृहीत्वा दशमे पदे ॥ दंतानपातयत्क्रुद्धो योहसद्विवृतैर्द्विजैः ॥ ३७ ॥ अन्ये निर्भिन्नबाहूरुशिरसो रुधिरोक्षिताः ॥ राजानो दुद्रुवुर्भीता बलेन परिघार्दिताः ॥ ३८ ॥ निहते रुक्मिणि श्याले नाब्रवीत्साध्वसाधु वा ॥ रुक्मिणीबलयो राजन्स्नेहभंगभयाद्धरिः ॥ ३९ ॥ ततोऽनिरुद्धं सह सूर्यया वरं रथं समारोप्य ययुः कुशस्थलीम् ॥ रामादयो भोजकदाहर्श्याहाः सिद्धाखिलार्था मधुसूदनाश्रयाः ॥ ४० ॥ इति श्रीभागवते महापुराणे दशमस्कंधे उत्तरार्द्धे अनिरुद्धविवाहे रुक्मिवधो नाम एकषष्टितमोऽध्यायः ॥ ६१ ॥ राजोवाच ॥ बाणस्य तनयामूषामुपयेमे यदूत्तमः ॥ तत्र युद्धमभूद्घोरं हरिशंकरयोर्महत् ॥ एतत्सर्वं महायोगिन्समाख्यातुं त्वमर्हसि ॥ १ ॥ श्रीशुक उवाच ॥ बाणः पुत्रशतज्येष्ठो बलेरासीन्महात्मनः ॥ येन वामनरूपाय हरयेऽदायि मेदिनी ॥ २ ॥ तस्यौरसः सुतो बाणः शिवभक्तिरतः सदा ॥ मान्यो वदान्यो धीमांश्च सत्यसंधो दृढव्रतः ॥ ३ ॥ शोणिताख्ये पुरे रम्ये स राज्यमकरोत्पुरा ॥ तस्य शंभोः प्रसादेन किंकरा इव तेऽमराः ॥ सहस्रबाहुर्वाद्येन तांडवेऽतोषयन्मृडम् ॥ ४ ॥ भगवान्सर्वभूतेशः शरण्यो भक्तवत्सलः ॥ वरेण छंदयामास स तं वव्रे पुराधिपम् ॥ ५ ॥ स एकदाह गिरिशं पार्श्वस्थं वीर्यदुर्मदः ॥ किरीटेनार्कवर्णेन संस्पृशंस्तत्पदांबुजम् ॥ ६ ॥ नमस्ये त्वां महादेव लोकानां गुरुमीश्वरम् ॥ पुंसामपूर्णकामानां कामपूरामरांघ्रिपम् ॥ ७ ॥ दोःसहस्रं त्वया दत्तं परं भाराय मेऽभवत् ॥ त्रिलोक्यां प्रतियोद्धारं न लेभे त्वदृते समम् ॥ ८ ॥ कंडूत्या निभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् ॥ आद्यायांचूर्णयन्नद्रीन्भीतास्तेपि प्रदुद्रुवुः ॥ ९ ॥

॥ ९ नबहुवाहुना ॥ १ ॥ अनिरुद्धो हृते उन्यस्मिन्बाणयादवसंयुगे ॥ श्रीकृष्णः श्रीहरं जित्वा बाणवाहनयाच्छिनत् ॥ ० ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ पुराधिपं पुरपालकं ॥ ५ ॥ ६ ॥ कामान्पूरयतीति कामपूरः स चासावमरांघ्रिपः कल्पतरुस्तं ॥ ७ ॥ ८ ॥ दिग्गजानभिमन्यमानो दिशोर्भिर्युयुत्सुर्दिग्गजानभिगच्छन ॥ ९ ॥

॥१०॥स्ववीर्यस्यनशनंनाशनंकेतुभंगंप्रतीक्षमाणः॥११॥ [illegible] मेवेतिप्राद्युम्निनाअनिरुद्धेनतत्रापिस्वप्नेप्राप्य
तंकान्तमपश्यन्तीसाउत्तस्थौ॥१३॥ततःकिंवृत्तंतदाहबाणस्येति॥१४॥हस्तग्राहंभर्तारम्॥१५।१६।१७।१८॥त्वयादृष्टएषांमध्येकोवाभवेदिति

तच्छ्रुत्वाभगवान्क्रुद्धःकेतुस्तेभज्यतेयदा॥त्वद्दर्पघ्नंभवेन्मूढसंयुगंमत्समेनते॥१०॥इत्युक्तःकुमतिर्हृष्टःस्वगृहंप्रा
विशन्नृप॥प्रतीक्षन्गिरिशादेशंस्ववीर्यनशनंकुधीः॥११॥तस्योषानामदुहितास्वप्नेप्राद्युम्निनारतिम्॥कन्यालभतकान्ते
नप्रागदृष्टश्रुतेनच॥१२॥सातत्रतमपश्यन्तीक्वासिकान्तेतिवादिनी॥सखीनांमध्यउत्तस्थौविह्वलाव्रीडिताभृशम्॥१३॥
बाणस्यमंत्रीकुंभांडश्चित्रलेखाचतत्सुता॥सख्यपृच्छत्सखीमूषांकौतूहलसमन्विता॥१४॥कंत्वंमृगयसेसुभ्रूःकीदृशो
स्तेमनोरथः॥हस्तग्राहंनतेद्यापिराजपुत्र्युपलक्षये॥१५॥उषोवाच॥दृष्टःकश्चिन्नरःस्वप्नेश्यामःकमललोचनः॥पीत
वासाबृहद्बाहुर्योषितांहृदयंगमः॥१६॥तमहंमृगयेकान्तंपाययित्वाधरंमधु॥क्वापियातःस्पृहयतींक्षिप्त्वामांवृजिनार्णवे
॥१७॥चित्रलेखोवाच॥व्यसनंतेऽपकर्षामित्रिलोक्यांयदिभाव्यते॥तमानेष्येनरंयस्तेमनोहर्तातमादिश॥१८॥इत्युक्त्वा
देवगंधर्वसिद्धचारणपन्नगान्॥दैत्यविद्याधरान्यक्षान्मनुजांश्चयथाऽलिखत्॥१९॥मनुजेषुचसावृष्णीन्शूरमानक
दुंदुभिम्॥व्यलिखद्रामकृष्णौचप्रद्युम्नंवीक्ष्यलज्जिता॥२०॥अनिरुद्धंविलिखितंवीक्ष्योषावाङ्मुखीह्रिया॥सोऽसाव
सावितिप्राहस्मयमानामहीपते॥२१॥चित्रलेखातमाज्ञायपौत्रंकृष्णस्ययोगिनी॥ययौविहायसाराजन्द्वारकांकृष्णपा
लिताम्॥२२॥तत्रसुप्तंसुपर्यंकेप्राद्युम्निंयोगमास्थिता॥गृहीत्वाशोणितपुरंसख्यैप्रियमदर्शयत्॥२३॥साचतंसुंदरवरं
विलोक्यमुदितानना॥दुष्प्रेक्ष्येस्वगृहेपुंभीरेमेप्राद्युम्निनासमम्॥२४॥परार्घ्यवासःस्रग्गंधधूपदीपासनादिभिः॥पान
भोजनभक्ष्यैश्चवाक्यैःशुश्रूषयार्चितः॥२५॥गूढःकन्यापुरेशश्वत्प्रवृद्धस्नेहयातया॥नाहर्गणान्सबुबुधेऊषयाऽपहृतेंद्रि
यः॥२६॥तांतथायदुवीरेणभुज्यमानांहतव्रताम्॥हेतुभिर्लक्षयांचक्रुरापीतांदुरवच्छदैः॥२७॥ १९ देवादीन्यथायथावत्पटेऽलि

खत्॥१९॥प्रद्युम्नंलिखितंवीक्ष्यश्वशुरोयमितिलज्जिता॥२०।२१।२२॥शोणितपुरंनीत्वा॥२३॥पुंभिर्दुष्प्रेक्ष्येप्रेक्षितुमशक्ये॥२४॥सचपरार्घ्यैर्मू
ल्यैर्वासःस्रग्गंधादिभिःशुश्रूषणपूर्वकमर्चितःसन्॥२५॥तयाऽपहृतेंद्रियोऽहर्गणान्दिनसमूहान्नबुबुधे॥२६॥आपीतांअतिहृष्टांदुरवच्छदैःछाद

विचेष्टितं विरुद्धाचरणम् ॥ २८ ॥ अनपायिभिः अपायः अपसर्पणं प्रमादो वा तद्रहितैः पाठांतरे दुष्टा प्रेष्यास्त्वीयस्यास्तस्याः पुंभिर्दूषणं कृतो वेतिन जानीमहइत्यर्थः ॥ २९ ॥ ३० ॥ कामस्यात्मनो देहाज्जातं ॥ ३१ ॥ अभिनृम्णया सर्वमंगलया तस्या अंगसंगेन स्तनकुंकुमं यस्यां स्रजि तां बाह्वो मध्ये वक्षसि दधानं मधुमल्लिकाः वसंतभवा मल्लिकाः तदाश्रितां तस्याग्रइत्यार्षः संधिस्तस्या अग्रइत्यर्थः ॥ ३२ ॥ आततायिभिरुद्यतशस्त्रैर्मा

भटा आवेदयांचक्रू राजंस्ते दुहितुर्वयम् ॥ विचेष्टितं लक्षयामः कन्यायाः कुलदूषणम् ॥ २८ ॥ अनपायिभिरस्माभिर्गुप्तायाश्च गृहे प्रभो ॥ कन्याया दूषणं पुंभिर्दुष्प्रेक्ष्याया न विद्महे ॥ २९ ॥ ततः प्रव्यथितो बाणो दुहितुः श्रुतदूषणः ॥ त्वरितः कन्यकागारं प्राप्तोऽद्राक्षीद्यदूद्वहम् ॥ ३० ॥ कामात्मजं तं भुवनैकसुन्दरं श्यामं पिशंगांबरमंबुजेक्षणम् ॥ बृहद्भुजं कुंतलकुंडलत्विषास्मितावलोकेन च मंडिताननम् ॥ ३१ ॥ दीव्यंतमक्षैः प्रिययाभिनृम्णया तदंगसंगस्तनकुंकुमस्रजम् ॥ बाह्वोर्दधानं मधुमल्लिकाश्रितां तस्याग्र आसीनमवेक्ष्य विस्मितः ॥ ३२ ॥ स तं प्रविष्टं वृतमाततायिभिर्भटैरनेकैरवलोक्य माधवः ॥ उद्यम्य मौर्वं परिघं व्यवस्थितो यथांतको दंडधरो जिघांसया ॥ ३३ ॥ जिघृक्षया तान्परितः प्रसर्पतः शुनो यथा सूकरयूथपोऽहनत् ॥ ते हन्यमाना भवनाद्विनिर्गता निर्भिन्नमूर्धोरुभुजाः प्रदुद्रुवुः ॥ ३४ ॥ तं नागपाशैर्बलिनंदनो बली घ्नंतं स्वसैन्यं कुपितो बबंध ह ॥ उषा भृशं शोकविषादविह्वला बद्धं निशम्याश्रुकलाक्ष्यरोदिषीत् ॥ ३५ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे अनिरुद्धबंधो नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥ श्रीशुक उवाच ॥ अपश्यतां चानिरुद्धं तद्बंधूनां च भारत ॥ चत्वारो वार्षिका मासा व्यतीयुरनुशोचताम् ॥ १ ॥ नारदात्तदुपाकर्ण्य वार्तां बद्धस्य कर्म च ॥ प्रययुः शोणितपुरं वृष्णयः कृष्णदेवताः ॥ २ ॥ प्रद्युम्नो युयुधानश्च गदः सांबोऽथ सारणः ॥ नंदोपनंदभद्राद्या रामकृष्णानुवर्तिनः ॥ ३ ॥ अक्षौहिणीभिर्द्वादशभिः समेताः सर्वतो दिशम् ॥ रुरुधुर्बाणनगरं समंतात्सात्वतर्षभाः ॥ ४ ॥ भज्यमानपुरोद्यानप्राकाराट्टालगोपुरम् ॥ प्रेक्षमाणो रुषाविष्टस्तुल्यसै

न्यो [illegible]



धवोः निरुद्धमौर्वं मुसलौहं विशेषस्तन्निर्मितम् ॥ ३३ ॥ ३५ ॥ शोकविषादाभ्यां विह्वला अवशा अश्रूणां कला बिंदवो ययोस्ते अक्षिणी यस्याः सा ॥ ३५ ॥ इति [illegible] द्विषष्टितमोऽध्यायः ॥ ६२ ॥ [illegible]

[illegible]

सुतः स्कंदः तत्सहितैः प्रमथैर्गणैः रामकृष्णाभ्यां युयुधे ॥६॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ प्रत्यस्त्राण्येवं ब्रह्मास्त्रस्येति नैजं नारायणास्त्रम् ॥१३॥ १४॥ शिखिना मयूरेण वाहनेन ॥१५॥ तयोरनीकानि हतो नाथो येषां तानि ॥१६॥ १७॥ १८॥ १९॥ २०॥ अनिरीक्षमाणस्तिर्यङ्मुखो बभूव



बाणार्थे भगवान्रुद्रः ससुतैः प्रमथैर्वृतः ॥ आरुह्य नंदिवृषभं युयुधे रामकृष्णयोः ॥६॥ आसीत्सुतुमुलं युद्धमद्भुतं लोमहर्षणम् ॥ कृष्णशंकरयो राजन्प्रद्युम्नगुहयोरपि ॥७॥ कुंभांडकूपकर्णाभ्यां बलेन सह संयुगः ॥ सांबस्य बाणपुत्रेण बाणेन सह सात्यकेः ॥८॥ ब्रह्मादयः सुराधीशा मुनयः सिद्धचारणाः ॥ गंधर्वाप्सरसो यक्षा विमानैर्द्रष्टुमागमन् ॥९॥ शंकरानुचराञ्शौरिर्भूतप्रमथगुह्यकान् ॥ डाकिनीर्यातुधानांश्च वेतालान्सविनायकान् ॥१०॥ प्रेतमातृपिशाचांश्च कूष्माण्डान्ब्रह्मराक्षसान् ॥ द्रावयामास तीक्ष्णाग्रैः शरैः शार्ङ्गधनुश्च्युतैः ॥११॥ पृथग्विधानि प्रायुंक्त पिनाक्यस्त्राणि शार्ङ्गिणे ॥ प्रत्यस्त्रैः शमयामास शार्ङ्गपाणिरविस्मितः ॥१२॥ ब्रह्मास्त्रस्य च ब्रह्मास्त्रं वायव्यस्य च पार्वतम् ॥ आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च ॥१३॥ मोहयित्वा तु गिरिशं जृंभणास्त्रेण जृंभितम् ॥ बाणस्य पृतनां शौरिर्जघानासिगदेषुभिः ॥१४॥ स्कन्दः प्रद्युम्नबाणौघैरर्द्यमानः समंततः ॥ असृग्विमुंचन्गात्रेभ्यः शिखिनापाक्रमद्रणात् ॥१५॥ कुंभांडः कूपकर्णश्च निपेतुर्मुसलार्दितौ ॥ दुद्रुवुस्तदनीकानि हतनाथानि सर्वतः ॥१६॥ विशीर्यमाणं स्वबलं दृष्ट्वा बाणोऽत्यमर्षणः ॥ कृष्णमभ्यद्रवत्संख्ये रथी हित्वैव सात्यकिम् ॥१७॥ धनूंष्याकृष्य युगपद्बाणः पंचशतानि वै ॥ एकैकस्मिञ्शरौ द्वौ द्वौ संदधे रणदुर्मदः ॥१८॥ तानि चिच्छेद भगवान्धनूंषि युगपद्धरिः ॥ सारथिं रथमश्वांश्च हत्वा शंखमपूरयत् ॥१९॥ तन्माता कोटरा नाम नग्ना मुक्तशिरोरुहा ॥ पुरोऽवतस्थे कृष्णस्य पुत्रप्राणरिरक्षया ॥२०॥ ततस्तिर्यङ्मुखो नग्नामनिरीक्षन्गदाग्रजः ॥ बाणश्च तावद्विरथश्छिन्नधन्वाविशत्पुरम् ॥२१॥ विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात् ॥ अभ्यधावत दाशार्हं दहन्निव दिशो दश ॥२२॥ अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरम् ॥ माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ॥२३॥ ७ ॥ ६ ॥ ७ ॥

ति ॥२१॥ ज्वरस्तु योद्धुमभ्यधावदिति ॥२२॥ श्रीनारायणः शीतज्वरमसृजत् माहेश्वरः समाक्रन्दन युयुधे ॥ २३ ॥ श्रीकृष्णाय नमः ॥ ७ ॥

॥२४॥आत्मानंपरमशक्तिमंतंमन्यमानःश्रीकृष्णंतापयितुंप्रवृत्तःस्वयमेवतप्तःसन्तंपरमेश्वरंज्ञात्वास्तुवन्नमस्करोतिनमामीतित्वात्वांअनंतश
क्तिंनमामिकुतःपरेषांब्रह्मादीनामीशम्तत्रहेतुःसर्वात्मानंसर्वस्यात्मानंचेतयितारम्तत्कुतःकेवलंशुद्धंज्ञप्तिमात्रंचैतन्यघनम्तदेवंसर्वचेतयि
तृत्वेनपरमेश्वरत्वमुक्तम्किंचविश्वसृष्ट्यादिहेतुत्वादपीत्याहविश्वोत्पत्तीतिनन्वेवंभूतंब्रह्मप्रसिद्धंनाहमितितत्राहयत्तद्ब्रह्मेतियद्ब्रह्मतदेवत्व
मित्यर्थःकिंतद्ब्रह्मेतिअतआहब्रह्मलिंगंब्रह्मणावेदेनलिंग्यतेद्योत्यतइतितत्कुतःप्रशान्तंसर्वक्रियारहितत्वान्नसाक्षाद्वाच्यमितिभावः॥२५॥किंच
यावत्सविशेषंवस्तुतत्रचवयंप्रभवामःत्वयितुसर्वविशेषातीतेनकस्यापिप्रभुत्वंकिन्तुत्वमेवसर्वस्यप्रभुरितिज्ञप्तिमात्रत्वंविवृण्वन्स्तौतिकाल इति
कालःक्षोभकःकर्मनिमित्तंदैवंफलाभिमुखमभिव्यक्तंदैवंस्वभावस्तत्संस्कारःजीवस्तद्वान्द्रव्यंभूतसूक्ष्माणिक्षेत्रंशरीरम्प्राणःसूत्रम्आत्माअहंका

माहेश्वरःसमाक्रन्दन्वैष्णवेनबलार्दितः॥अलब्ध्वाभयमन्यत्रभीतोमाहेश्वरोज्वरः॥शरणार्थीहृषीकेशंतुष्टावप्रयतांजलिः
॥२४॥ज्वरउवाच॥नमामित्वाऽनंतशक्तिंपरेशंसर्वात्मानंकेवलंज्ञप्तिमात्रम्॥विश्वोत्पत्तिस्थानसंरोधहेतुंयत्तद्ब्रह्मब्रह्म।
लिंगंप्रशान्तम्॥२५॥कालोदैवंकर्मजीवःस्वभावोद्रव्यंक्षेत्रंप्राणआत्माविकारः॥तत्संघातोबीजरोहप्रवाहस्त्वन्मायैषातन्नि
षेधंप्रपद्ये॥२६॥नानाभावैर्लीलयैवोपपन्नैर्देवान्साधूंल्लोकसेतून्बिभर्षि॥हंस्युन्मार्गान्हिंसयावर्तमानाञ्जन्मैतत्तेभारहा
रायभूमेः॥२७॥तप्तोऽहंतेतेजसादुःसहेनशान्तोग्रेणात्युल्बणेनज्वरेण॥तावत्तापोदेहिनांतेंघ्रिमूलंनोसेवेरन्यावदाशानु
बद्धाः॥२८॥श्रीभगवानुवाच॥त्रिशिरस्तेप्रसन्नोऽहंव्येतुतेमज्ज्वराद्भयम्॥योनौस्मरतिसंवादंतस्यत्वन्नभवेद्भयम्॥२९॥इ
त्युक्तोऽच्युतमानम्यगतोमाहेश्वरोज्वरः॥बाणस्तुरथमारूढःप्रागाद्योत्स्यञ्जनार्दनम्॥३०॥ (रःविकारएकादशेंद्रियाणिमहाभूता

निचेतिषोडशकःतत्संघातोलिंगदेहःएतस्यचबीजरोहवत्प्रवाहःरोहोऽङ्कुरःदेहाद्बीजरूपम्कर्मततोऽङ्कुररूपोदेहःततःपुनरेवमितिप्रवाहःएषात्व
न्मायातस्यानिषेधःअपोहोयस्मिन्तंत्वांनिषेधावधिभूतंप्रपद्येभजइति।२६।ननुदेवकीतनयस्यमेकथमेवंभूतत्वंतत्राहनानाभावैरितिसर्वोपाधि
विनिर्मुक्तएवत्वंयथालीलयास्वीकृतैर्मत्स्याद्यवतारैःदेवान्बिभर्षिपालयसितदर्थंलोकसेतून्वर्णाश्रमधर्मान्तदर्थंतदनुष्ठातॄन्साधूंन्तदर्थंत्वे
नउन्मार्गान्दैत्यादीन्हंसिसंहरसिएवमेतदपितवजन्मभूमेर्भारहरणायलीलावतारोऽयंनकस्यापित्वंतनयइत्यर्थः॥२७॥अतोऽज्ञानतस्त्वदभि
[illegible]तेजसात्वत्तेजोरूपेणज्वरेणशान्तोग्रेणशीतज्वरेणपरसंतापकस्ययुक्तएवतापइतिचेदतआहतावदिति
[illegible]त्रिशिरःव्येतुअपयातुमद्रूपापालकःसन्[illegible]माहयःस्मरतिनौआवयोःइमंसंवादंयः
[illegible]॥२९॥३०॥

॥३१॥३२॥३३॥ भक्तरक्षणार्थं श्रीरुद्रो भगवंतं स्तौति त्वं हीति अयमर्थः त्वां अज्ञात्वा अपश्यंत इति न चित्रं यतस्त्वं वाङ्मये ब्रह्मण्यपि गूढं ब्रह्म अभि
धाविषयत्वात् कुतः परं ज्योतिः ज्योतिषामपि प्रकाशकत्वात् अविषय इत्यर्थः कथं तर्हि प्रतीतिस्तत्र आह यमिति अमलात्मनां स्वतः प्रकाश इत्यर्थः॥
३४॥ आस्तां तावन्निर्गुणस्य तव ज्ञानं लीलयाधिष्ठितस्त्वया यो विराड्विग्रहः सोपि न ज्ञायते उदुंबरफलांतर्वर्तिमशकैरिवोदुंबरफलमित्याशयेन विराट्
रूपेण स्तौति द्वाभ्यां नाभिरिति यस्य नभआदयो नाभ्याद्यवयवाः स भवान् लोककल्पः पुरुष इत्युत्तरेणान्वयः नभो यस्य नाभिः अग्निर्मुखं अंबु रेतः द्यौः शी
र्षं आशा दिशः श्रुतिः श्रवणेंद्रियं उर्वी अंघ्रिः चंद्रो मनः अर्को दृक् अहं श्रीशिव आत्मा अहंकारः समुद्रो जठरं इंद्रः भुजा बाहुः इंद्रादयो लोकपाला बाहव
इत्यर्थः॥३५॥ औषधयो रोमाणि यच्छब्दावृत्तिः स्पष्टार्था अंबुवाहाः केशाः विरिंच्यो धिषणा बुद्धिः प्रजापतिर्विसर्गो मेढ्रं धर्मो हृदयं लोकैः कल्प्यते अव

ततो बाहुसहस्रेण नानायुधधरोऽसुरः॥ मुमोच परमक्रुद्धो बाणांश्चक्रायुधे नृप॥३१॥ तस्यास्यतोऽस्त्राण्यसकृच्चक्रेण क्षुर
नेमिना॥ चिच्छेद भगवान्बाहून् शाखा इव वनस्पतेः॥३२॥ बाहुषु च्छिद्यमानेषु बाणस्य भगवान्भवः॥ भक्तानुकंप्युपव्रज्य
चक्रायुधमभाषत॥३३॥ श्रीरुद्र उवाच॥ त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये॥ यं पश्यन्त्यमलात्मान आकाशमिव के
वलम्॥३४॥ नाभिर्नभोऽग्निर्मुखमंबु रेतो द्यौः शीर्षमाशाः श्रुतिरंघ्रिरुर्वी॥ चंद्रो मनो यस्य दृगर्क आत्मा अहं समुद्रो जठरं
भुजेन्द्रः॥३५॥ रोमाणि यस्यौषधयोऽंबुवाहाः केशा विरिंच्यो धिषणा विसर्गः॥ प्रजापतिर्हृदयं यस्य धर्मः स वै भवान्पुरुषो लो
ककल्पः॥३६॥ तवावतारोऽयमकुंठधामन्धर्मस्य गुप्त्यै जगतो भवाय॥ वयं च सर्वे भवतानुभाविता विभावयामो भुवनानि स
प्त॥३७॥ त्वमेक आद्यः पुरुषोऽद्वितीयस्तुर्यः स्वदृग्घेतुरहेतुरीशः॥ प्रतीयसेऽथापि यथाविकारं स्वमायया सर्वगुणप्रसिद्ध्यै

कल्प्यत इति लोककल्पः॥३६॥ न तु तत्त्वतः प्रादेशिकशरीरस्य कथं नभो नाभित्वादीत्यत आह तवेति हे अकुंठधामन् अप्रच्युतस्वरूप भवाय अभ्युदया
य न केवलमेतावत् किंतु अस्मदनुग्रहार्थमपीत्याह वयं चेति सर्वे लोकपालास्त्वया पालिताः सप्तापि भुवनानि पालयाम इति॥३७॥ ननु यदि विभावयिता
रो यूयं विभाव्यानि च भुवनानि संति तर्हि कथमुक्तं त्वं हि ब्रह्मेति न हि ब्रह्म त्वं मम सजातीयविजातीयभेदः संभवतीत्यत आह त्वमिति एकः सजातीयभेदर
हितः कुतः आद्यः पुरुषः पुरुषाणां अवस्थात्रयवतामाद्यः प्रकृतिभूतः पुरुषः कुतस्तुरीयः शुद्ध इत्यर्थः तदपि कुतः स्वदृक् स्वप्रकाशज्ञानरूपः शुद्धो दे
ह्युपाधियोगाज्जीवा जायंते यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंत्येवमेवास्मादात्मनः सर्व एवात्मानो व्युच्चरंतीति श्रुतेः अतः सजातीयरहितः एकं
चा द्वितीयः विजातीयरहितोपि कुतः हेतुः सर्वस्य तथा स्वयं हेतुरहितश्चेति कथं तर्हि प्रतिशरीरं जीवभेदः प्रतीयते अत आह प्रतीयस इति सर्वगु

तर्हि किं अहमेव संसारीत्युच्यते नहि नहीति सदृष्टान्तमाह यथैवेति हे भूमन् स्वयाच्छायया मेघलक्षणया परदृष्ट्यापिहितः छादितोऽपि सूर्यः छायां मेघं च रूपाणि च मेघान्तरितान् घटादीनपि संचकास्ति प्रकाशयति एवं गुणेनाहंकारेण स्वकार्येण जीवावरकेण तद्दृष्ट्यापिहितोऽपि गुणान् सत्वादीन् उपाधीन् गुणिनश्च तदुपहितान् जीवानपि चकास्ति आत्मप्रदीपः स्वप्रकाशः अतः सर्वसाक्षिणस्तव न संसार इत्यर्थः ॥ ३९ ॥ किंच मायाश्रयस्यान्यान्मोहयतस्तव कुतः संसृतिरित्याशयेनाह यन्मायेति पुत्रादिषु प्रसक्ताः वृजिनार्णवे दुःखसागरे उन्मज्जन्ति देवादियोनिषु निमज्जन्ति स्थावरादिषु तदुक्तं वायवीये विपर्ययश्च भवति ब्रह्मत्वस्थावरत्वयोरिति ॥ ४० ॥ एवं जीवेश्वरव्यवस्थां निरूप्येदानीं अभक्तं निन्दति द्वाभ्यां देवेति देवं नत्व पाक



यथैव सूर्यः पिहितः स्वच्छायया च्छायां च रूपाणि च संचकास्ति ॥ एवं गुणेनापिहितो गुणांस्त्वमात्मप्रदीपो गुणिनश्च भूमन् ॥ ३९ ॥ यन्मायामोहितधियः पुत्रदारगृहादिषु ॥ उन्मज्जन्ति निमज्जन्ति प्रसक्ता वृजिनार्णवे ॥ ४० ॥ देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः ॥ यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः ॥ ४१ ॥ यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् ॥ विपर्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजन् ॥ ४२ ॥ अहं ब्रह्माऽथ विबुधा मुनयश्चामलाशयाः ॥ सर्वात्मना प्रपन्नास्त्वामात्मानं प्रेष्ठमीश्वरम् ॥ ४३ ॥ तं त्वा जगत्स्थित्युदयान्तहेतुं समं प्रशान्तं सुहृदात्मदैवम् ॥ अनन्यमेकं जगदात्मकेतं भवापवर्गाय भजाम देवम् ॥ ४४ ॥ अयं ममेष्टो दयितोऽनुवर्ती मयाऽभयं दत्तममुष्य देव ॥ संपाद्यतां तद्भवतः प्रसादो यथा हि ते दैत्यपतौ प्रसादः ॥ ४५ ॥ श्रीभगवानुवाच ॥ यदात्थ भगवंस्त्वं नः करवाम प्रियं तव ॥ भवतो यद्व्यवसितं तन्मे साध्वनुमोदितम् ॥ ४६ ॥ अवध्योऽयं ममाप्येष वैरोचनसुतोऽसुरः ॥ प्रल्हादाय वरो दत्तो न वध्यो मे तवान्वयः ॥ ४७ ॥ द

॥ दर्पोपशमनायास्य प्रवृक्णा बाहवो मया ॥ सूदितं च बलं भूरि यच्च भारायितं भुवः ॥ ४८ ॥

नौधर्मसेण दत्तं नृदेहमिमं लब्ध्वाऽपीति ॥ ४१ ॥ शोच्यत्वे हेतुः यस्त्वामिति विपर्ययाः विपरीताः अनात्मप्रियाः नीश्वरायेन्द्रियार्थाः पुत्रादयस्त
दर्थम् ॥ ४२ ॥ अहमन्ये च शुद्धमनसस्त्वामेव भक्ता इत्याह अहमिति ॥ ४३ ॥ भगवतो भजनीयत्वे हेतून्वदन् तद्भक्तिं प्रार्थयते तं त्वेति समत्वे हे
तुः प्रशान्तमिति सुहृत्त्वमाह सुहृदात्मदैवं सुहृद्बुद्धिप्रवर्तकत्वात् आत्मा च सर्वात्मकत्वात् एवंभूतं दैवमीश्वरं त्वां न चान्यो भजनीयोऽस्ती
त्याह अनन्यं एकं समानासमानजातीयरहितं ततः कुतः जगतामात्मनो च केतं तमधिष्ठानम् ॥ ४४ ॥ स्वयं भक्तिं प्रार्थ्य स्वभक्तस्याभीष्टं प्रार्थ
[illegible]

अनुगृह्णातिचत्वार इति॥४९॥सहवध्वाउषया॥५०॥रुद्रानुमोदितइतितदभिप्रेतस्यैवबाणभुजभंगस्यकृतत्वात्॥५१॥पौरादिभिरभ्युद्यतःअभिमुखआगत्यसत्कृतः॥५२॥५३॥इतिदशमेटीकायांत्रिषष्टितमः॥६३॥चतुःषष्टितमेकृष्णोनृगंशापाद्विमोचयन्।ब्रह्मस्वहारिदोषोक्त्याराज्ञोदमानशिक्षयत्॥१॥विभूतिभाग्यभोगादिमदोन्नद्धमनोरथान्।अन्वशासद्यदून्कृष्णोनृगोद्धारप्रसंगतः॥ग॥१॥पिपासिताःतृषिताःजलंविचिन्वन्तःसर्वजीवं॥

चत्वारोस्यभुजाःशिष्टाभविष्यत्यजरामरः॥पार्षदमुख्योभवतोनकुतश्चिद्भयोऽसुरः॥४९॥इतिलब्ध्वाभयंकृष्णंप्रणम्यशिरसाऽसुरः॥प्राद्युम्निंरथमारोप्यसवध्वासमुपानयत्॥५०॥अक्षौहिण्यापरिवृतंसुवासःसमलंकृतम्॥सपत्नीकंपुरस्कृत्यययौरुद्रानुमोदितः॥५१॥स्वराजधानींसमलंकृतांध्वजैःसतोरणैरुक्षितमार्गचत्वराम्॥विवेशशंखानकदुंदुभिस्वनैरभ्युद्यतःपौरसुहृद्द्विजातिभिः॥५२॥यएवंकृष्णविजयंशंकरेणचसंयुगम्॥संस्मरेत्प्रातरुत्थायनतस्यस्यात्पराजयः॥५३॥इतिश्रीभागवतेम०द०अनिरुद्धानयनंनामत्रिषष्टितमोऽध्यायः॥६३॥श्रीशुकउवाच॥एकदोपवनंराजन्जग्मुर्यदुकुमारकाः॥विहर्तुंसांबप्रद्युम्नचारुभानुगदादयः॥१॥क्रीडित्वासुचिरंतत्रविचिन्वंतःपिपासिताः॥जलंनिरुदकेकूपेददृशुःसत्वमद्भुतम्॥कृकलासंगिरिनिभंवीक्ष्यविस्मितमानसाः॥तस्यचोद्धरणेयत्नंचक्रुस्तेकृपयाऽन्विताः॥३॥चर्मजैस्तांतवैःपाशैर्बद्ध्वापतितमर्भकाः॥नाशक्नुवन्समुद्धर्तुंकृष्णायाचख्युरुत्सुकाः॥४॥तत्रागत्यारविंदाक्षोभगवान्विश्वभावनः॥वीक्ष्योज्जहारवामेनतंकरेणसलीलया॥५॥सउत्तमश्लोककराभिमृष्टोविहायसद्यःकृकलासरूपम्॥संतप्तचामीकरचारुवर्णःस्वर्ग्यद्भुतालंकरणांबरस्रक्॥६॥पप्रच्छविद्वानपितन्निदानंजनेषुविख्यापयितुंमुकुंदः॥कस्त्वंमहाभागवरेण्यरूपोदेवोत्तमंत्वांगणयामिनूनम्॥७॥दशामिमांवाकतमेनकर्मणासंप्रापितोऽस्यतदर्हःसुभद्र॥आत्मानमाख्याहिविवित्सतांनोयन्मन्यसेनःक्षममत्रवक्तुम्॥८॥श्रीशुकउवाच॥इतिस्मराजासंपृष्टःकृष्णेनानंतमूर्तिना॥माधवंप्रणिपत्याहकिरीटेनार्कवर्चसा॥९॥नृगउवाच॥नृगोनाममनरेंद्रोऽहमिक्ष्वाकुतनयःप्रभो॥दानिष्वाख्यायमानेषुयदितेकर्णमस्पृशम्॥ १०॥

तंचकृकलासंवीक्ष्य॥३॥चर्मजैःचर्ममयैःपाशैःतांतवैस्तंतुमयैश्च॥४॥५॥संतप्तंयच्चामीकरंसुवर्णंतद्वद्वर्णोयस्यसःअद्भुताअलंकाराःअंबरस्रजोयस्यसःस्वर्ग्योदेवोबभूवेति॥६॥७॥यत्यदिक्षमंयोग्यम्॥८॥९॥यदितेकर्णमस्पृशमिति असंदेहेसंदेहवचनंयदिवेदाःप्रमाणंस्युरितिवत्कर्णपथंनु प्राप्तःस्यामित्यर्थः॥१०॥

भा॰ द॰ उ॰ ३०

किंचकिन्विति सर्वेषांभूतानामात्मनोबुद्धेः साक्षिणस्तेअविदितंकिंनुनकिंचित ॥११॥१२॥१३॥ ऋतव्रतेभ्यः अदंभाचारेभ्यः तपसाश्रुतानामख्याताश्चतेब्रह्मणिवदान्याअत्युदाराः अध्यापनशीलाश्चतेसंतश्चतेभ्यः ॥१४॥ पूर्तंवापीकूपादिचरितं ॥१५॥ एवंवर्तमानस्यममसंकटंकिंचिदापन्नंशृणुइत्याहकस्यचिदितिद्विजमुख्यस्यमतिग्रहनिरतस्यसंपृक्तामिलिताअविदुषाब्राह्मणस्येयमित्यजानता ॥१६॥१७॥ प्रतिग्राहिणोक्तंदातेतिस्वा-

अ॰ ६४

किन्नुतेविदितंनाथसर्वभूतात्मसाक्षिणः ॥ कालेनाव्याहतदृशोवक्ष्येऽथापितवाज्ञया ॥११॥ यावंत्यःसिकताभूमेर्यावंत्योदिवितारकाः ॥ यावंत्योवर्षधाराश्चतावतीरददंस्मगाः ॥१२॥ पयस्विनीस्तरुणीःशीलरूपगुणोपपन्नाः कपिलाहेमशृंगीः ॥ न्यायार्जितारूप्यखुराः सवत्सादुकूलमालाभरणाददावहम ॥१३॥ स्वलंकृतेभ्योगुणशीलवद्भ्यःसीदत्कुटुंबेभ्यऋतव्रतेभ्यः ॥ तपःश्रुतब्रह्मवदान्यसद्भ्यःप्रादांयुवभ्योद्विजपुंगवेभ्यः ॥१४॥ गोभूहिरण्यायतनाश्वहस्तिनःकन्याःसदासीस्तिलरूप्यशय्याः ॥ ॥वासांसिरत्नानिपरिच्छदान्रथानिष्टंचयज्ञैश्चरितंचपूर्तम ॥१५॥ कस्यचिद्द्विजमुख्यस्यभ्रष्टागौर्ममगोधने ॥ संपृक्ताऽविदुषासाचमयादत्ताद्विजातये ॥१६॥ तांनीयमानांतत्स्वामीदृष्ट्वोवाचममेतितम ॥ ममेतिप्रतिग्राह्याहनृगोमेदत्तवानिति ॥१७॥ विप्रौविवदमानौमामूचतुःस्वार्थसाधकौ ॥ भवान्दाताऽपहर्तेतितच्छ्रुत्वामेऽभवद्भ्रमः ॥१८॥ अनुनीतावुभौविप्रौधर्मकृच्छ्रगतेनवै ॥ गवांलक्षंप्रकृष्टानांदास्याम्येषाप्रदीयताम ॥१९॥ भवंतावनुगृह्णीतांकिंकरस्याविजानतः ॥ समुद्धरतमांकृच्छ्रात्पतंतंनिरयेऽशुचौ ॥२०॥ नाहंप्रतीच्छेवैराजन्नित्युक्त्वास्वाम्यपाक्रमत ॥ नान्यद्गवामप्ययुतमिच्छामीत्यपरोययौ ॥२१॥ एतस्मिन्नंतरेयाम्यैर्दूतैर्नीतोयमक्षयम ॥ यमेनपृष्टस्तत्राहंदेवदेवजगत्पते ॥२२॥ पूर्वंत्वमशुभंभुंक्षउताहोनृपतेशुभम ॥ नांतंदानस्यधर्मस्यपश्येलोकस्यभास्वतः ॥२३॥ पूर्वंदेवाशुभंभुंजइतिप्राहपतेतिसः ॥ तावदद्राक्षमात्मानंकृकलासंपतन्प्रभो ॥२४॥ ब्रह्मण्यस्यवदान्यस्यतवदासस्यकेशव ॥ स्मृतिर्नाद्यापिविध्वस्ताभवत्संदर्शनार्थिनः ॥२५॥ १८मिनोक्तंअपहर्तेतिअ

भवद्भ्रमःव्याकुलोभवमित्यर्थः ॥१८॥ तदाउभावपिमत्येकमनुनीतौप्रार्थितौकथंतदाहगवामितिसार्द्धेन ॥१९॥२०॥ अपरःप्रतिग्राहीदुराग्रहोयल्लक्षं तवयुतंअप्यहंप्रिगवामयुतंपदितरपिदत्तांविहायनेच्छामिइत्युक्त्वागांत्यक्त्वाययावित्यर्थः ॥२१॥ एतस्मिन्नंतरइतिइतःपूर्वंपापाभावात्तेनुमत मर्थइतिभावः ॥२२॥ उताहो ... पूर्वंमशुभमितिमानोमितियमस्यलस्यवाचाकंपश्यपश्यामि ॥२३॥ हेदेवयमपूर्वमशुभंभुंजइतिमयोक्ते

राम ३०

दुर्घटेन श्रीकृष्णदर्शनेन विस्मितः सन्नात्मनो भाग्यमभिनंदति स त्वमिति हे विभो स त्वं मम अक्षिपथः लोचनगोचरः सन् कथं साक्षात्समक्षोऽसीत्यर्थः किमत्राश्चर्यं तदाह परः आत्मा अत एव योगेश्वैरपि श्रुतिदृशा उपनिषच्चक्षुषा अमले हृदि विभाव्यश्चिंत्यः यतोऽधोक्षजः अक्षजमैन्द्रियकं ज्ञानं तत् अधः अर्वागेव यस्मात्सः यस्येह भवापवर्गौ भवेत्तस्य भवाननुदृश्यः स्यात् उरुव्यसनेन कृकलासभवदुःखेन नाधबुद्धेस्तु ममैतच्चित्रमित्यर्थः॥२६॥ उद्रिक्तभक्तिर्बहुधा संबोधयन्नाह देवदेवेति॥२७॥ अनुज्ञापयति अनुजानीहीति देवलोकेऽपि सतः वर्त्तमानस्यात्मनो मनसः संनिधिं प्रार्थयते यत्रक्वापीति त्वत्पदमास्पदं विषयो यस्य तथाभूयादिति॥२८॥ प्रास्यन्नमस्यति नमइति सर्वभावाय सर्वस्य भावो जन्म येन तस्मै ब्रह्मणे कर्तृत्वेऽप्यविकाराय

सत्वं कथं मम विभोऽक्षिपथः परात्मा योगेश्वरैः श्रुतिदृशाऽमलहृद्विभाव्यः॥ साक्षादधोक्षज उरुव्यसनांधबुद्धेः स्यान्मेऽनुदृश्य इह यस्य भवापवर्गः॥२६॥ देवदेव जगन्नाथ गोविन्द पुरुषोत्तम॥ नारायण हृषीकेश पुण्यश्लोकाच्युताव्यय॥२७॥ अनुजानीहि मां कृष्ण यांतं देवगतिं विभो॥ यत्र क्वापि सतश्चेतो भूयान्मे त्वत्पदास्पदम्॥२८॥ नमस्ते सर्वभावाय ब्रह्मणेऽनंतशक्तये॥ कृष्णाय वासुदेवाय योगानां पतये नमः॥२९॥ श्रीशुक उवाच॥ इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना॥ अनुज्ञातो विमानाग्र्यमारुहत्पश्यतां नृणाम्॥३०॥ कृष्णः परिजनं प्राह भगवान्देवकीसुतः॥ ब्रह्मण्यदेवो धर्मात्मा राजन्याननुशिक्षयन्॥३१॥ दुर्जरं बत ब्रह्मस्वं भुक्तमग्नेर्मनागपि॥ तेजीयसोऽपि किमु त राज्ञामीश्वरमानिनाम्॥३२॥ नाहं हालाहलं मन्ये विषं यस्य प्रतिक्रिया॥ ब्रह्मस्वं हि विषं प्रोक्तं नास्य प्रतिविधिर्भुवि॥३३॥ हिनस्ति विषमत्तारं वन्हिरद्भिः प्रशाम्यति॥ कुलं समूलं दहति ब्रह्मस्वारणिपावकः॥३४॥ ब्रह्मस्वं दुरनुज्ञातं भुक्तं हंति त्रिपूरुषम्॥ प्रसह्य तु बलाद्भुक्तं दश पूर्वा

कुतः अनंतशक्तये अनंता मायाख्या शक्तिर्यस्य तस्मै वासुदेवाय सर्वभूताश्रयायेत्युपादानत्वमुक्तं श्रीकृष्णाय सदानंदरूपायेति पुरुषार्थत्वमुक्तं कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत इति स्मृतेः किंच योगानां इष्टापूर्तादिकर्मणां पतये फलदात्रे अयं भावः एवंभूतं त्वां विहाय परं त्वमनिच्छुरपि गमिष्यामि त्वद्दत्तकर्मफलभोगायेति॥२९॥३०॥३१॥ मनागीषदपि भुक्तं सत् अग्नेः अग्निसदृशस्य तेजीयसः अतितेजस्विनोऽपि दुर्जरम्॥३२॥३३॥ किंच विषादपि घोरमित्याह हिनस्तीति संसर्गेण मारकत्वादग्नितुल्यता स्यात्तदपि नेत्याह वन्हिरिति अपि च समूलमिति वन्हिर्मूलान्यवशोषयति ब्रह्मस्वलक्षणारणिजः पापपावकस्तु कुलं तदपि समूलमिति॥३४॥ दुरनुज्ञातं यथावदननुज्ञातं त्रिपुरुषं कुलं यः स्वयं पुत्रपौत्र

॥च प्रसह्य हठात् बलात् राजाद्याश्रयात्॥३५॥ ७ ॥

राजाद्याश्रयतः येब्रह्मस्वमभिमन्यंतेइच्छंतितेनिरयमेवाभिमन्यंते अतोबालिशाअज्ञाः आत्मपातंनविचक्षतइति ॥ ३६ ॥ अपिचगृण्हंतीति ॥ ३७ ॥ ३८ ॥ ३९ ॥ गृध्नुःअभिकांक्ष्य ॥ ४० ॥ ४१ ॥ प्रणमेनमामि ॥ ४२ ॥ नकेवलमर्थवाद्विभीषिकेयंकिंतुप्रत्यक्षमित्याहब्राह्मणार्थइति ॥ ४३ ॥ ४४ ॥ इतिश्री दशमेटीकायांचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ पंचषष्टितमेरामश्चक्रेगोकुलमागतः ॥ रममाणस्तुगोपीभिःकालिंद्याःकर्षणंमदात् ॥ १ ॥ रामस्यचरितंचित्रं



राजानोराजलक्ष्म्यांऽन्धानात्मपातंविचक्षते ॥ निरयेयेऽभिमन्यंतेब्रह्मस्वंसाधुबालिशाः ॥ ३६ ॥ गृण्हंतियावतःपांसून्क्रंदता
मश्रुबिंदवः ॥ विप्राणांहृतवृत्तीनांवदान्यानांकुटुंबिनाम् ॥ ३७ ॥ राजानोराजकुल्याश्चतावतोऽब्दान्निरंकुशाः ॥ कुंभीपाकेषुप
च्यंतेब्रह्मदायापहारिणः ॥ ३८ ॥ स्वदत्तांपरदत्तांवाब्रह्मवृत्तिंहरेच्चयः ॥ षष्टिवर्षसहस्राणिविष्ठायांजायतेकृमिः ॥ ३९ ॥ नमेब्र
ह्मधनंभूयाद्यद्गृध्वाऽल्पायुषोनृपाः ॥ पराजिताश्च्युताराज्याद्भवंत्युद्वेजिनोऽहयः ॥ ४० ॥ विप्रंकृतागसमपिनैवद्रुह्यतमा
मकाः ॥ घ्नंतंबहुशपंतंवानमस्कुरुतनित्यशः ॥ ४१ ॥ यथाऽहंप्रणमेविप्राननुकालंसमाहितः ॥ तथानमतयूयंचयोऽन्य
थामेसदंडभाक् ॥ ४२ ॥ ब्राह्मणार्थोह्यपहृतोहर्तारंपातयत्यधः ॥ अजानंतमपिह्येनंनृगंब्राह्मणगौरिव ॥ ४३ ॥ एवंविश्राव्य
भगवान्मुकुंदोद्वारकौकसः ॥ पावनःसर्वलोकानांविवेशनिजमंदिरम् ॥ ४४ ॥ इतिश्रीभागवतेमहापुराणेदशमस्कंधेनृ
गोपाख्यानंनामचतुःषष्टितमोऽध्यायः ॥ ६४ ॥ श्रीशुकउवाच ॥ बलभद्रःकुरुश्रेष्ठभगवान्रथमास्थितः ॥ सुहृद्दि
दृक्षुरुत्कंठःप्रययौनंदगोकुलम् ॥ १ ॥ परिष्वक्तश्चिरोत्कंठै — गोपैर्गोपीभिरेवच ॥ रामोऽभिवाद्यपितरावाशीर्भिरभिनं
दितः ॥ २ ॥ चिरंनःपाहिदाशार्हसानुजोजगदीश्वरः ॥ इत्यारोप्यांकमालिंग्यनेत्रैःसिषिचतुर्जलैः ॥ ३ ॥ गोपवृद्धांश्चविधि
वद्यविष्ठैश्चाभिवंदितः ॥ यथावयोयथासख्यंयथासंबंधमात्मनः ॥ ४ ॥ समुपेत्याथगोपालान्हास्यहस्तग्रहादिभिः ॥ ५
विश्रांतंसुखमासीनंपप्रच्छुःपर्युपागताः ॥ ५ ॥ पृष्टाश्चानामयंस्वेषुप्रेमगद्गदयागिरा ॥ कृष्णेकमलपत्राक्षेसंन्यस्ता
खिलराधसः ॥ ६ ॥ ७ ॥ (कालिंद्याकर्षणादियत्ततोऽद्भुतंमादिकृष्णस्यप्रथमगुणमतःपरं ॥ २ ॥ १ ॥ आशीर्भिरभिनंदितोबभूव ॥ २ ॥
तदाहचिरमिति ॥ ३ ॥ गोपवृद्धांश्चविधिवदभिवंद्यविष्ठैरभिवंदितोबभूवेत्यर्थः अपिचयथावयइति ॥ ४ ॥ तेसर्वेविष्णुपादवेषुतंरामंअनामयमा
[illegible]

७।८॥ रामस्य संदर्शनेन आदृताः सादराः॥९।१०।११॥ न हि तत्कर्म न युष्माभिः प्रतिबन्धः किं न कृतः तद्वाक्यविश्वासादिति चेत् न नु विश्वासः किमिति कृतस्तत्राहुः कथंन्विति कृतघ्नबहुत्वान्नानाविधानि वाक्यानि॥१२॥ तत्रान्या ऊचुः कथन्नु गृह्णन्तीति अन्या ऊचुः गृह्णन्ति वा इति चित्रकथस्य चित्रकथाकथनकोविदस्य किंच सुन्दरस्मितं यस्मिन् तेनावलोकनेन उच्छ्वसितः क्षुभितो यः स्मरस्तेनातुराः॥१३॥ अपरा ऊचुः किन्न इति कालस्तावत्तस्य च

कच्चिन्नो बांधवा राम सर्वे कुशलमासते॥ कच्चित्स्मरथ नो राम यूयं दारसुतान्विताः॥७॥ दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्ताः सुहृज्जनाः॥ निहत्य निर्जित्य रिपून्दिष्ट्या दुर्गं समाश्रिताः॥८॥ गोप्यो हसन्त्यः पप्रच्छू रामसंदर्शनादृताः॥ कच्चिदास्ते सुखं कृष्णः पुरस्त्रीजनवल्लभः॥९॥ कच्चित्स्मरति वा बंधून्पितरं मातरं च सः॥ अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति॥ अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः॥१०॥ मातरं पितरं भ्रातॄन्पतीन्पुत्रान्स्वसॄरपि॥ यदर्थे जहिम दाशार्ह दुस्त्यजान्स्वजनान्प्रभो॥११॥ ता नः सद्यः परित्यज्य गतः संछिन्नसौहृदः॥ कथं नु तादृशं स्त्रीभिर्न श्रद्धीयेत भाषितम्॥१२॥ कथं नु गृह्णंत्यनवस्थितात्मनो वचः कृतघ्नस्य बुधाः पुरस्त्रियः॥ गृह्णंति वै चित्रकथस्य सुंदरस्मितावलोकोच्छ्वसितस्मरातुराः॥१३॥ किं नस्तत्कथया गोप्यः कथाः कथयतापराः॥ यात्यस्माभिर्विना कालो यदि तस्य तथैव नः॥१४॥ इति प्रहसितं शौरेर्जल्पितं चारुवीक्षितम्॥ गतिं प्रेमपरिष्वंगं स्मरन्त्यो रुरुदुः स्त्रियः॥१५॥ संकर्षणस्ताः कृष्णस्य संदेशैर्हृदयंगमैः॥ सांत्वयामास भगवान्नानानुनयकोविदः॥१६॥ द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च॥ रामः क्षपासु भगवान्गोपीनां रतिमावहन्॥१७॥ पूर्णचन्द्रकलामृष्टे कौमुदीगन्धवायुना॥ यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः॥१८॥ वरुणप्रेषिता देवी वारुणी वृक्षकोटरात्॥ पतन्ती तद्वनं सर्वं स्वगन्धेनाध्यवासयत्॥१९॥ तद्गन्धं मधुधाराया वायुनोपहृतं बलः॥ आघ्रायोपगतस्तत्र ललनाभिः समं पपौ॥२०॥ उपगीयमानचरितो वनिताभिर्हलायुधः॥ वनेषु व्यचरत्क्षीबो मदविह्वललोचनः॥२१॥

अस्माकं च यात्येव किंतु तस्य सुखेनास्माकं तु दुःखेनेत्येतावानेव विशेष इति ध्वनितं॥१४।१५॥ नानाविधेष्वनुनयेषु कोविदः॥१६॥ मधुश्चैत्रमाधवो वैशाखः मम गोपीनां रतिमिति श्रीकृष्णक्रीडासमये धनुष्मतां नामतिबालानामन्यासामित्यभियुक्तप्रसिद्धिः॥१७॥ पूर्णचन्द्रस्य कलाभिर्मरीचिभिर्मृष्टे उज्ज्वले कौमुदीगन्धवायुना कुमुद्वतीनां गन्धवातेन सेविते यद्वा कौमुदीशब्देन तद्विकासिनानि कुमुदानि लक्ष्यन्ते कुमुदगन्धवायुनेत्यर्थः॥

स्वेदएवप्रालेयंहिमन्तेनभूषितम्॥२२॥मत्तोयमित्यनादृत्यानागतामापगांनदीम्॥२३॥आहूता आहूतापयस्मान्नागच्छसितस्मान्नेष्येगमयिष्यामि ॥२४॥चकिताकंपिता॥२५॥एकांशेनशेषाख्येन॥२६।२७॥विजगाह अवगाहनंकृतवान्॥२८॥उत्तीर्णायनिर्गताय असितांबरादीनिकांतिर्दौकां तिर्लक्ष्मीःयथोक्तंवैष्णवेवरुणप्रहिताचास्मैमालामम्लानपंकजाम्‌समुद्राभेतथावस्त्रेनीलेलक्ष्मीरयच्छतेतिहरिवंशेचबलंप्रतिलक्ष्मीवाक्य

स्रग्व्येककुंडलोमत्तोवैजयंत्याचमालया॥बिभ्रत्स्मितमुखांभोजंस्वेदप्रालेयभूषितम्॥२२॥सआजुहावयमुनांजल क्रीडार्थमीश्वरः॥निजंवाक्यमनादृत्यमत्तइत्यापगांबलः॥अनागतांहलाग्रेणकुपितोविचकर्षह॥२३॥पापेत्वंमामव ज्ञाययन्नायासिमयाहुता॥नेष्येत्वांलांगलाग्रेणशतधाकामचारिणीम्॥२४॥एवंनिर्भर्त्सिताभीतायमुनायदुनंदनम्॥उवा चचकितावाचंपतितापादयोर्नृप॥२५॥रामरामहाबाहोनजानेतवविक्रमम्॥यस्यैकांशेनविधृताजगतीजगतःपते ॥२६॥परंभावंभगवतोभगवन्मामजानतीम्॥मोक्तुमर्हसिविश्वात्मन्प्रपन्नांभक्तवत्सल॥२७॥ततोव्यमुंचद्यमुनांया चितोभगवान्बलः॥विजगाहजलंस्त्रीभिःकरेणुभिरिवेभराट्॥२८॥कामंविहृत्यसलिलादुत्तीर्णायासितांबरे॥भूषणानिम हार्हाणिददौकांतिःशुभांस्रजम्॥२९॥वसित्वावाससीनीलेमालामामुच्यकांचनीम्॥रेजेस्वलंकृतोलिप्तोमाहेन्द्रइववा रणः॥३०॥अद्यापिदृश्यतेराजन्यमुनाकृष्टवर्त्मना॥बलस्यानंतवीर्यस्यवीर्यंसूचयतीवहि॥३१॥एवंसर्वानिशायाता एकेवरमतोव्रजे॥रामस्याक्षिप्तचित्तस्यमाधुर्यैर्व्रजयोषिताम्॥३२॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेबलदेवविज येयमुनाकर्षणन्नामपंचषष्टितमोऽध्यायः॥६५॥ श्रीशुकउवाच॥नंदव्रजंगतेरामेकरूषाधिपतिर्नृप॥वासुदेवोऽह मित्यज्ञोदूतंकृष्णायप्राहिणोत्॥१॥त्वंवासुदेवोभगवानवतीर्णोजगत्पतिः॥इतिप्रस्तोभितोबालैर्मन आत्मानम च्युतम्॥२॥ ॥ ॥ ॥ ॥म जातरूपमयंचैकंकुंडलंवज्रभूषणम् आदिपद्मंचपद्मारव्यंदि

व्यश्रवणभूषणंदेवेमांप्रतिगृण्हीष्वपौराणीभूषणक्रियामित्यादि॥२९॥वसित्वापरिधायआमुच्यकंठेनिधायचंदनादिभिरालिप्तः॥३०॥३१॥ एकैवएकेवनिशायायातयामाधुर्यैविलासैः॥३२॥इतिदशमेटीकायांपंचषष्टितमोऽध्यायः॥६५॥षट्षष्टितमेकाशीगत्वाऽहन्पौंड्रकं चौद्रमलिनंचनन्दोवरंनसुदर्शनंवधादिकं॥१॥१॥मत्तोभिनःप्रोत्साहितःस्तुत्याबालैरज्ञैः॥ २ ॥ श्री ॥

बालकृतो नृपः बालैर्नृपत्वेन क्रीडायां परिकल्पितः ॥३॥४॥५॥६॥७॥ हे मूढ उत्स्रक्ष्ये त्वयि प्रसह्य स्वामिये यैः सह त्वमेवं विकत्थसे तेष्वपीत्यर्थः यद्वा यैः कृत्रिमैः सुदर्शनादिभिस्त्वमेवं श्लाघसे तानि उत्स्रक्ष्ये त्याजयिष्यामीत्यर्थः ॥८॥ मां शरणं एहीत्यस्योत्तरं मुखमिति वटाः कंकादिवत्पक्षिविशेषाः तदा तत्र शुनां शरणमाश्रयो भवितासि ॥९॥ काशीमिति पौंड्रकस्यापि तदा मित्रपुरे ऽवस्थानात् ॥१०॥११॥ पार्ष्णिग्राहः पृष्ठतो रक्षकः ॥१२॥१३॥ गरुडः

दूतं च प्राहिणोन्मंदः कृष्णायाव्यक्तवर्त्मने ॥ द्वारकायां यथा बालो नृपो बालकृतो ऽबुधः ॥३॥ दूतस्तु द्वारकामेत्य सभायामास्थितं प्रभुम् ॥ कृष्णं कमलपत्राक्षं राजसंदेशमब्रवीत् ॥४॥ वासुदेवो ऽवतीर्णो ऽहमेक एव न चापरः ॥ भूतानामनुकंपार्थं त्वं तु मिथ्याऽभिधां त्यज ॥५॥ यानि त्वमस्मच्चिन्हानि मौढ्याद्बिभर्षि सात्वत ॥ त्यक्त्वैहि मां त्वं शरणं नो चेद्देहि ममाहवम् ॥६॥ श्रीशुक उवाच ॥ कत्थनं तदुपाकर्ण्य पौंड्रकस्याल्पमेधसः ॥ उग्रसेनादयः सभ्या उच्चकैर्जहसुस्तदा ॥७॥ उवाच दूतं भगवान्परिहासकथामनु ॥ उत्स्रक्ष्ये मूढ चिन्हानि यैस्त्वमेवं विकत्थसे ॥८॥ मुखं तदपिधायाज्ञ कंकगृध्रवटैर्वृतः ॥ शयिष्यसे हतस्तत्र भविता शरणं शुनाम् ॥९॥ इति दूतस्तदाक्षेपं स्वामिने सर्वमाहरत् ॥ कृष्णो ऽपि रथमास्थाय काशीमुपजगाम ह ॥१०॥ पौंड्रको ऽपि तदुद्योगमुपलभ्य महारथः ॥ अक्षौहिणीभ्यां संयुक्तो निश्चक्राम पुराद्द्रुतम् ॥११॥ तस्य काशीपतिर्मित्रं पार्ष्णिग्राहो ऽन्वयान्नृप ॥ अक्षौहिणीभिस्तिसृभिरपश्यत्पौंड्रकं हरिः ॥१२॥ शंखार्यसिगदाशार्ङ्गश्रीवत्साद्युपलक्षितम् ॥ बिभ्राणं कौस्तुभमणिं वनमालाविभूषितं ॥१३॥ कौशेयवाससी पीते वसानं गरुडध्वजम् ॥ अमूल्यमौल्याभरणं स्फुरन्मकरकुंडले ॥१४॥ दृष्ट्वा तमात्मनस्तुल्यं वेषं कृत्रिममास्थितम् ॥ यथा नटं रंगगतं विजहास भृशं हरिः ॥१५॥ शूलैर्गदाभिः परिघैः शक्त्यृष्टिप्रासतोमरैः ॥ असिभिः पट्टिशैर्बाणैः प्राहरन्नरयो हरिम् ॥१६॥ कृष्णस्तु तत्पौंड्रककाशिराजयोर्बलं गजस्यंदनवाजिपत्तिमत् ॥ गदासिचक्रेषुभिरार्दयद्भृशं यथा युगांते हुतभुक्पृथक्प्रजाः ॥१७॥ आयोधनं तद्रथवाजिकुंजरद्विपत्खरोष्ट्रैररिणाऽवखंडितैः ॥ बभौ चितं मोदवहं मनस्विनामाक्रीडनं भूतपतेरिवोल्बणम् ॥१८॥

॥ कृत्रिमो ध्वजे यस्य तम् अमूल्यो ऽनर्घ्यो मौल्याभरणं च यस्य तम् ॥१४॥१५॥१६॥ गजस्यंदनादिचतुरंगबलं मर्दितवान् पृथक् प्रजाः चतुर्विधभूतग्रामं यथा युगांते ऽग्निरिति ॥१७॥ आयोधनं रणस्थानं अरिणा चक्रेण चितं आकीर्णं आक्रीडनमिव कल्पांते रुद्रस्य क्रीडास्थानमिव ॥१८॥ ७ ॥ ७ ॥ ७ ॥

॥१९।२०॥गिरेःशृंगंयथेति॥२१।२२।२३।२४॥प्रथमंकिमिदमितिपश्चाद्वक्त्रमितिविभाव्यकस्येतिसंशयिरेसंशयंकृतवंतइति॥२५।२६॥संस्था
विधिमुत्तरक्रियामपचितिंनिष्कृतिं॥२७॥आत्मनाभिसंधायबुद्ध्याव्यवस्यसुदक्षिणःअस्तुहारः॥२८॥वरमदात्वृणीष्वेत्युक्तवानित्यर्थः॥२९॥ऋ
त्विजमृत्विजमिवस्वनियोगकारिणंयज्ञस्यदेवमृत्विजमितिश्रुतेः॥३०॥अब्रह्मण्येप्रयोजितःइतिकृष्णेप्रयोजितोविपरीतोभविष्यतीतिसूचि



अथाहपौंड्रकंशौरिर्भोभोपौंड्रकयद्भवान्॥दूतवाक्येनमामाहतान्यस्त्राण्युत्सृजामिते॥१९॥त्याजयिष्येऽभिधानंमेय
त्वयाऽज्ञमृषाधृतम्॥व्रजामिशरणन्तेऽद्ययदिनेच्छामिसंयुगम्॥२०॥इतिक्षिप्त्वाशितैर्बाणैर्विरथीकृत्यपौंड्रकम्॥शि
रोऽवृश्चद्रथांगेनवज्रेणेंद्रोयथागिरेः॥२१॥तथाकाशीपतेःकायाच्छिरउत्कृत्यपत्रिभिः॥न्यपातयत्काशिपुर्यांपद्मको
शमिवानिलः॥२२॥एवंमत्सरिणंहत्वापौंड्रकंससखंहरिः॥द्वारकामाविशत्सिद्धैर्गीयमानकथाऽमृतः॥२३॥सनित्यंभ
गवद्ध्यानप्रध्वस्ताखिलबंधनः॥बिभ्राणश्चहरेराजन्स्वरूपंतन्मयोऽभवत्॥२४॥शिरःपतितमालोक्यराजद्वारेसकुंडल
म्॥किमिदंकस्यवावक्त्रमितिसंशयिरेजनाः॥२५॥राज्ञःकाशिपतेर्ज्ञात्वामहिष्यःपुत्रबांधवाः॥पौराश्चहाहताराजन्
नाथनाथेतिप्रारुदन्॥२६॥सुदक्षिणस्तस्यसुतःकृत्वासंस्थाविधिंपितुः॥निहत्यपितृहंतारंयास्याम्यपचितिंपितुः॥२७
इत्यात्मनाऽभिसंधायसोपाध्यायोमहेश्वरम्॥सुदक्षिणोऽर्चयामासपरमेणसमाधिना॥२८॥प्रीतोऽविमुक्तेभगवांस्त
स्मैवरमदाद्विभुः॥पितृहन्तृवधोपायंसवव्रेवरमीप्सितम्॥२९॥दक्षिणाग्निंपरिचरब्राह्मणैःसममृत्विजम्॥अभिचार
विधानेनसचाग्निःप्रमथैर्वृतः॥३०॥साधयिष्यतिसंकल्पमब्रह्मण्येप्रयोजितः॥इत्यादिष्टस्तथाचक्रेकृष्णायाभिच
रन्व्रती॥३१॥ततोऽग्निरुत्थितःकुंडान्मूर्तिमानतिभीषणः॥तप्तताम्रशिखाश्मश्रुरंगारोद्गारिलोचनः॥३२॥दंष्ट्रोग्र
भ्रुकुटीदंडकठोरास्यःस्वजिह्वया॥आलिहन्सृक्किणीनग्नोविधुन्वन्त्रिशिखंज्वलत्॥३३॥पद्भ्यांतालप्रमाणाभ्यांकंप
यन्नवनीतलम्॥सोऽभ्यधावद्वृतोभूतैर्द्वारकांप्रदहन्दिशः॥३४॥तमाभिचारदहनमायांतंद्वारकौकसः॥विलोक्यतत्रसुः
सर्वेवनदाहेमृगायथा॥३५॥

॥तम्अभिचरन्अभिचारंकुर्वन्व्रतीगृहीतनियमः॥३१॥तप्तंताम्रमिवशिखाश्मश्रूणिचयस्यसःअंगा
रोद्गारिणीलोचनेयस्यसः॥३२॥दंष्ट्राभिरुग्रंभ्रुकुटीदंडेनचकठोरंक्रूरमास्यंयस्यसःत्रिशिखंत्रिशूलं॥३३॥दिशःप्रदहन्॥३४।३५॥६॥

त्राहि त्राहीत्याद्युरितिशेषः॥३६॥ अहमविता स्मि रक्षिष्यामीति॥३७॥ रोदसी च प्रकाशयदिति शेषः यद्वा स्वतेजसा रोदसी प्रति ज्वलयमानं अत्यर्थं प्रकाशमानमित्यर्थः आर्दयत् अपीडयत्॥३९॥ अर्दितो ऽग्निर्यत्कृतवान् तं दाहकृत्यानलः दुर्लिसहर्त्विग्भिर्जनैश्च वर्तमानं अभिचर्यते मार्यते ऽनेनेत्यभिचारः कृत्यानलः॥४०॥ अट्टादिसहितां अट्टा मंचाः॥४१॥४२॥४३॥ इति दशमे टीकायां षट्षष्टितमोऽध्यायः॥६६॥ सप्तषष्टितमे रामो गिरौ रैवतके मदात्॥ खेरं ग्रुवनिभिः क्रीडन्नवधीद् द्विविदं खलं॥१॥ कालिंदीविदारणानंतरं रामचरितं द्विविदवधादि संगत

अक्षैः सभायां क्रीडंतं भगवंतं भयातुराः॥ त्राहि त्राहि त्रिलोकेश वन्हेः प्रदहतः पुरम्॥३६॥ श्रुत्वा तज्जनवैक्लव्यं दृष्ट्वा स्वानां च साध्वसम्॥ शरण्यः संप्रहस्याह माभैष्टेत्यविता स्म्यहम्॥३७॥ सर्वस्यांतर्बहिः साक्षी कृत्यां माहेश्वरीं विभुः॥ विज्ञाय तद्विघातार्थं पार्श्वस्थं चक्रमादिशत्॥३८॥ तत्सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयानलप्रभम्॥ स्वतेजसा खं ककुभोऽथ रोदसी चक्रं मुकुंदास्त्रमथाग्निमार्दयत्॥३९॥ कृत्यानलः प्रतिहतः स रथांगपाणेरस्त्रौजसा स नृप भग्नमुखो निवृत्तः॥ वाराणसीं परिसमेत्य सुदक्षिणं तं सर्त्विग्जनं समदहत्स्वकृतोऽभिचारः॥४०॥ चक्रं च विष्णोस्तदनुप्रविष्टं वाराणसीं साट्टसभालयापणाम्॥ सगोपुराट्टालककोष्ठसंकुलां सकोशहस्त्यश्वरथान्नशालाम्॥४१॥ दग्ध्वा वाराणसीं सर्वां विष्णुचक्रं सुदर्शनम्॥ भूयः पार्श्वमुपातिष्ठत् कृष्णस्याक्लिष्टकर्मणः॥४२॥ य एनं श्रावयेन्मर्त्य उत्तमश्लोकविक्रमम्॥ समाहितो वा शृणुयात्सर्वपापैः प्रमुच्यते॥४३॥ इति श्रीभागवते महापुराणे दशमस्कंधे काशिराजपौंड्रकवधो नाम षट्षष्टितमोऽध्यायः॥६६॥ श्रीराजोवाच॥ भूयोऽहं श्रोतुमिच्छामि रामस्याद्भुतकर्मणः॥ अनंतस्याप्रमेयस्य यदन्यत्कृतवान्प्रभुः॥१॥ श्रीशुक उवाच॥ नरकस्य सखा कश्चिद् द्विविदो नाम वानरः॥ सुग्रीवसचिवः सोऽथ भ्राता मैंदस्य वीर्यवान्॥२॥ सख्युः सोऽपचितिं कुर्वन्वानरो राष्ट्रविप्लवम्॥ पुरग्रामाकरान्घोषानदहद्वह्निमुत्सृजन्॥३॥ क्वचित्स शैलानुत्पाट्य तैर्देशान्समचूर्णयत्॥ आनर्तान्सुतरामेव यत्रास्ते मित्रहा हरिः॥४॥

१ (मप्यनुत्का तत्सूर्यभाविलेन पौंड्रकवधादि निरूप्येदानीं तदेव प्रसौति भूयोहमित्यादिना रामचरित्रश्रवणेच्छायामद्भुतकर्मत्वं हेतुः तत्र चानंतत्वं तत्राप्यप्रमेयत्वमिति॥१॥ नरकस्य सखेति हरिणा वैरे कारणं सुग्रीवसचिव इति तस्य मैत्रबलं मैंदस्य भ्रातेति रामायणे प्रसिद्धत्वेन वीर्याधिक्यमुक्तमिति॥२॥ सख्युर्नरकस्य अपचितिं आनृण्यं॥ राष्ट्रस्य विप्लवो नाशो यथा भवति तथा पुरादीनदहद् इति॥३॥ किंच क्वचिदिति कदाचित्स द्विविदः मित्रहा स विहर्ता॥४॥

तस्यसमुद्रस्यजलंबाहुभ्यामुत्क्षिप्यवेलायाःकूलेवर्त्तमानान्देशान्प्लावयामासेति॥५॥आश्रमस्थान्वनस्पतीन्भंक्त्वाआहवनीयाद्यग्निषु मूत्रादिकृतवान्॥६॥अप्यधात्पिदधेपेशस्कारीभ्रमरः॥७।८।९॥प्रभिन्नमत्तं॥१०।११॥जात्यास्वभावेनैवचापल्यंयासांताः॥१२॥हेलयामासअव

क्वचित्समुद्रमध्यस्थोदोर्भ्यामुत्क्षिप्यतज्जलम्॥देशान्नागायुतप्राणोवेलाकूलानमज्जयत्॥५॥आश्रमानृषिमुख्या
नांकृत्वाभग्नवनस्पतीन्॥अदूषयच्छकृन्मूत्रैरग्नीन्वैतानिकान्खलः॥६॥पुरुषान्योषितोदृप्तःक्ष्माभृद्द्रोणीगुहासुसः॥
निक्षिप्यचाप्यधाच्छैलैःपेशस्कारीवकीटकम्॥७॥एवंदेशान्विप्रकुर्वन्दूषयंश्चकुलस्त्रियः॥श्रुत्वासुललितंगीतंगिरिं
रैवतकंययौ॥८॥तत्रापश्यद्यदुपतिंरामंपुष्करमालिनम्॥सुदर्शनीयसर्वांगंललनायूथमध्यगं॥९॥गायंतंवारुणींपी
त्वामदविह्वललोचनम्॥विभ्राजमानंवपुषाप्रभिन्नमिववारणम्॥१०॥दुष्टःशाखामृगःशाखामारूढःकंपयन्द्रुमान्॥
चक्रेकिलकिलाशब्दमात्मानंसंप्रदर्शयन्॥११॥तस्यधार्ष्ट्यंकपेर्वीक्ष्यतरुण्योजातिचापलाः॥हास्यप्रियाविजहसुर्बल
देवपरिग्रहाः॥१२॥ताहेलयामासकपिर्भ्रूक्षेपैःसंमुखादिभिः॥दर्शयन्स्वगुदंतासांरामस्यचनिरीक्षतः॥१३॥तंग्राव्णाप्रा
हरत्क्रुद्धोबलःप्रहरतांवरः॥सवंचयित्वाग्रावाणंमदिराकलशंकपिः॥१४॥गृहीत्वाहेलयामासधूर्तस्तंकोपयन्हसन्॥नि
र्भिद्यकलशंधृष्टोवासांस्यास्फालयद्बलम्॥कदर्थीकृत्यबलवान्विप्रचक्रेमदोद्धतः॥१५॥तंतस्याविनयंदृष्ट्वादेशांश्चतदुप
द्रुतान्॥क्रुद्धोमुशलमादत्तहलंचारिजिघांसया॥१६॥द्विविदोऽपिमहावीर्यःशालमुद्यम्यपाणिना॥अभ्येत्यतरसातेनबलं
मूर्द्धन्यताडयत्॥१७॥तंतुसंकर्षणोमूर्ध्निपतंतमचलोयथा॥प्रतिजग्राहबलवान्सुनंदेनाहनच्चतम्॥१८॥मुशलाहतम
स्तिष्कोविरेजेरक्तधारया॥गिरिर्यथागैरिकयाप्रहारंनानुचिंतयन्॥१९॥पुनरन्यंसमुत्क्षिप्यकृत्वानिष्पत्रमोजसा॥तेनाहन
त्सुसंक्रुद्धस्तंबलःशतधाच्छिनत्॥२०॥ततोन्येनरुषाजघ्नेतंचापिशतधाच्छिनत्॥एवंयुध्यन्भगवताभग्नेभग्नेपुनःपुनः
॥२१॥

ज्ञेनिरीक्षतोनिरीक्षमाणस्यतमनादृत्येत्यर्थः॥१३।१४॥आस्फालयत्योषितांवासांसिआकृष्यपाटितवान्विप्रचक्रेएवमपकृतवान्॥
[illegible]॥१७॥सुनंदेनमुशलेनाहनत्अहन्नित्यर्थःतंबानबन्॥१८॥मस्तिष्कंमस्तकावयवविशेषःगैरिकयालोहितधातुनानानुचिंतयन्अग

॥२२॥ अरुरुजत् ताडयामास॥२३॥ यादवेन्द्रः संकर्षणः [illegible]॥२४॥२५॥ [illegible] मतो य विवराणि तत्सहितः॥२५।२६॥ जगतो व्यतिकरं नाशमावहतीति तथा तम्॥२७॥ इति दशमे टीकायां सप्तषष्टितमोऽध्यायः॥६७॥ अष्टषष्टितमे सांबे निरुद्धे कौरवैर्युधि तद्विमोक्षाय रामेण गजाह्वयविकर्षणम्॥१॥ रामचरित्रांतरं निरूपयितुमाह दुर्योधनसुतामिति समितिंजयः संग्रामजित्॥१।२॥ नोऽस्माकं महीं अस्माभिर्दत्तां न ते भूमि

आकृष्य सर्वतो वृक्षान्निर्वृक्षमकरोद्वनम्॥ ततोऽसृजच्छिलावर्षं बलस्योपर्यमर्षितः॥ तत्सर्वं चूर्णयामास लीलया मु
शलायुधः॥२२॥ स बाहू तालसंकाशौ मुष्टीकृत्य कपीश्वरः॥ आसाद्य रोहिणीपुत्रं ताभ्यां वक्षस्यरूरुजत्॥२३॥ यादवेंद्रो
पि तं दोर्भ्यां त्यक्त्वा मुशललांगले॥ जत्रावभ्यर्दयत्क्रुद्धः सोऽपतद्रुधिरं वमन्॥२४॥ चकंपे तेन पतता सटंकः सवनस्प
तिः॥ पर्वतः कुरुशार्दूल वायुना नौरिवांभसि॥२५॥ जयशब्दो नमःशब्दः साधु साध्विति चांबरे॥ सुरसिद्धमुनींद्राणामासी
त्कुसुमवर्षिणाम्॥२६॥ एवं निहत्य द्विविदं जगद्व्यतिकरावहम्॥ संस्तूयमानो भगवान्जनैः स्वपुरमाविशत्॥२७॥ इति
श्रीभागवते महापुराणे दशमस्कंधे द्विविदवधो नाम सप्तषष्टितमोऽध्यायः॥६७॥ श्रीशुक उवाच॥ दुर्योधनसुतां राजन्ल
क्ष्मणां समितिंजयः॥ स्वयंवरस्थामहरत्सांबो जांबवतीसुतः॥१॥ कौरवाः कुपिता ऊचुर्दुर्विनीतोऽयमर्भकः॥ कदर्थीकृत्य
नः कन्यामकामामहरद्बलात्॥२॥ बध्नीतेमं दुर्विनीतं किं करिष्यंति वृष्णयः॥ येऽस्मत्प्रसादोपचितां दत्तां नो भुंजते मही
म्॥३॥ निगृहीतं सुतं श्रुत्वा यद्येष्यंतीह वृष्णयः॥ भग्नदर्पाः शमं यांति प्राणा इव सुसंयताः॥४॥ इति कर्णः शलो भूरिर्य
ज्ञकेतुः सुयोधनः॥ सांबमारेभिरे योद्धुं कुरुवृद्धानुमोदिताः॥५॥ दृष्ट्वानुधावतः सांबो धार्तराष्ट्रान्महारथः॥ प्रगृह्य
रुचिरं चापं तस्थौ सिंह इवैकलः॥६॥ तं ते जिघृक्षवः क्रुद्धास्तिष्ठ तिष्ठेति भाषिणः॥ आसाद्य धन्विनो बाणैः कर्णा
ग्रण्यः समाकिरन्॥७॥ सोऽपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनंदनः॥ नामृष्यत्तदचिंत्यार्भः सिंहः क्षुद्रमृगैरिव॥८॥ वि
स्फूर्ज्य रुचिरं चापं सर्वान्विव्याध सायकैः॥ कर्णादीन्षड्रथान्वीरस्तावद्भिर्युगपत्पृथक्॥९॥

पत इति भावः॥३॥ यांति यास्यंति प्राणा इंद्रियाणीव सुसंयताः प्राणायामादिभिर्दमिताः॥४॥ कुरुवृद्धो भीष्मः तेनानुमोदिताः तत्सहिताः षडेते
इत्यर्थः॥५।६॥ कर्णोऽग्रणीर्येषां ते॥७॥ न अमृष्यत् असहत अचिंत्यस्य भगवतोऽर्भोऽर्भकः अचिंत्यश्चासावर्भश्चेति वा॥ ८॥ ९॥ ६॥

तत्प्रपंचयति चतुर्भिश्चतुरइत्यत्र वीप्सा ॥ अनुसंधेयाततत्कर्मतेसंमानितवंतः ॥ १०॥ ११॥ स्वस्यदुर्योधनस्यकन्यांचनीत्वेतिशेषः ॥ १२॥ १३॥ यतःस्व
लिंनैच्छत् अतःसांत्वयित्वाजगामेति ॥ १४॥ १५॥ धृतराष्ट्रं प्रतिबुभुत्सयेति अभिप्रायंजिज्ञासयेत्यर्थः ॥ १६॥ विधिवदभिवंद्य ॥ १७॥ तमुद्धव
मर्चयित्वासत्कृत्य मंगलपाणयः उपायनहस्ताः ॥ १८॥ वृद्धा अपिप्रणेमुः ॥ १९॥ २०॥ २१॥ यद्यूयमित्यादिउग्रसेनस्यवाक्यंमृष्यस्वेसहे अयं



चतुर्भिश्चतुरोवाहानेकैकेनचसारथीन् ॥ रथिनश्चमहेष्वासांस्तस्यतलेभ्यपूजयन् ॥ १०॥ तंतुतेविरथंचक्रुश्चत्वार।
श्चतुरोहयान् ॥ एकस्तुसारथिंजघ्नेचिच्छेदान्यःशरासनम् ॥ ११॥ तंबध्वाविरथीकृत्यकृच्छ्रेणकुरवोयुधि ॥ कुमारं।
स्वस्यकन्यांचस्वपुरंजयिनोऽविशन् ॥ १२॥ तच्छ्रुत्वानारदोक्तेनराजन्संजातमन्यवः ॥ कुरून्प्रत्युद्यमंचक्रुरुग्रसेन।
प्रचोदिताः ॥ १३॥ सांत्वयित्वातुतान्रामःसन्नद्धान्वृष्णिपुंगवान् ॥ नैच्छत्कुरूणांवृष्णीनांकलिंकलिमलापहः ॥ १४॥
जगामहास्तिनपुरंरथेनादित्यवर्चसा ॥ ब्राह्मणैःकुलवृद्धैश्चवृतश्चंद्रइवग्रहैः ॥ १५॥ गत्वागजाह्वयंरामोबाह्योपवन
मास्थितः ॥ उद्धवंप्रेषयामासधृतराष्ट्रंबुभुत्सया ॥ १६॥ सोऽभिवंद्यांबिकापुत्रंभीष्मंद्रोणंचबाल्हिकम् ॥ दुर्योधनंचविधि
वद्राममागतमब्रवीत् ॥ १७॥ तेऽतिप्रीतास्तमाकर्ण्यप्राप्तंरामंसुहृत्तमम् ॥ तमर्चयित्वाभिययुःसर्वेमंगलपाणयः ॥
१८॥ तंसंगम्ययथान्यायंगामर्घ्यंचन्यवेदयन् ॥ तेषांयेतत्प्रभावज्ञाःप्रणेमुःशिरसाबलम् ॥ १९॥ बंधून्कुशलिनः
श्रुत्वापृष्ट्वाशिवमनामयम् ॥ परस्परमथोरामोबभाषेऽविक्लवंवचः ॥ २०॥ उग्रसेनःक्षितीशेशोयद्वआज्ञापयत्प्रभुः
॥ तदव्यग्रधियःश्रुत्वाकुरुध्वमविलंबितम् ॥ २१॥ यद्यूयंबहवस्त्वेकंजित्वाऽधर्मेणधार्मिकम् ॥ अबध्नीताथतन्मृष्ये
बंधूनामैक्यकाम्यया ॥ २२॥ वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमंवचः ॥ कुरवोबलदेवस्यनिशम्योचुःप्रकोपिताः ॥
॥ २३॥ अहोमहच्चित्रमिदंकालगत्यादुरत्यया ॥ आरुरुक्षत्युपानद्वैशिरोमुकुटसेवितम् ॥ २४॥ एतेयौनेनसंबद्धाःस
॥ हशय्यासनाशनाः ॥ वृष्णयस्तुल्यतांनीताअस्मद्दत्तनृपासनाः ॥ २५॥ ६ ॥



सुतंमानीयसमर्पयेतिशेषः ॥ २२॥ वीर्यंप्रभावःशौर्यंउत्साहःबलंसत्वंतैरुन्नद्धंउत्कटंस्वलक्षणंआत्मनःशक्तेःसमंअनुरूपम् ॥ २३॥ उपान
त्पादरक्षाशिरआरोढुमिच्छतीतिहीना अस्माभिराज्ञापयंतीत्यर्थः ॥ २४॥ अस्मैवंशप्रपंचःएतद्विचतुर्भिःयौनेनएत्यायाविवाहेन ॥ २५॥ ६ ॥

किंच चामरव्यजने इति भुंजंति उपभुंजत इत्यर्थः अस्मदुपेक्षया अस्माकमनाग्रहेण ॥२६॥ अलमिति अतः परं तान्यः पहरिष्याम इत्यर्थः ॥२७॥ अवरुंधीत स्वीकुर्यात् उरणो मेषः ॥२८॥ जन्मना बंधुभिश्रीपल क्षितया श्रिया उन्नद्ध उत्कटो मदो येषां ते दुर्वाच्यं परुषं वाक्यं असभ्याः दुर्जनाः ॥२९॥३०॥ नानाधनाभिजनादिमदैरुन्नद्धास्तेषां दंड एव प्रशमः प्रकर्षेण शमयतीति तथा यथा लगुडो दंडः ॥३१॥३२॥ दुर्भाषान् अवाच्य

चामरव्यजने शंखमातपत्रं च पांडुरम् ॥ किरीटमासनं शय्यां भुंजंत्यस्मदुपेक्षया ॥२६॥ अलं यदूनां नरदेवलांछनैर्दातुः प्रतीपैः फणिनामिवामृतम् ॥ येऽस्मत्प्रसादोपचिता हि यादवा आज्ञापयंत्यद्य गतत्रपा बत ॥२७॥ कथमिंद्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः ॥ अदत्तमवरुंधीत सिंहग्रस्तमिवोरणः ॥२८॥ श्रीशुक उवाच ॥ जन्मबंधुश्रियोन्नद्धमदास्ते भरतर्षभ ॥ आश्राव्य रामं दुर्वाच्यमसभ्याः पुरमाविशन् ॥२९॥ दृष्ट्वा कुरूणां दौःशील्यं श्रुत्वाऽवाच्यानि चाच्युतः ॥ अवोचत्कोपसंरब्धो दुष्प्रेक्ष्यः प्रहसन्मुहुः ॥३०॥ नूनं नानामदोन्नद्धाः शांतिं नेच्छंत्यसाधवः ॥ तेषां हि प्रशमो दंडः पशूनां लगुडो यथा ॥३१॥ अहो यदून्सुसंरब्धान्कृष्णं च कुपितं शनैः ॥ सांत्वयित्वाऽहमेतेषां शममिच्छन्निहागतः ॥३२॥ त इमे मंदमतयः कलहाभिरताः खलाः ॥ तं मामवज्ञाय मुहुर्दुर्भाषान्मानिनोऽब्रुवन् ॥३३॥ नोग्रसेनः किल विभुर्भोजवृष्ण्यंधकेश्वरः ॥ शक्रादयो लोकपाला यस्यादेशानुवर्तिनः ॥३४॥ सुधर्माक्रम्यते येन पारिजातोऽमरांघ्रिपः ॥ आनीय भुज्यते सोऽसौ न किलाध्यासनार्हणः ॥३५॥ यस्य पादयुगं साक्षाच्छ्रीरुपास्तेऽखिलेश्वरी ॥ स नार्हति किल श्रीशो नरदेवपरिच्छदान् ॥३६॥ यस्यांघ्रिपंकजरजोऽखिललोकपालैर्मौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ॥ ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः श्रीश्चोद्वहेम चिरमस्य नृपासनं क्व ॥३७॥ भुंजते कुरुभिर्दत्तं भूखंडं वृष्णयः किल ॥ उपानहः किल वयं स्वयं तु कुरवः शिरः ॥३८॥ अहो ऐश्वर्यमत्तानां मत्तानामिव मानिनाम् ॥ असंबद्धा गिरो रूक्षाः कः सहेतानुशासि

शब्दान् ॥३३॥ दुर्भाषणमनुस्मरति षड्भिः नोग्रसेन इति विभुराज्ञापयितुं समर्थः ॥३४॥ अहो धृष्टा श्रीकृष्णमप्यधिक्षिपंतीति कुपित आह सुधर्मेत्यादिभिस्त्रिभिः ॥३५॥३६॥ मौल्युत्तमैर्मौलिषु उत्तमांगेषूत्तमैर्मौलिभिरिति वा उपासिता नितीर्थानि येर्योगिभिस्तेषामपि तीर्थं यद्वा उपासितं सर्वैः सेवितं तीर्थं गंगा तस्याः तीर्थं तीर्थत्वनिमित्तं किंच ब्रह्मा भवः श्रीश्च अहमपि उद्वहेम कथंभूता वयं यस्य कलायाः अंशस्य कला अंशाः ॥३७॥३८॥ मत्तानामिव मद्यादिना रूक्षाः परुषाः अनुशासिता स्वयं दंडधरः सन् ॥३९॥

॥ ५०॥ लांगलाग्रेण दक्षिणतः प्राकारमूले निखातेन उद्दिदार्य उत्पाट्य ॥ ५१।५२॥ जिजीविषव इत्यस्य हराधिकं सोढव्यं ॥ ५३॥ मूढानां प्रभावानभिज्ञानां अतिक्रमम् अपराधम् ॥ ५४।५५॥ शेषे शयनं करोषि शेष पर्यंके परिशिष्यमाणो यः स च त्वमेवेति वा ॥ ५६॥ अस्मासु कोपश्चेत्तवाऽयमत्र

अद्य निःकौरवीं पृथ्वीं करिष्यामीत्यमर्षितः ॥ गृहीत्वा हलमुत्तस्थौ दहन्निव जगत्त्रयम् ॥ ५०॥ लांगलाग्रेण नगरमुद्विदार्य गजाह्वयम् ॥ विचकर्ष स गंगायां प्रहरिष्यन्नमर्षितः ॥ ५१॥ जलयानमिवाघूर्णं गंगायां नगरं पतत् ॥ आकृष्यमाणमालोक्य कौरवा जातसंभ्रमाः ॥ ५२॥ तमेव शरणं जग्मुः सकुटुंबा जिजीविषवः ॥ सलक्ष्मणं पुरस्कृत्य सांबं प्रांजलयः प्रभुम् ॥ ५३॥ राम रामाखिलाधार प्रभावं न विदाम ते ॥ मूढानां नः कुबुद्धीनां क्षंतुमर्हस्यतिक्रमम् ॥ ५४॥ स्थित्युत्पत्त्यप्ययानां त्वमेको हेतुर्निराश्रयः ॥ लोकान्क्रीडनकानीश क्रीडतस्ते वदंति हि ॥ ५५॥ त्वमेव मूर्ध्नीदमनंत लीलया भूमंडलं बिभर्षि सहस्रमूर्धन् ॥ अंते च यः स्वात्मनिरुद्धविश्वः शेषे द्वितीयः परिशिष्यमाणः ॥ ५६॥ कोपस्ते ऽखिलशिक्षार्थं न द्वेषान्न च मत्सरात् ॥ बिभ्रतो भगवन्सत्त्वं स्थितिपालनतत्परः ॥ ५७॥ नमस्ते सर्वभूतात्मन्सर्वशक्तिधराव्यय ॥ विश्वकर्मन्नमस्तेऽस्तु त्वां वयं शरणं गताः ॥ ५८॥ श्रीशुक उवाच ॥ एवं प्रपन्नैः संविग्नैर्वेपमानायनैर्बलः ॥ प्रसादितः सुप्रसन्नो मा भैष्टेत्यभयं ददौ ॥ ५९॥ दुर्योधनः पारिबर्हं कुंजरान्षष्टिहायनान् ॥ ददौ च द्वादशशतान्ययुतानि तुरंगमान् ॥ ६०॥ रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसां ॥ दासीनां निष्ककंठीनां सहस्रं दुहितृवत्सलः ॥ ६१॥ प्रतिगृह्य तु तत्सर्वं भगवान्सात्वतर्षभः ॥ ससुतः सस्नुषः प्रायात्सुहृद्भिरभिनंदितः ॥ ६२॥ ततः प्रविष्टः स्वपुरं हलायुधः समेत्य बंधूननुरक्तचेतसः ॥ शशंस सर्वं यदुपुंगवानां मध्ये सभायां कुरुषु स्वचेष्टितम् ॥ ६३॥ अद्यापि च पुरं ह्येतत्सूचयद्रामविक्रमम् ॥ समुन्नतं दक्षिणतो गंगायामनुदृश्यते ॥ ६४॥ इति श्रीभागवते महापुराणे दशमस्कंधे हास्तिनपुरकर्षणेन बलभद्रविजयो नाम अष्टषष्टितमोऽध्यायः ॥ ६८॥

वित एवेत्याहुः कोपस्त इति स्थितिपालने तत्परः तात्पर्यवान्कोपः पाठांतरे संबोधनम् ॥ ५७॥ विश्वं कर्म क्रत्यं यस्य सत्वमिति संबोधनं ॥ ५८॥ वेपमानमयनं पुरं येषां तैः ॥ ५९॥ तुरंगमाश्च द्वादशायुतानि ॥ ६०।६१॥ सुहृद्भिः कौरवैः ॥ ६२॥ मध्ये सभायां सभामध्ये ॥ ६३॥ ६४॥ इति श्रीभागवते महापुराणे दशमस्कंधे टीकायां अष्टषष्टितमोऽध्यायः ॥ ६८॥

राम २७६

एकोनसप्ततितमे गार्हस्थ्यं प्रतिमंदिरम्॥ कृष्णस्य नारदो दृष्ट्वा विस्मितो गात्ततः स्तुवन्॥११॥ दिदृक्षामभिनयेनाह चित्रमिति द्व्यष्टसहस्रं स्त्रियः द्व्यष्टसहस्रस्त्रीः उदावहत् परिणीतवान्॥२॥ तां द्वारवतीमनुवर्णयति पुष्पितेति सार्द्धत्रयेण पुष्पितेषूपवनेषु आरामेषु उद्यानेषु च द्विजानामलीनां च कुलानि तैर्नादिताम्॥३॥ छुरितेषु व्याप्तेषु॥४॥ महामरकतैः प्रख्यायंते प्रकाशंते द्युतितथा तैः स्वर्णरत्नमयाः परिच्छदाः परिकरा येषु तैः॥ पतत्सु प्रचलत्सु पताका येषु तैर्ध्वजैर्वारितः आतपो यस्यां तां॥६॥ तस्यां द्वारकायां सर्वैर्धिष्ण्यपैर्लोकपालैरर्चितम्॥७॥ षोडशभिः सद्मसहस्रैः समलंकृतं

॥श्रीशुकउवाच॥नरकंनिहतंश्रुत्वातथोद्वाहंचयोषिताम्॥कृष्णेनैकेनबह्वीनांतद्दिदृक्षुःस्मनारदः॥१॥चित्रंबतैतदेकेनवपुषायुगपत्पृथक्॥गृहेषुद्व्यष्टसाहस्रंस्त्रियएकउदावहत्॥२॥इत्युत्सुकोद्वारवतींदेवर्षिर्द्रष्टुमागमत्॥पुष्पितोपवनारामद्विजालिकुलनादिताम्॥३॥उत्फुल्लेंदीवरांभोजकह्लारकुमुदोत्पलैः॥छुरितेषुसरःसूच्चैःकूजितांहंससारसैः॥४॥प्रासादलक्षैर्नवभिर्जुष्टांस्फाटिकराजतैः॥महामरकतप्रख्यैःस्वर्णरत्नपरिच्छदैः॥५॥विभक्तरथ्यापथचत्वरापणैःशालासभाभीरुचिरांसुरालयैः॥संसिक्तमार्गांगणवीथिदेहलींपतत्पताकाध्वजवारितातपाम्॥६॥तस्यामंतःपुरंश्रीमदर्चितंसर्वधिष्ण्यपैः॥हरेःस्वकौशलंयत्रत्वष्ट्राकार्त्स्न्येनदर्शितम्॥७॥तत्रषोडशभिःसद्मसहस्रैःसमलंकृतम्॥विवेशैकतमंशौरेःपत्नीनांभवनंमहत्॥८॥विष्टब्धंविद्रुमस्तंभैर्वैदूर्यफलकोत्तमैः॥इन्द्रनीलमयैःकुड्यैर्जगत्याचाहतत्विषा॥९॥वितानैर्निर्मितैस्त्वष्ट्रामुक्तादामविलंबिभिः॥दांतैरासनपर्यंकैर्मण्युत्तमपरिष्कृतैः॥१०॥दासीभिर्निष्ककंठीभिःसुवासोभिरलंकृतं॥पुंभिःसकंचुकोष्णीषसुवस्त्रमणिकुंडलैः॥११॥रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वांतंविचित्रवलभीषुशिखंडिनोऽंग॥नृत्यंतियत्रविहितागुरुधूपमक्षैर्निर्यांतमीक्ष्यघनबुद्धयउन्नदंतः॥१२॥तस्मिन्समानगुणरूपवयःसुवेषदासीसहस्रयुतयानु सवंगृहिण्या॥विप्रोददर्शचमरव्यजनेनरुक्मदंडेनसात्वतपतिंपरि

हरेरंतःपुरं विवेश तत्र चतुस्य शौरेः पत्नीनां भवनेषु एकतमं विवेशेत्यन्वयः यत्र च कौशलं त्वष्ट्रा दर्शितमित्यंतःपुरभवनयोर्विशेषणं॥८॥ तदनुवर्णयति चतुर्भिर्विष्टब्धमिति विद्रुमस्तंभैर्विष्टब्धं विधृतं वैदूर्यमयानि फलकोत्तमानि स्तंभाश्रयाणि छादनानि तैः इन्द्रनीलमयैः कुड्यादिभिश्चोपलक्षितं जगत्या भूमिकया चेन्द्रनीलमय्या न हता त्विट् यस्यास्तया॥९॥ मुक्तादाम्नां विलंबाः विविधानि लंबनानि विद्यंते येषु तैः मण्युत्तमैः परिष्कृतैर्भूषितैः॥१०॥११॥ ईक्ष्य समीक्ष्य घनो मेघोऽयमिति बुद्धिर्येषां ते॥१२॥ अनु सर्वं सर्वकालं आत्मना समाना निर्गुणरू॥पवयांसि सुवेषोऽलंकारश्च यस्य तेन दासीसहस्रेण युतया गृहिण्या सह॥१३॥

श्रियः रुक्मिण्याः पर्यंकं ततः अवीविशत् उपवेशयामास ॥१४॥ अविभ्रत् अबिभः दधारेत्यर्थः बिभ्रदिति शत्रंतं वा तदा संपूज्याभिभाष्य च प्राह इत्युत्तरेणान्वयः कथं भूतः यस्य चरणशौचं गंगा अशेषतीर्थं सः अत एव जगद्गुरुतरोऽपि सतां धर्मभृतां पतित्वादेवमकरोदित्यर्थः सतां पतित्वे हेतुः ब्रह्मण्यदेव इति यद्गुणकृतं नाम तस्यैव यतो युक्तं समंजसं अन्यस्तद्धर्मप्रवर्तनायैवमाचरणमित्यर्थः ॥१५॥ अभिभाष्येदृक्याऽऽत्र स्वागमनमित्यादिप्रियमुक्त्वा ॥१६॥ भगवतास्वस्याहणमन्यमानस्तं भावयन्नाहं नैवेति सर्वमित्रत्वादेवमर्हणन्तु मम गौरवात् तर्हि कथं कंसा

तं सन्निरीक्ष्य भगवान्सहसोत्थितः श्रीपर्यंकतः सकलधर्मभृतां वरिष्ठः ॥ आनम्य पादयुगलं शिरसा किरीटजुष्टेन सांजलिरवीविशदासने स्वे ॥१४॥ तस्यावनिज्य चरणौ तदपः स्वमूर्ध्ना बिभ्रज्जगद्गुरुतरोऽपि सतां पतिर्हि ॥ ब्रह्मण्यदेव इति यद्गुणनाम युक्तं तस्यैव यच्चरणशौचमशेषतीर्थम् ॥१५॥ संपूज्य देवऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन ॥ वाण्याभिभाष्य मितयाऽमृतमिष्टया तं प्राह प्रभो भगवते करवाम हे किम् ॥१६॥ नारद उवाच ॥ नैवाद्भुतं त्वयि विभोऽखिललोकनाथे मैत्री जनेषु सकलेषु दमः खलानाम् ॥ निःश्रेयसाय हि जगत्स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सम्यक् ॥१७॥ दृष्टं तवांघ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि विचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ॥१८॥ ततोऽन्यदाविशद्गेहं कृष्णपत्न्याः स नारदः ॥ योगेश्वरेश्वरस्यांग योगमायाविवित्सया ॥१९॥ दीव्यंतमक्षैस्तत्रापि प्रियया चोद्धवेन च ॥ पूजितः परया भक्त्या प्रत्युत्थानासनादिभिः ॥२०॥ पृष्टश्चाविदुषेवासौ कदायातो भवानिति ॥ क्रियते किन्नु पूर्णानामपूर्णैरस्मदादिभिः ॥२१॥ अथापि ब्रूहि नो ब्रह्मन् जन्मैतच्छोभनं कुरु ॥ स तु विस्मित उत्थाय तूष्णीमन्यदगाद्गृहम् ॥२२॥ तत्राप्यचष्ट गोविंदं लालयंतं सुताञ्छिशून् ॥ ततोऽन्यस्मिन् गृहेऽपश्यन्मज्जनाय कृतोद्यमम् ॥२३॥

((दिष्टमैत्री तत्राह खलानां दमश्च नैवाद्भुतमिति कुतः जगतः स्थितिर्धारणं रक्षणं पालनं ताभ्यां सह तस्य निःश्रेयसाय तवायं स्वेच्छावतार इति वयं सुष्ठु सम्यग्विद्मः अतः खलदमः साधुसंमाननं च युक्तमिति भावः ॥१७॥ यदुक्तं प्रभो किं करवामेति तत्राह दृष्टमिति भक्तजनताया अपवर्गरूपं किन्त्व अतिदुर्लभतया ब्रह्मादिभिर्योगेश्वरैरपि हृदि विचिंत्यं किंच संसारकूपपतितानामुत्तरणाय अवलंबं आश्रयं एवंभूतं तवांघ्रियुगलं ———— मया दृष्टं अतः कृतकृत्योऽस्मि तथापि त्वत्स्मृतिर्यथा स्यात्तथा अनुगृहाण न तत्तेलक्ष्याय ॥ नैव निर्व्यं चरामीति ॥१८॥१९॥ अक्षैर्दीव्यंतं इत्यादीदृग्दृर्शनं तिस्रा्नस्य ॥२०॥२१॥२२॥२३॥

वितानाग्नीनाहवनीयादीनग्निहोत्रेणपंचभिर्मखैर्महायज्ञैर्यजंतम्॥२४॥२५॥२६॥२७॥२८॥२९॥३०॥३१॥कालेनतत्तत्समयेविधिनाउपयापनेप्र
पणंविवाहमित्यर्थः कल्पयंतंघटयंतंविभूतिभिःविभवैः॥३२॥प्रस्थापनेदुहितृजामात्रादीनांस्वगृहात्तद्गृहंप्रतिनयनम् उपानयनंतद्गृहात्पु
नरानयनंतैर्महोत्सवान्कल्पयंतंयोगेश्वरेशस्यतेषामपत्यानांमहोत्सवान्वीक्ष्यलोकाःसर्वेविसिस्मिरेविस्मयंचक्रुःतथाभूतान्कल्पयं

गृहंतंचवितानाग्नीन्यजंतंपंचभिर्मखैः॥भोजयंतंद्विजान्क्वापिभुंजानमवशेषितम्॥२४॥क्वापिसंध्यामुपासीनंजपंतं
ब्रह्मवाग्यतम्॥एकत्रचासिचर्मभ्यांचरंतमसिवर्त्मसु॥२५॥अश्वैर्गजैरथैःक्वापिविचरंतंगदाग्रजम्॥क्वचिच्छयानंपर्यं
केस्तूयमानंचवंदिभिः॥२६॥मंत्रयंतंचकस्मिंश्चिन्मंत्रिभिश्चोद्धवादिभिः॥जलक्रीडारतंक्वापिवारमुख्याबलावृतम्॥
२७॥कुत्रचिद्द्विजमुख्येभ्योददतंगाःस्वलंकृताः॥इतिहासपुराणानिशृण्वंतंमंगलानिच॥२८॥हसंतंहासकथयाकदा
चित्प्रिययागृहे॥क्वापिधर्मंसेवमानमर्थकामौचकुत्रचित्॥२९॥ध्यायंतमेकमासीनंपुरुषंप्रकृतेःपरम्॥शुश्रूषंतंगु
रून्क्वापिकामैर्भोगैःसपर्यया॥३०॥कुर्वंतंविग्रहंकैश्चित्संधिंचान्यत्रकेशवम्॥कुत्रापिसहरामेणचिंतयंतंसतांशिवम्
॥३१॥पुत्राणांदुहितृणांचकालेविध्युपयापनम्॥दारैर्वरैस्तत्सदृशैःकल्पयंतंविभूतिभिः॥३२॥प्रस्थापनोपानयनैर
पत्यानांमहोत्सवान्॥वीक्ष्ययोगेश्वरेशस्ययेषांलोकाविसिस्मिरे॥३३॥यजंतंसकलान्देवान्क्वापिक्रतुभिरूर्जितैः॥
पूर्तयंतंक्वचिद्धर्मंकूपाराममठादिभिः॥३४॥चरंतंमृगयांक्वापिहयमारुह्यसैंधवम्॥घ्नंतंतत्रपशून्मेध्यान्परीतंय
दुपुंगवैः॥३५॥अव्यक्तलिंगंप्रकृतिष्वंतःपुरगृहादिषु॥क्वचिच्चरंतंयोगेशंतत्तद्भावबुभुत्सया॥३६॥अथोवाचहृषीके
शंनारदःप्रहसन्निव॥योगमायोदयंवीक्ष्यमानुषीमीयुषोगतिम्॥३७॥विदामयोगमायास्तेदुर्दर्शाअपिमायिनाम्॥यो
गेश्वरात्मन्निर्भाताभवत्पादनिषेवया॥३८॥अनुजानीहिमांदेवलोकांस्तेयशसाप्लुतान्॥पर्यटामितवोद्गायन्लीलां
भुवनपावनीम्॥३९॥श्रीभगवानुवाच॥ब्रह्मन्धर्मस्यवक्ताहंकर्तातदनुमोदिता॥तच्छिक्षयंल्लोकमिममास्थितः

तम्॥३३॥३४॥३५॥अव्यक्तलिंगंवेषांतरेणच्छन्नं॥३६॥३७॥हेयोगेश्वरआत्मन्आत्मनिममनसितवस्वरूपेवानिर्भाताःप्रतीतास्तवयोग
मायाःकेवलंविदामविद्मःनतुत्वत्परमार्थमितिभावः॥३८॥त्वन्मात्रपनाट्येनमुह्यामिअतोमांप्रस्थापयेत्याहअनुजानीहीति॥३९॥तत्तस्मा
॥ल्लोकंशिक्षयन्निमंधर्ममास्थितःनतुनत्वतःहेपुत्रमाखिदःमोहंमामाप्नुहीति॥४०॥

इतिएवमनुगृहीतस्तमेकमेवसंतंददर्शेति ॥४१॥ मुहुर्मुहुर्दृष्ट्वाजातकौतुकोमुनिर्विस्मितोऽभूदिति ॥४२॥ श्रद्धितःश्रद्धयायुक्तःआत्मायस्यतेन॥ ४३॥ नारदहृष्टांकृष्णलीलांनिगमयतिएवमितिअखिलस्यभवायउद्भवायगृहीताःशक्तयोनानामूर्तयोयेनसः सव्रीडंचतत्सौहृदंचतेननिरीक्षणंहासश्चताभ्यांजुष्टः ॥४४॥ अनन्यविषयाणिअसाधारणानिअपवर्गमार्गेमोक्षप्रदे ॥४५॥ इतिदशमेटीकायामेकोनसप्ततितमोऽध्यायः ॥६९॥ ततस्तुसप्ततितमेकृष्णस्याह्निककर्मणि। दूतनारदयोःकार्य्येकार्यमंत्रविचारणम् ॥१॥ जगन्मंगलचारित्रमाह्निकंजगदीशितुः। नारदेनकाचित्किंचिद्दृष्टमाहयथाक्रमं॥२॥ अथेतिअर्थधर्मकामेषुकृष्णेनश्रद्धितात्मनेतिप्रस्तुतस्यश्रीकृष्णस्याह्निकस्याधिकारेऽथशब्दः उपवृत्तायांआसन्नायांपतिभिःश्री

श्रीशुकउवाच॥ इत्याचरंतंसद्धर्मान्पावनान्गृहमेधिनाम्॥ तमेवसर्वगेहेषुसंतमेकंददर्शह॥४१॥ कृष्णस्यानंतवीर्यस्य योगमायामहोदयम्॥ मुहुर्दृष्ट्वाऋषिरभूद्विस्मितोजातकौतुकः॥४२॥ इत्यर्थकामधर्मेषुकृष्णेनश्रद्धितात्मना॥ सम्यक् सभाजितःप्रीतस्तमेवानुस्मरन्ययौ॥४३॥ एवंमनुष्यपदवीमनुवर्त्तमानोनारायणोऽखिलभवायगृहीतशक्तिः॥ रेमेथषोड शसहस्रवरांगनानांसव्रीडसौहृदनिरीक्षणहासजुष्टः॥४४॥ यानीहविश्वविलयोद्भववृत्तिहेतुःकर्माण्यनन्यविषया णिहरिश्चकार॥ यस्त्वंगगायतिशृणोत्यनुमोदतेवाभक्तिर्भवेद्भगवतिह्यपवर्गमार्गे॥४५॥ इतिश्रीभागवतेमहापुरा णेदशमस्कंधेएकोनसप्ततितमोऽध्यायः॥६९॥ श्रीशुकउवाच॥ अथोषस्युपवृत्तायांकुक्कुटान्कूजतोऽशपन्॥ गृहीतकं ठ्यःपतिभिर्माधव्योविरहातुराः॥१॥ वयांस्यरूरुवन्कृष्णंबोधयंतीवबंदिनः॥ गायत्स्वलिषुनिद्राणिमंदारवनवा युभिः॥२॥ मुहूर्तंतंतुवैदर्भीनामृष्यदतिशोभनम्॥ परिरंभणविश्लेषात्प्रियबाह्वंतरंगता॥३॥ ब्राह्मेमुहूर्तउत्थायवा र्युपस्पृश्यमाधवः॥ दध्यौप्रसन्नकरणआत्मानंतमसःपरम्॥४॥ एकंस्वयंज्योतिरनन्यमव्ययंस्वसंस्थयानित्यनिरस्त कल्मषम्॥ ब्रह्माख्यमस्योद्भवनाशहेतुभिःस्वशक्तिभिर्लक्षितभावनिर्वृतिम्॥५॥

(( कृष्णोः माधव्योमाधवस्यभार्याः॥१॥ वंदिनइव श्रीकृष्णंबोधयंतिसंतिवयांसिपक्षिणोऽरूरुवन् अतिशयेनाकूजन् मंदारवनवायुभिर्गायत्स्वलिषुनिद्राणिनिद्रारहितानिवयांसि॥२॥ वैदर्भीसुपलक्षणंपरिरंभणविश्लेषंतंपर्य्यालोच्य॥३॥ एकंअखंडंतत्रहेतुःअनन्यंनिरुपाधिंअतएवाव्ययंनित्यंस्वयंज्योतिस्त्वेहेतुःनित्यनिरस्तंनित्यनिवृत्तंकल्मषंअविद्यायस्मात्तदुपलक्षणमाह अस्येति अस्यविश्वस्यलक्षितभावश्चासौनिर्वृतिश्चभावःसत्तानिर्वृतिरानंदः तयाहिगुणक्षोभात्पूर्वंसर्वंसत्तामात्रमेवसदेवसौम्येदमग्रआसीदित्यादिश्रुतेः सएवानंदस्यविज्ञानमानंदमित्यादिश्रुतेः तेसदानंदमित्यर्थः॥५॥

आप्लुतः स्नातः संध्याया उपगम उपासनं आदिर्यस्या भवति तथा क्रियाकलापं चकार काण्वत्वादुदयात्पूर्वमेव हुतानलो ब्रह्म गायत्रीं जजाप ॥६॥ कलाः अंशान् देवान् ऋषीन् पितॄंश्च तर्पयित्वा ॥७॥ गृष्टीनां प्रथमप्रसूतानां ॥८॥ बद्वमिति हिरण्येन परीवृतान् कृष्णान् शुक्लदतो मृगान् सप्तारि भरतो ददौ च्छतं बद्वानि सप्त चेति श्रुत्युक्तानि सप्ततो नरशतं बद्वान्येकीकृत्य पुराणे चतुर्दशलक्षत्वेन गणितानि यथोक्तं भरतमेवाधिकृत्य नवमस्कंधे मृगान् शुक्लदतः कृष्णान् सुवर्णेन परिष्कृतान् अदात्कर्मणि मष्णारे नियुतानि चतुर्दशेति ततश्चैवं बद्वसंख्या श्लोकेन संगृह्यते चतुर्दशानां लक्षाणां समाधिकश

अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापं परिधाय वाससी ॥ चकार संध्योपगमादि सत्तमो हुतानलो ब्रह्म जजाप वाग्यतः ॥६॥ उपस्थायार्कमुद्यंतं तर्पयित्वात्मनः कलाः ॥ देवानृषीन्पितॄन्वृद्धान्विप्रानभ्यर्च्य चात्मवान् ॥७॥ धेनूनां रुक्मशृंगीणां साध्वीनां मौक्तिकस्रजाम् ॥ पयस्विनीनां गृष्टीनां सवत्सानां सुवाससाम् ॥८॥ ददौ रूप्यखुराग्राणां क्षौमाजिनतिलैः सह ॥ अलंकृतेभ्यो विप्रेभ्यो बद्वं बद्वं दिने दिने ॥९॥ गोविप्रदेवतावृद्धगुरून्भूतानि सर्वशः ॥ नमस्कृत्यात्मसंभूतीर्मंगलानि समस्पृशत् ॥१०॥ आत्मानं भूषयामास नरलोकविभूषणम् ॥ वासोभिर्भूषणैः स्वीयैर्दिव्यस्रगनुलेपनैः ॥११॥ अवेक्ष्याज्यं तथादर्शं गोवृषद्विजदेवताः ॥ कामांश्च सर्ववर्णानां पौरांतःपुरचारिणाम् ॥ प्रदाप्य प्रकृतीः कामैः प्रतोष्य प्रत्यनंदत ॥१२॥ संविभज्याग्रतो विप्रान्स्रक्तांबूलानुलेपनैः ॥ सुहृदः प्रकृतीर्दारानुपायुंक्त ततः स्वयम् ॥१३॥ तावत्सूत उपानीय स्यंदनं परमाद्भुतम् ॥ सुग्रीवाद्यैर्हयैर्युक्तं प्रणम्यावस्थितोऽग्रतः ॥१४॥ गृहीत्वा पाणिना पाणी सारथेस्तमथारुहत् ॥ सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥१५॥ ईक्षितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः ॥ कृच्छ्राद्विसृष्टो निरगाज्जातहासो हरन्मनः ॥१६॥ सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः ॥ प्राविशद्यन्निविष्टानां न संत्यंग षडूर्मयः ॥१७॥ तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन् ॥ वृतो नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः ॥१८॥

चतुरशीत्यग्रसहस्राणि त्रयोदशेति दिने दिने च प्रतिग्रहं चेति ॥९॥ आत्मसंभूतीः स्वविभूतीः मंगलानि कपिलादीनि ॥१०॥ ताशकं बद्वं लानं नरलोकस्य विभूषणरूपम् स्वीयैः पीतांबरकौस्तुभादिभिः ॥११॥ कामानभिलषितानर्थान् ॥१२॥ विप्रादीन् स्रगादिभिः संविभज्य तेभ्यस्तानि दत्त्वेत्यर्थः उपायुंक्त भोगार्थमग्रहीत् ॥१३॥१४॥ पाणिर्हस्तं जलौ गृहीत्वा ॥१५॥ सव्रीडप्रेमवीक्षितैरीक्षितः सन् स्थितस्ताभिरेव वीतैः कृच्छ्राद्विसृष्टो निरगादिति ॥१६॥ एवं सर्वगृहेभ्यः पृथक् पृथङ्निर्गत्यानंतरं एक एव सन् सुधर्मां प्राविशत् यन्निविष्टानां यत्र प्रविष्टानाम् ॥१७॥ नृसिंहैर्नृश्रेष्ठैः ॥१८॥ ७ ॥ श्री ॥ ७ ॥

उपमंत्रिणः परिहासकाः पृथक्पृथक्त्वस्वसमुदाये॥१९॥मृदंगादयः प्रसिद्धाः दरः शंखः सूतादयस्तुष्टुवुः॥२०॥ब्राह्मणाः ब्रह्मवेदमाहुर्मंत्रान्
व्याचक्षतेत्यर्थः वादिनः वादनचतुराः॥२१॥२२॥२३॥गिरिव्रजे नतत्संज्ञके दुर्गे रुद्धा आसन् तेषां च दुःखमावेदयदित्यन्वयः॥२४॥कृष्ण कृष्णेति
षट्श्लोकैराज्ञां विज्ञप्तिः तत्र प्रथमेन शरणाश्रयणं त्रिभिर्भयानुवादः द्वाभ्यां प्रार्थनमिति पृथग्धियः पृथग्दर्शिनः॥२५॥पृथग्दर्शिनो लोकस्य
भवभयं विवृण्वतो नमं ति लोक इति विकर्मनिषिद्धं काम्यं च तत्र स्मिन्नितरां रतः स्वेकुशले धर्मे भवतो ऽर्चने त्वया उदिते उक्ते पंचरात्रे सामान्यतश्च गी
तासु यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणमिति प्रमत्तो ऽनवहितो यावदयं लोकः तावदेवास्य लोकस्य यः

तत्रोपमंत्रिणो राजन्नानाहास्यरसैर्विभुम्॥उपतस्थुर्नटाचार्या नर्तक्यस्तांडवैः पृथक्॥१९॥मृदंगवीणामुरजवेणुतालदर
स्वनैः॥ननृतुर्जगुस्तुष्टुवुश्च सूतमागधवंदिनः॥२०॥तत्राहुर्ब्राह्मणाः केचिदासीना ब्रह्मवादिनः॥पूर्वेषां पुण्ययशसां राज्ञां चा
कथयन्कथाः॥२१॥तत्रैकः पुरुषो राजन्नागतो ऽपूर्वदर्शनः॥विज्ञापितो भगवते प्रतीहारैः प्रवेशितः॥२२॥स नमस्कृत्य कृ
ष्णाय परेशाय कृतांजलिः॥राज्ञामावेदयद्दुःखं जरासंधनिरोधजम्॥२३॥ये च दिग्विजये तस्य सन्नतिं न ययुर्नृपाः॥प्रसह्य
रुद्धास्तेनासन्नयुते द्वे गिरिव्रजे॥२४॥कृष्ण कृष्णाप्रमेयात्मन्प्रपन्नभयभंजन॥वयं त्वां शरणं यामो भवभीताः पृथग्धियः
॥२५॥लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे॥यस्तावदस्य बलवानिह जीविताशां सद्यश्छि
नत्त्यनिमिषाय नमो ऽस्तु तस्मै॥२६॥लोके भवान् जगदिनः कलयावतीर्णः सद्रक्षणाय खलनिग्रहणाय चान्यः॥कश्चि
त्त्वदीयमतियाति निदेशमीश किं वा जनः स्वकृतमृच्छति तन्न विद्मः॥२७॥स्वप्नायितं नृपसुखं परतंत्रमीश शश्वद्भये
न मृतकेन धुरं वहामः॥हित्वा तदात्मनि सुखं त्वदनीहलभ्यं क्लिश्यामहे ऽतिकृपणास्तव माययेह॥२८॥((सद्यो जीविताशां छि

नत्ति तस्मै तुभ्यमनिमिषाय कालात्मने नम इति॥२६॥सेयं लोकस्य गतिः वयं तु त्वद्भक्ताः अतो ऽस्माकं कुत एतद्दुःखमापन्नमित्याश्चर्येणाहुः लो
क इति भोः इश जगदिनः ईश्वरः त्वयि सद्रक्षणार्थमवतीर्णे ऽपि चेदस्माकं दुःखं स्यात् तर्हि किमन्यः कश्चिज्जरासंधादिस्त्वदाज्ञामपि लंघयति किं
च त्वया रक्षमाणो ऽपि जनः स्वकर्मजं दुःखं प्राप्नोत्येवेति न विद्मः न चैतदुभयमपि युक्तमिति भावः॥२७॥किं दुःखं तदाहुः स्वप्नायितमिति स्वप्नवज्जातं
नृपसुखं स्वपो ऽपि विनश्वरं तु यतः परतंत्रं विषयसाध्यं किं च समनिशं भयं यस्मिन् तेन मृतकतुल्येन शरीरेण धुरं प्रजारादिचिंतां केवलं वहामः अहो
[illegible]

त्वन्मायया कृतं कर्मबंधं त्वमेव निर्वर्तयेति प्रार्थयन्ते तन्न इति विमुंच्व विमोचय मगधो जरासंधः तत्संज्ञकात् कर्मपाशात् भवद्भिरेव विक्रम्यतां ततो निर्गम्यतामिति चेत्तत्राहुः यइति य एक एवायुतगजानां वीर्यं बिभ्रत्स्वभवने भूभुजोऽस्मान्रोधसि सिंहो मेषीरिव ॥ २९ ॥ किंच युष्मदीयावयमित्यस्मानधिकमेव बाधत इत्याहुः यो वा इति हे उदात्तचक्र उद्यत सुदर्शन यो वै हि नवकृत्वः अष्टादशवारान् त्वया सह मृधे वर्तमानेन तत्र सप्तदशकृत्वः त्वया खलु भग्नः पराजितः पश्चादनंतवीर्यमपि नृलोके निरतं नरशरीरविनोदं भवंतं सकृज्जित्वा ऊढदर्पः प्राप्तगर्वः युष्मत्प्रजानः रुजति पीडयति तत्तत्र यद्युक्तं तद्विधेहीत्यर्थः ॥ ३० ॥ दूत आह इतीति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ भूयान्महान्गुणो लाभोऽयमस्माकं सर्वलोकवर्तीतज्ज्ञानमिति ॥ ३५ ॥ ईश्वरः कर्ता ये

तन्नो भवान्प्रणतशोकहरांघ्रियुग्मो बद्धान्वियुंक्ष्व मगधाह्वयकर्मपाशात् ॥ यो भूभुजोऽयुतमतंगजवीर्यमेको बिभ्रद्रुरोध भवने मृगराडिवावीः ॥ २९ ॥ यो वै त्वया द्विनवकृत्व उदात्तचक्र भग्नो मृधे खलु भवंतमनंतवीर्यम् ॥ जित्वा नृलोकनिरतं सकृदूढदर्पो युष्मत्प्रजा रुजति नोऽजित तद्विधेहि ॥ ३० ॥ दूत उवाच ॥ इति मागधसंरुद्धा भवद्दर्शनकांक्षिणः ॥ प्रपन्नाः पादमूलं ते दीनानां शं विधीयताम् ॥ ३१ ॥ श्रीशुक उवाच ॥ राजदूते ब्रुवत्येवं देवर्षिः परमद्युतिः ॥ बिभ्रत्पिंगजटाभारं प्रादुरासीद्यथा रविः ॥ ३२ ॥ तं दृष्ट्वा भगवान्कृष्णः सर्वलोकेश्वरेश्वरः ॥ ववंद उत्थितः शीर्ष्णा ससभ्यः सानुगो मुदा ॥ ३३ ॥ सभाजयित्वा विधिवत्कृतासनपरिग्रहम् ॥ बभाषे सूनृतैर्वाक्यैः श्रद्धया तर्पयन्मुनिम् ॥ ३४ ॥ अपि स्विदद्य लोकानां त्रयाणामकुतोभयम् ॥ ननु भूयान्भगवतो लोकान्पर्यटतो गुणः ॥ ३५ ॥ न हि तेऽविदितं किंचिल्लोकेष्वीश्वरकर्तृषु ॥ अथ पृच्छामहे युष्मान्पांडवानां चिकीर्षितम् ॥ ३६ ॥ श्रीनारद उवाच ॥ दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः ॥ भूतेषु भूमंश्चरतः स्वशक्तिभिर्वन्हेरिव च्छन्नरुचो न मेऽद्भुतम् ॥ ३७ ॥ तवेहितं कोऽर्हति साधु वेदितुं स्वमायये दं सृजतो निय

षान्तेषु ॥ ३६ ॥ एवमविदुषे सर्वज्ञेन जरासंधवधार्थमेव पांडवचिकीर्षितं पृष्टो नारदो मायेयमिति ज्ञात्वाह दृष्टा इति त्रिभिः विश्वसृजश्च ब्रह्मणोपि मायिनो मोहकस्येति स्वशक्तिभिर्विद्यादिभिर्भूतेष्वंतर्यामितया चरतो वर्तमानस्य यद्यहं भूतेषु वर्ते न हि भूतानि मां किं न पश्यंति तत्राह वन्हेरिव च्छन्नरुच इति स्वशक्तिभिरेव च्छन्नाह कृप्रकाशो यस्य तस्य अतस्त्वेदं प्राप्तादिनमेऽद्भुतम् ॥ ३७ ॥ इदं जगत् कथंभूतं असदेव यतत्वमायया विद्यमानात्मतयाऽवभासते तज्जगत्सृजतः किंतु केवलं तेन भ्यनमनमेव शाक्यमित्याह न स्मैन म इति क्रांतः स्वेन रूपेण सर्वतो विलस

चिंतयेत्यर्थः ॥३८॥ नन्वेवंभूतस्य किं मायाचेष्टितैरित्यत आह जीवस्येति अविद्यातमसावृतत्वेन अनर्थप्रापकाच्छरीरात्संसरतस्तेनैव तमसा तस्माच्छरीराद्विमोक्षोपायमजानतः प्राज्वालयत् प्रदीपितवान् तं त्वां त्वां यशः श्रवणादिभिर्जीवस्य मोक्षार्थमित्यर्थः ॥३९॥ आश्रावये श्रावयिष्यामि नरलोकविडंबनं ब्रह्मन् त्वां ब्रह्मन्निति पाठेऽपि हे ब्रह्मन् परमात्मन् नरलोकानुकारिणं त्वां श्रावयिष्यामीति ॥४०॥४१॥ न चात्रैवानुमोदनं कार्यं किंतु तत्रागंतव्यमित्याशयेनाह तस्मिन्निति ॥४२॥ तत्रागताश्च सर्वे त्वद्दर्शनादिना पूता भविष्यन्तीत्याह श्रवणादिति अन्तेवसायिनः श्वपचा अपि ब्रह्ममयस्य ब्रह्मघनमूर्त्तेः ईक्षा च अभिमर्शः स्पर्शनं च तौ विद्येते येषां ते ॥४३॥ किमुत्यमतिशयेनाह यस्येति हे भुवनानां मंगलरूप दिवि पाताले

यद्विद्यमानात्मतयाऽवभासते तस्मै नमस्ते स्वविलक्षणात्मने ॥३८॥ जीवस्य यः संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः ॥ लीलावतारैः स्वयशः प्रदीपकं प्राज्वालयत्त्वा तमहं प्रपद्ये ॥३९॥ अथाप्याश्रावये ब्रह्मन्नरलोकविडंबनम् ॥ राज्ञः पैतृष्वसेयस्य भक्तस्य च चिकीर्षितम् ॥४०॥ यक्ष्यति त्वां मखेंद्रेण राजसूयेन पांडवः ॥ पारमेष्ठ्यकामो नृपतिस्तद्भवाननुमोदताम् ॥४१॥ तस्मिन्देव क्रतुवरे भवंतं वै सुरादयः ॥ दिदृक्षवः समेष्यंति राजानश्च यशस्विनः ॥४२॥ श्रवणात्कीर्त्तनाद्ध्यानात्पूयंतेऽन्तेवसायिनः ॥ तव ब्रह्ममयस्येश किमुतेक्षाभिमर्शिनः ॥४३॥ यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते भुवनमंगल दिग्वितानम् ॥ मंदाकिनीति दिवि भोगवतीति चाधो गंगेति चेह चरणांबु पुनाति विश्वम् ॥४४॥ श्रीशुक उवाच ॥ तत्र तेष्वात्मपक्षेष्वगृण्हत्सु विजिगीषया ॥ वाचः पेशैः स्मयन्भृत्यमुद्धवं माह केशवः ॥४५॥ श्रीभगवानुवाच ॥ त्वं हि नः परमं चक्षुः सुहृन्मंत्रार्थतत्ववित् ॥ अथात्र ब्रूह्यनुष्ठेयं श्रद्दध्मः करवाम तत् ॥४६॥ इत्युपामंत्रितो भर्त्रा सर्वज्ञेनापि मुग्धवत् ॥ निदेशं शिरसाधाय उद्धवः प्रत्यभाषत ॥४७॥ इति श्रीभागवते महापुराणे दशमस्कन्धे भगवद्यानेसप्ततितमोऽध्यायः ॥ ॥७०॥

भूमौ च प्रथितं यस्य यशो विश्वं पुनातीति कथं प्रथितम् दिग्वितानं दिग्भवनानां वितानवदलंकरणं तथा चरणांबु च प्रथितं पुनाति कथं तत्प्रथितं दिवि मंदाकिनीति अधश्च भोगवतीति इह च भूमौ गंगेति तस्य तवागमनात्सर्वं मंगलं पवित्रं च भविष्यतीति भावः ॥४४॥ तत्रैवं नारदेनोक्ते पुर्वर्तमानेषु आत्मीयपक्षेषु यादवेषु जरासंधस्य जिगीषया अगृण्हत्सु अमन्यमानेषु वाचः पेशैः पेशलवाग्भिरित्यर्थः ॥४५॥ चक्षुरिव हेतुः मंत्रा यंतानां मंत्रणामाममंतत्वविदिति परिपाकविदिति ॥४६॥४७॥ इति श्रीदशमस्कंधे टीकायां सप्ततितमोऽध्यायः ॥७०॥ ६ ॥ ६ ॥

अथैकसप्ततितमे उद्धवस्य तु मंत्रतः। इंद्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः॥१॥ राजसूयमभिषेकं कृत्वा भीमदुर्योधनादिषु कलिमुत्पाद्य तद्द्वारा भूभारमहरत्प्रभुः॥२॥ देवर्षेर्मतं राजसूयगमनं सभ्यानां मतं राजरक्षा कृष्णस्य तु भयं॥१॥ यक्ष्यतः यागं करिष्यतः पैतृष्वसेयस्य पितृष्वसुः पुत्रस्य साचिव्यं साहाय्यं तच्च कार्यं तथा शरणार्थिनां राज्ञां रक्षा च कार्या॥२॥ तत्र प्रथमं राजसूयार्थं गंतव्यं ततो राजरक्षा कर्तव्येत्याह यष्टव्यमित्यष्टभिः अतः दिग्विजयहेतोः उभयार्थः राजसूयार्थः शरणागतरक्षणार्थश्च॥३।४॥ अत्युत्सुकतया सद्य एव जरासंधं हंतुमिच्छतो यादवानालक्ष्याह स वा इति अन्येषां तु ततो बलिनामपि यद्यपि समबल एव भीमस्तथापि तं विना भीमादेव तस्य मृत्युर्विहित इति भावः ननु स्वबलसाम्येपि सेनाबलं तस्याधिकमिति चेत्तत आह द्वैरथ इति हे इह युद्धे शतेनाक्षौहिणीभिर्युतो मागधो मा न जेतव्य इत्यर्थः नन्वसौ स्वसैन्यमेव युद्धाय नियुंजीत कुतस्तेन द्वैरथमिति तत्राह ब्रह्म

॥श्रीशुकउवाच॥ इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत्॥ सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः॥१॥ श्रीउद्धवउवाच॥ यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया॥ कार्यं पैतृष्वसेयस्य रक्षा च शरणैषिणाम्॥२॥ यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो॥ अतो जरासुतजय उभयार्थो मतो मम॥३॥ अस्माकं च महानर्थो ह्येतेनैव भविष्यति॥ यशश्च तव गोविंद राज्ञो बद्धान् विमुंचतः॥४॥ स वै दुर्विषहो राजा नागायुतसमो बले॥ बलिनामपि चान्येषां भीमं समबलं विना॥५॥ द्वैरथे स तु जेतव्यो मा शताक्षौहिणीयुतः॥ ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित्॥६॥ ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः॥ हनिष्यति न संदेहो द्वैरथे तव सन्निधौ॥७॥ निमित्तं परमीशस्य विश्वसर्गनिरोधयोः॥ हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव॥८॥ गायंति ते विशदकर्म गृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च॥ गोप्यश्च कुंजरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयो वयं च॥९॥

((ब्रह्मण्य इति न प्रत्याख्याति न निराकरोति॥६॥ भिक्षेत हे द्वंद्वयुद्धं याचतां तथापि समबलत्वात्साम्यमेव स्यादित्त आह तव सन्निधाविति॥७॥ ननु अकिंचित्कुर्वतो मम सन्निधानात् किं स्यादत आह निमित्तमिति अयमर्थः यथा तवारूपस्य कालात्मनो विश्वसर्गे निमित्तं केवलं हिरण्यगर्भस्तथा शर्वश्च तन्निरोधे तथा त्वमेव सन्निधिमात्रेण हंता भीमो निमित्तमात्रमिति॥८॥ अतोऽनेनोपायेन त्वया स शीघ्रं हंतव्य इत्याशयेनाह गायंतीति जरासंधधृतानां राज्ञां देव्यः पत्न्यः ते विशदं कर्म स्वगृहेषु बालकलालनादौ गायंति किं तत्कर्म स्वशत्रोर्जरासंधस्य वधं आत्मनां पतीनां विमोक्षणं च वत्स मा रोदीः करुणार्णवः श्रीकृष्ण एवं करिष्यतीति अत्र दृष्टांतः गोप्यश्चेत्यादि यथा गोप्यः शंखचूडवधं स्वमोक्षं च गायन्ति अघतारीं नरगतं च कुंजरपतेर्नक्रात् जनकात्मजायाश्च रावणात् पित्रोश्च कंसगृहान्मोक्षणं अत एवंभूतानां नासाङ्कुपया त्वया तथैव कर्तव्य

किंचजरासंधवधइतिभूर्य्यर्थायेतिततःशिशुपालवधादयोपिसुखसाध्याभविष्यन्तीतिभावःएतच्चसर्वंभविष्यत्येवेतिसंभावयन्नाहप्रायइ
तिपच्यतइतिपाकःकर्मतस्यविपाकःफलंतस्यराज्ञांपुण्यविपाकेनजरासंधादीनांपापविपाकेनेतिपाठांतरेतस्यजरासंधस्यपापविपाकेनेतिते
नायंक्रतुस्तवाभिमेतःतत्रगतेत्वयिसर्वंभविष्यतीत्यर्थः॥१०॥अच्युतंउपपत्त्याव्यूढंयदुवृद्धाइतिवदन्ननिरुद्धादयस्तथानापूजयन्नितिसूचि
तम्॥११॥अनुज्ञाप्यअनुज्ञांमाप्यगुरूंश्चसुदेवादीन्॥१२॥अवरोधान्स्वान्दारान्निर्गमय्यप्रयाणंकारयित्वा॥१३॥भटाःपदातयःसादिनःअ
श्वारोहाःरथादिनायकैःकरालयातीव्रयाआत्मसेनयोपरिवृतोनिराक्रमत्निरगात्ककुभःसकाशान्मृदंगादिभिर्वाद्यैःप्रघोषेणघोषितायाःक

जरासंधवधःकृष्णभूर्य्यर्थायोपकल्पते॥प्रायःपाकविपाकेनतवचाभिमतःक्रतुः॥१०॥श्रीशुकउवाच॥इत्युद्धववचो
राजन्सर्वतोभद्रमच्युतम्॥देवर्षिर्यदुवृद्धाश्चकृष्णश्चप्रत्यपूजयन्॥११॥अथादिशत्प्रयाणायभगवान्देवकीसुतः॥भृत्या
न्दारुकजैत्रादीननुज्ञाप्यगुरून्विभुः॥१२॥निर्गमय्याऽवरोधान्स्वान्ससुतान्सपरिच्छदान्॥संकर्षणमनुज्ञाप्ययदुराजंच
शत्रुहन्॥सूतोपनीतंस्वरथमारुहद्गरुडध्वजम्॥१३॥ततोरथद्विपभटसादिनायकैःकरालयापरिवृतआत्मसेनया॥मृदं
गभेर्य्यानकशंखगोमुखैःप्रघोषघोषितककुभोनिराक्रमत्॥१४॥नृवाजिकाञ्चनशिबिकाभिरच्युतंसहात्मजाः पतिम
नुसुव्रताययुः॥वराम्बराभरणविलेपनस्रजःसुसंवृतानृभिरसिचर्मपाणिभिः॥१५॥नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणु
भिःपरिजनवारयोषितः॥स्वलंकृताःकटकुटिकंबलांबराद्युपस्करायपुरधियुज्यसर्वतः॥१६॥बलंबृहद्ध्वजपटछत्रचाम
रैर्वरायुधाभरणकिरीटवर्मभिः॥ दिवांऽशुभिस्तुमुलरवंबभौरवेर्य्यथार्णवःक्षुभिततिमिंगिलोर्मिभिः॥१७॥अथोमुनि
र्यदुपतिनासभाजितःप्रणम्यतंहृदिविदधद्विहायसा॥निशम्यतद्व्यवसितमाहृतार्हणोमुकुंदसंदर्शननिर्वृतेंद्रियः॥१८॥
राजदूतमुवाचेदंभगवान्प्रीणयन्गिरा॥माभैष्टदूतभद्रंवोघातयिष्यामिमागधम्॥१९॥

दिककुभः॥१४॥नृवाजीतिनृवाजिभिःनर
यानैःअश्वैश्चकांचनशिबिकाभिश्चअच्युतंपतिमनुययुःसुव्रताःपतिव्रताःवराण्यंबरादीनियासांताः॥१५॥नरोष्ट्रादिभिर्यानैःअश्वतरीगर्दभ्याम
श्चाक्रान्ताअनःशकटंकरेणुर्गजीपरिजनयोषितोवारयोषितश्चकटकुटयःउशीरादितृणनिर्मितगृहाःकंबलांबरादयश्चोपस्कराःकुड्यादिरूपा
यासांताःअधियुज्यबलीवर्दादिषुतानुपस्करान्दृढंसन्नह्य॥१६॥रवेरंशुभिश्चतद्बलंदिवाबभौकथंभूतंतुमुलरवंआकुलस्वनंक्षुभितैस्तिमिंगि
॥लैःऊर्मिभिश्च॥१७॥मुनिर्नारदोविहायसाययावितिशेषः॥१८॥माभैष्टेतिबहुत्वंराजाभिप्रायेण॥१९॥

प्रत्यैक्षन्प्रत्यैक्षंतयद्यस्मात्सुमुमुक्षवः॥२०॥ आनर्तादयोमार्गस्थदेशाः तान्तीर्त्वाअतिक्रम्यविनशनंकुरुक्षेत्रंअतीयायअतिक्रम्यययौ॥२१॥ शक्रप्रस्थंइन्द्रप्रस्थं॥२२।२३॥ प्राणाइंद्रियाणिप्राणंमुख्यप्राणमिव॥२४॥ सस्वजेपरिरेभे॥२५॥ रमायाअमलंनिर्दोषमालयंविस्मृतोलोकव्यवहारोयेनसः॥२६।२७॥ अर्जुनेनसमत्वात्परिष्वक्तएवकेवलंपादौनमस्कुर्वन्नर्जुनःकृष्णेनभुजाभ्यांधृतइतिभावःयमाभ्यांत्वभिवादितश्चेति॥२८।२९।३०।३१॥

इत्युक्तःसस्मितोदूतोयथावदवदन्नृपान्॥ तेपिसंदर्शनंशौरेःप्रत्यैक्षन्सुमुमुक्षवः॥२०॥ आनर्तसौवीरमरूंस्तीर्त्वाविनशनंहरिः॥ गिरीन्नदीरतीयायपुरग्रामव्रजाकरान्॥२१॥ ततोदृषद्वतींतीर्त्वामुकुन्दोथसरस्वतीम्॥ पंचालानथमत्स्यांश्चशक्रप्रस्थमथागमत्॥२२॥ तमुपागतमाकर्ण्यप्रीतोदुर्दर्शनंनृणाम्॥ अजातशत्रुर्निरगात्सोपाध्यायःसुहृद्वृतः॥२३॥ गीतवादित्रघोषेणब्रह्मघोषेणभूयसा॥ अभ्ययात्सहृषीकेशंप्राणाःप्राणमिवादृतः॥२४॥ दृष्ट्वाविक्लिन्नहृदयःकृष्णंस्नेहेनपांडवः॥ चिराद्दृष्टंप्रियतमंसस्वजेऽथपुनःपुनः॥२५॥ दोर्भ्यांपरिष्वज्यरमामलालयंमुकुंदगात्रंनृपतिर्हताशुभः॥ लेभेपरांनिर्वृतिमश्रुलोचनोहृष्यत्तनुर्विस्मृतलोकविभ्रमः॥२६॥ तंमातुलेयंपरिरभ्यनिर्वृतोभीमःस्मयन्प्रेमजलाकुलेंद्रियः॥ यमौकिरीटीचसुहृत्तमंमुदाप्रवृद्धबाष्पाःपरिरेभिरेऽच्युतम्॥२७॥ अर्जुनेनपरिष्वक्तोयमाभ्यामभिवादितः॥ ब्राह्मणेभ्योनमस्कृत्यवृद्धेभ्यश्चयथार्हतः॥२८॥ मानितोमानयामासकुरुसृंजयकेकयान्॥ सूतमागधगंधर्वान्वंदिनश्चोपमंत्रिणः॥२९॥ मृदंगशंखपटहवीणापणवगोमुखैः॥ ब्राह्मणाश्चारविंदाक्षंतुष्टुवुर्ननृतुर्जगुः॥३०॥ एवंसुहृद्भिःपर्यस्तःपुण्यश्लोकशिखामणिः॥ संस्तूयमानोभगवान्विवेशालंकृतंपुरम्॥३१॥ संसिक्तवर्त्मकरिणांमदगंधतोयैश्चित्रध्वजैःकनकतोरणपूर्णकुंभैः॥ मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गंधैर्नृभिर्युवतिभिश्चविराजमानम्॥३२॥ उद्दीप्तदीपबलिभिःप्रतिसद्मजालनिर्यातधूपरुचिरंविलसत्पताकम्॥ मूर्द्धन्यहेमकलशैरजतोरुशृंगैर्जुष्टंददर्शभवनैःकुरुराजधाम॥३३॥ ६ ॥ ७ ॥ ६ ॥ ७ ॥ ६ ॥

चित्रध्वजादिभिर्विराजमानं॥३२॥ प्रतिसद्मउद्दीप्तैर्दीपैर्बलिभिःपुष्पादिप्रकारैश्चतुजालेभ्योगवाक्षेभ्योनिर्गतैर्धूपैःरुचिरंविलसंत्यःपताकायस्मिन् तत्मूर्द्धन्याःमूर्द्धिभवाःहेमकलशायेषां तैःरजतमयानिरूप्यमयानिउरूणिस्थूलानिशृंगाणिकलशाधस्तनभूमिकायेषांतैर्भवनैर्जुष्टंकुरुराजस्यधामपुरंददर्श॥ ३३ ॥

नराणां लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं विषयं किंपुनर्नारीणामित्यर्थः॥३४॥ सुष्ठु स्वागतं तत्स्मश्चादिकं प्रियं तत्स्मयवीक्षितेनैव विदधुः॥३५॥ उडुपसहाः चंद्रसहाश्चंद्रसहचरा इत्यर्थः अमूभिः किंपुण्यमकारि॥३६॥ श्रेण्यः एकशिल्पोपजीविनां संघास्तेषु मुख्याश्च॥३७॥ अभ्युपेतः अभिगमनेन सत्कृतः॥३८॥ सस्नुषा द्रौपदीसहिता॥३९॥ कृत्स्नप्रकारविशेषं प्रमोदेनोपहृतोऽभिभूतः॥४०॥ गुरुस्त्रीणां च कृष्णयाच द्रौप-

प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबंधाः॥ सद्यो विसृज्य गृहकर्म पतींश्च तल्पे द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे॥३४॥ तस्मिन्सुसंकुलइभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः॥ नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुत्स्मयवीक्षितेन॥३५॥ ऊचुः स्त्रियः पथि निरीक्ष्य मुकुंदपत्नीस्तारा यथोडुपसहाः किमकार्यमूभिः॥ यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति॥३६॥ तत्र तत्रोपसंगम्य पौरा मंगलपाणयः॥ चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः॥३७॥ अंतःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः ससंभ्रमैरभ्युपेतः प्राविशद्राजमंदिरम्॥३८॥ पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम्॥ प्रीतात्मोत्थाय पर्यंकात्सस्नुषा परिषस्वजे॥३९॥ गोविन्दं गृहमानीय देवदेवेशमादृतः॥ पूजायां नाविदत्कृत्यं प्रमोदोपहतो नृपः॥४०॥ पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेऽभिवादनम्॥ स्वयं च कृष्णया राजन्भगिन्या चाभिवंदितः॥४१॥ श्वश्र्वा संचोदिता कृष्णा कृष्णपत्नीस्तु सर्वशः॥ आनर्च रुक्मिणीं सत्यां भद्रां जांबवतीं तथा॥४२॥ कालिंदीं मित्रविंदां च शैब्यां नाग्नजितीं सतीम्॥ अन्याश्चाभ्यागता यास्तु वासःस्रग्मंडनादिभिः॥४३॥ सुखं निवासयामास धर्मराजो जनार्दनम्॥ ससैन्यं सानुगामात्यं सभार्यं च नवं नवम्॥४४॥ तर्पयित्वा खांडवेन वह्निं फाल्गुनसंयुतः॥ मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता॥४५॥ उवास कतिचिन्मासान्राज्ञः प्रियचिकीर्षया॥ विहरन्रथमारुह्य फाल्गुनेन भटैर्वृतः॥४६॥

द्या भगिन्या सुभद्रया॥४१॥ आनर्च अर्चितवती॥४२॥ अन्याश्च याः कृष्णपत्न्योऽभ्यागताः ता अपि॥४३॥ प्रत्यहं नवं नवं यथा भवति तथा सुखं निवासयामास॥४४॥ कथंभूतं यः प्रेम्णा नित्यं फाल्गुनेन संयुतः अत एव तस्य सहायेन सतायेन खांडवेन वह्निं तर्पयित्वा तत्र च मयं मोचयित्वा तं मयं प्रयुज्य युधिष्ठिराय दिव्यां सभां कृतवान् जनार्दनः अनेन राज्ञः कृष्णोपकारानुस्मरणं दिव्यत्वात्सभायाः यामनोरथसर्वावकाशसंपादनं च दर्शितम्॥४५॥४६॥ ७ ॥

॥इति श्रीदशमेटीकायामेकसप्ततितमोऽध्यायः॥७१॥ ततो द्विसप्ततितमे राज्ञा कार्ये निवेदिते दुर्जयं मागधं बुध्वा भीमेनाघातयद्धरिः॥१॥ आ
स्थित आसन्नमिति शेषः॥१॥ शृण्वतामेवेति यत्प्रसन्नः कृष्णः करोति न तदन्यः कश्चिदपि कर्तुं समर्थ इति निश्चित्य सर्वानेवलाननादृत्य कृष्ण
मुवाचेत्यर्थः आभाष्य भो भो कृष्ण भक्तवत्सलेत्येवं संबोध्य॥२॥ विभूतीः अंशान्॥३॥ एष चक्रवर्तिनां मनोरथः कथं त्वया क्रियत इति चेद्त आ
ह त्वत्पादुके इति परि ये चरंतीति पच्छेदः व्यवधानमार्षं ये परिचरंति इह न ध्यायंति मनसा अभद्रस्य नशने नाशके गृणंति वाचा ते भवस्यापव
र्गमोक्षं विन्दन्ति यदि आशासते तर्हि आशिषोऽपि त एव विंदंति नान्ये चक्रवर्तिनोऽपि॥४॥ भगवतो भक्तपक्षपातमाविष्कारयन्नाह तद्देवदेवे

॥इति श्रीभागवते महापुराणे दशमस्कंधे उत्तरार्द्धे इन्द्रप्रस्थानगमने एकसप्ततितमोऽध्यायः॥७१॥ श्रीशुक उवाच।
एकदा तु सभामध्ये आस्थितो मुनिभिर्वृतः॥ ब्राह्मणैः क्षत्रियैर्वैश्यैर्भ्रातृभिश्च युधिष्ठिरः॥१॥ आचार्यैः कुलवृद्धैश्च ज्ञा
तिसंबंधिबांधवैः॥ शृण्वतामेव चैतेषामाभाष्येदमुवाच ह॥२॥ युधिष्ठिर उवाच॥ क्रतुराजेन गोविंद राजसूयेन पावनीः
॥यक्ष्ये विभूतीर्भवतस्तत्संपादय नः प्रभो॥३॥ त्वत्पादुके अविरतं परि ये चरंति ध्यायंत्यभद्रनशने शुचयो गृणंति॥ विंदंति
ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये॥४॥ तद्देवदेव भवतश्चरणारविंदसेवानुभावमिह पश्य
तु लोक एषः॥ ये त्वां भजंति न भजंत्युत वोभयेषां निष्ठां प्रदर्शय विभो कुरुसृंजयानाम्॥५॥ न ब्रह्मणः स्वपरभेदमतिस्तव
स्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः॥ संसेवतां सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न विपर्ययोऽत्र॥६॥ श्रीभग
वानुवाच॥ सम्यग्व्यवसितं राजन्भवता शत्रुकर्शन॥ कल्याणी येन ते कीर्तिर्लोकाननुभविष्यति॥७॥ ऋषीणां पितृदे
वानां सुहृदामपि नः प्रभो॥ सर्वेषामपि भूतानामीप्सितः क्रतुराडयम्॥८॥

((तदिति तस्मात्पश्यतु साक्षात् एवं निश्चितेऽपि ये कामी
दिप्रधानाः केचित्कुरुसृंजयाः भगवद्भक्तिं न हि बहु मन्यंते तेषां मोहनिवृत्तये ये त्वां भजंति ये च वा न भजंति तेषामुभयेषां निष्ठां स्थितिं प्रदर्श
य॥५॥ ननु रागादिरहितं मयि कथमिदं वैषम्यं स्यात्तत्राह नेति स्वः परः इति भेदमतिस्तव न स्यात् कुतः ब्रह्मणः निरुपाधेः किंच सर्वस्या
त्मनः अतः समदृशः किंच स्वसुखानुभूतेः अतो रागाद्यभावादिति भावः तथापि संसेवमानानामेव त्वत्प्रसादो नान्येषां तत्रापि सेवानुरूपमु
दयः फलं न त्वत्र विपर्ययोऽन्यथाभावः यथा कल्पद्रुमस्य रागादिराहित्येऽपि सेवकेष्वेव फलजनकत्वं नान्येषु॥६॥ सत्यं मद्भक्तानामेव कीर्तेव
र्त्या दिनान्येषामित्यनुमोदमान आह सम्यगिति शत्रुकर्शनेति संबोधयन्सर्वराजविजयशक्तिं सूचयति अनुभविष्यति सर्वलोकव्यामाभ

किमत्रमयाऽन्येनवासंपादनीयंतवतुसुकरएवराजसूयइत्याहविजित्येतिजगतींसर्वांपृथ्वींसंभारान्यज्ञोपस्करान्संभृत्यसंपाद्यआहरस्व।
अनुतिष्ठेत्यर्थः॥९॥ननुनृपतिविजयादिकथंशक्यंस्यादतआहएतइतिकिंचआत्मवताविजितेन्द्रियेणतेत्वयाअहंचजितोस्मिवशीकृतोस्मि
अकृतात्मभिःअजितेन्द्रियैः॥१०॥आस्तांतावदेवंभूतस्यतवपरैरभिभवशंकाअकिंचनमपिमत्परंकोपिनाभिभवितुंप्रभवतीत्याहनकश्चिदिति
तेजसाप्रभावेनविभूतिभिःसैन्यादिसामग्रीभिः॥११॥अयुंक्तनियुक्तवान्विष्णोस्तेजसाउपबृंहितान्संवर्द्धितान्तेजोपबृंहितानितिसंधिरार्षः॥१२॥
नकुलादीनांमत्स्यादिभिःसहार्थैर्यथासंख्येनसंबंधःसहदेवंसृंजयैःसहभीमंमत्स्यैःनकुलंकैकयैःसव्यसाचिनंमद्रकैरिति॥१३॥कथंभूताययक्ष्य

विजित्यनृपतीन्सर्वान्कृत्वाचजगतींवशे॥संभृत्यसर्वसंभारानाहरस्वमहाक्रतुम्॥९॥एतेतेभ्रातरोराजँल्लोकपालांशसं
भवाः॥जितोऽस्म्यात्मवतातेऽहंदुर्जयोयोऽकृतात्मभिः॥१०॥नकश्चिन्मत्परंलोकेतेजसायशसाश्रिया॥विभूतिभिर्वाऽभिभ
वेद्देवोपिकिमुपार्थिवः॥११॥श्रीशुकउवाच॥निशम्यभगवद्गीतंप्रीतःफुल्लमुखांबुजः॥भ्रातॄन्दिग्विजयेऽयुंक्तविष्णुते
जोपबृंहितान्॥१२॥सहदेवंदक्षिणस्यामादिशत्सहसृंजयैः॥दिशिप्रतीच्यांनकुलमुदीच्यांसव्यसाचिनम्॥प्राच्यांवृको
दरंमत्स्यैःकेकयैःसहमद्रकैः॥१३॥तेविजित्यनृपान्वीराआजह्रुर्दिग्भ्यओजसा॥अजातशत्रवेभूरिद्रविणंनृपयक्ष्यते
॥१४॥श्रुत्वाऽजितंजरासंधंनृपतेर्ध्यायतोहरिः॥आहोपायंतमेवाद्यउद्धवोयमुवाचह॥१५॥भीमसेनोऽर्जुनःकृष्णोब्र
ह्मलिंगधरास्त्रयः॥जग्मुर्गिरिव्रजंतातबृहद्रथसुतोयतः॥१६॥तेगत्वातिथ्यवेलायांगृहेषुगृहमेधिनम्॥ब्रह्मण्यंस
मयाचेरन्राजन्याब्रह्मलिंगिनः॥१७॥राजन्विद्ध्यतिथीन्प्राप्तानर्थिनोदूरमागतान्॥तन्नःप्रयच्छभद्रंतेयद्वयंकामया
महे॥१८॥किंदुर्मर्षंतितिक्षूणांकिमकार्यमसाधुभिः॥किंनदेयंवदान्यानांकःपरःसमदर्शिनाम्॥१९॥योऽनित्येनशरीरे
णसतांगेयंयशोध्रुवम्॥नाचिनोतिस्वयंकल्पःसवाच्यःशोच्यएवसः॥२०॥ १ तेयागंकरिष्यते॥१४॥आद्योहरिःश्रीकृष्णः॥१५॥

ब्रह्मलिंगधराःब्राह्मणलिंगधारिणःयतःयत्रबृहद्रथसुतोजरासंधः॥१६॥गृहेषुवर्तमानंसमयाचेरन्सम्यक्अयाचंतेत्यर्थः॥१७॥१८॥नन्विदं
कामयामहइतिविशेषोनिर्दिश्यतांअन्यथापस्युत्रादेर्वियोगोदुःसहःसकथंदेयःतथाराजमंडनंकिरीटादादेयंयत्तद्भिक्षुभ्यःकथंदेयंतथाऽति
दुर्लभंलाभरणादिपुत्रादियोगंयकथंपरस्मैदेयमितिचेदतआहुःकिंदुर्मर्षमित्यादिअयमर्थःतत्तेनार्थांतरमाहुःकिमकार्यमितियथाअसाधुना
मकार्यंनास्तितथाविदुषांदुर्मर्षंदुःसहंनास्तिवदान्यानामदुदातॄणामदेयंनास्तिसमदर्शिनांपरश्चनास्तिअतःकिंविशेषनिर्देशेनेत्यर्थः॥

प्राणा अपि न वंचनीया इत्याशयेनाह । योऽनित्येन [illegible] ॥ विश्वामित्राय नृपाय हरिश्चन्द्रो भार्यात्मजा-
दि सर्वं विक्रीय स्वयं चांडालं तं प्राप्तोपि अनिर्विण्णः सहायोध्यावासिभिर्जनैः स्वर्गं गतः रंतिदेवः सकुटुंबोऽष्टचत्वारिंशद्दिनान्यलब्धोदकोऽपि
कथंचिल्लब्धान्नोदकाद्यर्थिभ्यो दत्वा ब्रह्मलोकं गतः उंछवृत्तिर्मुद्गलः षण्मासं सीदत्कुटुंबोऽप्यतिथ्यदानेन ब्रह्मलोकं गतः शिबिः शरणागत-
कपोतरक्षणाय स्वमांसं श्येनाय दत्वा दिवं गतः बलिः सर्वस्वं ब्राह्मणवेषधारिणे हरये दत्वा लेभे वा आत्मसाच्चकार कपोतश्चातिथये व्याधाय कपो-
त्या सहात्ममांसं दत्वा विमानेन दिवं गतः व्याधस्तयोः सत्वं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थाने वनाग्निदग्धदेहो निष्कल्मषो दिवमारुरोह

हरिश्चन्द्रो रंतिदेव उंछवृत्तिः शिबिर्बलिः ॥ व्याधः कपोतो बहवो ह्यध्रुवेण ध्रुवं गताः ॥२१॥ श्रीशुक उवाच ॥ स्वरैराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि ॥ राजन्यबंधून्विज्ञाय दृष्टपूर्वानचिंतयत् ॥२२॥ राजन्यबंधवो ह्येते ब्रह्मलिंगानि बिभ्रति ॥ ददामि भिक्षितं तेभ्य आत्मानमपि दुस्त्यजम् ॥२३॥ बलेर्नु श्रूयते कीर्तिर्वितता दिक्ष्वकल्मषा ॥ ऐश्वर्याद्भ्रंशितस्यापि विप्रव्याजेन विष्णुना ॥२४॥ श्रियं जिहीर्षतेंद्रस्य विष्णवे द्विजरूपिणे ॥ जानन्नपि महीं प्रादाद्वार्यमाणोपि दैत्यराट् ॥२५॥ जीवता ब्राह्मणार्थाय को न्वर्थः क्षत्रबंधुना ॥ देहेन पतमानेन नेहता विपुलं यशः ॥२६॥ इत्युदारमतिः प्राह कृष्णार्जुनवृकोदरान् ॥ हे विप्रा व्रियतां कामो ददाम्यात्मशिरोऽपि वः ॥२७॥ श्रीभगवानुवाच ॥ युद्धं नो देहि राजेन्द्र द्वंद्वशो यदि मन्यसे ॥ युद्धार्थिनो वयं प्राप्ता राजन्या नान्यकांक्षिणः ॥२८॥ असौ वृकोदरः पार्थस्तस्य भ्राताऽर्जुनो ह्ययम् ॥ अनयोर्मातुलेयं मां कृष्णं जानीहि ते रिपुम् ॥२९॥ एवमावेदितो राजा जहासोच्चैः स्म मागधः ॥ आह चामर्षितो मंदा युद्धं तर्हि ददामि वः ॥३०॥ न त्वया भीरुणा योत्स्ये युधि विक्लवचेतसा ॥ मथुरां स्वपुरीं त्यक्त्वा समुद्रं शरणं गतः ॥३१॥ अयं तु वयसाऽतुल्यो नातिसत्वो न मे समः ॥ अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मम ॥३२॥

((एवमन्ये च बहवोऽध्रुवेण शरीरेण ध्रुवं लोकं गता इति ॥२१॥ ज्या-
हतैः ज्याघातकिणांकितैः भुजैः दृष्टपूर्वान् द्रौपदीस्वयंवरादिषु ॥२२॥२३॥ इन्द्रस्य श्रियं जिहीर्षता विप्रव्याजेन विष्णुना भ्रंशितस्यापि बलेर्नु अ-
हो न तिरस्कारेन श्रूयते किं अपि तु श्रूयत इति ॥२४॥ तच्छ्लाघते विष्णवे इति शुक्रेण वार्यमाणोपि अत एव विष्णुरिति जानन्नपि ॥२५॥ पतमानेन पत-
ता क्षत्रबंधुना देहेन ब्राह्मणार्थाय विपुलं यशो नेहता न ईहमानेन असंपादयता को न्वर्थः न कोपीत्यर्थः ॥२६॥ एवं निश्चित्याह हे विप्रा इति ॥२७॥२८॥
राजन्यतामेव प्रपंचयति असाविति ॥२९॥३०॥ यतो मद्भयात् समुद्रं शरणं गतः ॥३१॥ वयसाप्यतुल्यः नातिसत्वो नातिबलश्च न च देहेन मया समः अ-
॥ तोऽर्जुनो योद्धा न भवेत् भीमस्तु भवेत् यतो मम तुल्यबलः ॥३२॥

प्रादायदत्त्वेत्यर्थः॥ ३३॥ समेरवलेयुद्धांगणे॥ ३४॥ मंडलानिगदायुद्धगतिभेदान् सव्यंदक्षिणंचयथाभवतितथा रंगिणोः रंगगतयोः नटयो रिवेति निर्भयत्वेनोपमा॥ ३५॥ चटचटेतिगदयोः परस्पराघातशब्दानुकरणं वज्रस्यनिष्पेषः पातः तत्तद्वशः युध्यतो र्दंतिनो र्दंताघातशब्द इवशुशुभे॥ ३६॥ अंसकट्यादीनुपेत्यदीप्तमन्युर्ययोस्तयोर्हरिदयोर्गजयोरर्कशारवाभ्यांसमंयुद्ध्यतोस्तेयथाचूर्णीभवतस्तद्वत्॥ ३७॥ अपि

इत्युत्काभीमसेनायप्रादायमहतींगदाम्॥ द्वितीयांस्वयमादायनिर्जगामपुराद्बहिः॥ ३३॥ ततःसमेरवलेवीरौसंयुक्तावित रेतरौ॥ जघ्नतुर्वज्रकल्पाभ्यांगदाभ्यांरणदुर्मदौ॥ ३४॥ मंडलानिविचित्राणिसव्यंदक्षिणमेवच॥ चरतोःशुशुभेयुद्धंनट योरिवरंगिणोः॥ ३५॥ ततश्चटचटाशब्दोवज्रनिष्पेषसंनिभः॥ गदयोःक्षिप्तयोराजन्दंतयोरिवदंतिनोः॥ ३६॥ तेवैगदेभुज जवेननिपात्यमाने अन्योन्यतोंसकटिपादकरोरुजत्रून्॥ चूर्णीबभूवतुरुपेत्ययथार्कशारवेसंयुध्यतोर्द्विरदयोरिवदीप्त मन्व्योः॥ ३७॥ इत्थंतयोःप्रहतयोर्गदयोर्नृवीरौक्रुद्धौस्वमुष्टिभिरयःस्पर्शैरपिष्टाम्॥ शब्दस्तयोःप्रहरतोरिभयोरिवासीन्नि र्घातवज्रपरुषस्तलताडनोत्थः॥ ३८॥ तयोरेवंप्रहरतोःसमशिक्षाबलौजसोः॥ निर्विशेषमभूद्युद्धमक्षीणजवयोर्नृप ॥ ३९॥ एवंतयोर्महाराजयुद्ध्यतोःसमविंशतिः॥ दिनानिनिरगंस्तत्रसुहृद्वन्निशितिष्ठतोः॥ ४०॥ एकदामातुलेयंवैप्रा हराजन्वृकोदरः॥ नशक्तोहंजरासंधंनिर्जेतुंयुधिमाधव॥ ४१॥ शत्रोर्जन्ममृतीविद्वान्जीवितंचजराकृतम्॥ पार्थमा प्यापयत्स्वेनतेजसाचिंतयन्हरिः॥ ४२॥ संचिंत्यारिवधोपायंभीमस्यामोघदर्शनः॥ दर्शयामासविटपंपाटयन्निवसं ज्ञया॥ ४३॥ तद्विज्ञायमहासत्त्वोभीमःप्रहरतांवरः॥ गृहीत्वापादयोःशत्रुंपातयामासभूतले॥ ४४॥ एकंपादंपदाक्र म्यदोर्भ्यामन्यंप्रगृह्यसः॥ गुदतःपाटयामासशारवामिवमहागजः॥ ४५॥ एकपादोरुवृषणकटिपृष्ठस्तनांसके॥ एकबा ह्वक्षिभ्रूकर्णेशकलेददृशुःप्रजाः॥ ४६॥

॥ चूर्णीचक्रतुः॥ ३८॥ शिक्षाअभ्यासःबलंसत्त्वंओजःप्रभावःसमानितानिययोस्तयोः॥ ॥ ३९॥ ४०॥ ४१॥ जन्मशकलरूपंमृतिःपुनःशकलीभावःतेविद्वान्जानन्जरानामराक्षसीतत्कृतम् अचिंतयत्कथमसौशकलीभवेदिति ॥ ४२॥ विटपंशारवांकरेणविटपंगृहीत्वाहरिःभीमस्ययथाःहेविटपंपाटयामितथात्वमेनंपाटयेतिसंज्ञयासंकेतेनअरिवधोपायंदर्शि ॥ यामासेत्यर्थः॥ ४३॥ ४४॥ ४५॥ एकैकःपादादिर्ययोस्तेशकले॥ ४६॥

॥यामीत्यर्थः॥५३।५४।५५॥ एकैकः पादादिर्व्द्वयोर्लेशफलं॥ ५६॥



॥४७॥ दुर्वृत्तत्वादसौ हतः नतु राज्याभिलाषेणेति दर्शयन्नाह सहदेवमिति॥४८॥ इति दशमे टीकायां द्विसप्ततितमोऽध्यायः॥७२॥ ततस्त्रिसप्त
तितमे मोचयित्वा नृपान्हरिः राजार्हभोगैः स्वान्देशान्प्रस्थाप्य पुनरागमत्॥१॥ अयुतेत्यादि जरासंधवधात्तुष्टभूपतीन् विमोक्ष्य कृपया कृष्णो निजरू
पमदर्शयत्॥२॥ ये निर्जिता जरासंधेन निरुद्धाश्च गिरिद्रोण्यां ते ततो निर्गताः संतो घनश्यामं ददृशुरित्युत्तरेणान्वयः॥१॥ क्षुधाक्षामाः कृशाः संरोधेन
परिकर्शिताः क्लेशिताः॥२॥३॥४॥ भ्राजत् भ्राजमानो वरमणिः कौस्तुभो यस्यां ग्रीवायां सा यस्य तं निवीतं कंठलंबितया आपादं पिबंत इवेत्यादीनां हरेः पाद

हाहाकारो महानासीन्निहते मगधेश्वरे॥ पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ॥४७॥ सहदेवं तत्तनयं भगवान्भूतभावनः
॥अभ्यषिंचदमेयात्मा मगधानां पतिं प्रभुः॥ मोचयामास राजन्यान्संरुद्धा मागधेन ये॥४८॥ इति श्रीभागवते महापुराणे दश
मस्कन्धे जरासंधवधो नाम द्विसप्ततितमोऽध्यायः॥७२॥ श्रीशुक उवाच॥ अयुते द्वे शतान्यष्टौ लीलया युधि निर्जिताः॥ ते निर्ग
ता गिरिद्रोण्यां मलिना मलवाससः॥१॥ क्षुत्क्षामाः शुष्कवदनाः संरोधपरिकर्शिताः॥ ददृशुस्ते घनश्यामं पीतकौशेयवास
सम्॥२॥ श्रीवत्सांकं चतुर्बाहुं पद्मगर्भारुणेक्षणम्॥ चारुप्रसन्नवदनं स्फुरन्मकरकुंडलम्॥३॥ पद्महस्तं गदाशंखरथां
गैरुपलक्षितम्॥ किरीटहारकटककटिसूत्रांगदांचितम्॥४॥ भ्राजद्वरमणिग्रीवं निवीतं वनमालया॥ पिबंत इव चक्षुर्भ्यां
लिहंत इव जिह्वया॥५॥ जिघ्रंत इव नासाभ्यां रंभंत इव बाहुभिः॥ प्रणेमुर्हतपाप्मानो मूर्द्धभिः पादयोर्हरेः॥६॥ कृष्णसंदर्श
नाह्लादध्वस्तसंरोधनक्लमाः॥ प्रशशंसुर्हृषीकेशं गीर्भिः प्रांजलयो नृपाः॥७॥ राजान ऊचुः॥ नमस्ते देवदेवेश प्रपन्नार्ति
हराव्यय॥ प्रपन्नान्पाहि नः कृष्ण निर्विण्णान्घोरसंसृतेः॥८॥ नैनं नाथानुसूयामो मागधं मधुसूदन॥ अनुग्रहो यद्भवतो रा
ज्ञां राज्यच्युतिर्विभो॥९॥ राज्यैश्वर्यमदोन्नद्धो न श्रेयो विंदते नृपः॥ त्वन्मायामोहितो नित्यान्मन्यते संपदोऽचलाः॥१०॥ ६॥

योः प्रणेमुरित्युत्तरेणान्वयः॥५॥ रंभंतः परिरंभमाणा इव॥६॥ श्रीकृष्णदर्शनाह्लादेन ध्वस्तः संरोधनक्लमो येषां ते॥७॥ संरोधाद्दुःखितानस्मान्घोरा
याः संसृतेरपि पाहि मोचय॥८॥ ननु भवंतो जरासंधाय सूयां विदधुः इहामुत्रभोगासक्ताश्च कथं संसृतेर्मोचनीया इत्याशंक्य संप्रति न वयं तथाभूता इत्या
हुः नैनमिति षड्भिः हे नाथ वयं एनं नानुसूयामः अयं तु दोषदृष्ट्या न पश्यामः कुत इत्यत आहुः अनुग्रह इति यत् यस्मात्॥९॥ एतदेव व्यतिरेकेणो
पपादयंति राज्यैश्वर्यमिति राज्यैश्वर्याभ्यां मदस्तेनोन्नद्ध उच्छृंखलो नित्या अचलाश्च संपदो मन्यते यद्वा अनित्याः सत्यः अचलाः शाश्वतीर्मन्य

किंच अवस्तु सद्वस्तुतया पश्यंतीत्याहुः मृगतृष्णामिति वैकारीकीं सृष्ट्यादिविकारापन्नाम् अयुक्ता अविवेकिनः ॥११॥ राज्यस्य योगवियोगयो रन्यथा ऽन्यथा वहत्वमस्मासु वदृष्टमित्याहुः वयमिति द्वाभ्यां श्रीमदेन नष्टा दृष्टिर्येषां ते अस्याः पृथिव्याः इतरेतरस्पृधः परस्परं स्पर्द्धमानाः पुरः पुरतः त्वां मृत्युमविगणय्य पुरा यदुर्मदा वयम् ॥१२॥ हे कृष्ण त एव वयं अद्य विनष्टदर्पास्ते चरणौ स्मरामः स्मर्तुमाशास्महे कथंभूताः भवतस्तन्वा मूर्त्या कालेन श्रियो विचालिताः विभ्रंशिताः अतो राज्यच्युतिर्भवदनुग्रह एवेत्यर्थः ॥१३॥ अत एव अथो अनंतरं मृगतृष्णिसदृशं राज्यं शश्वत्सनतताम तिक्षणं क्षीयमाणेन तथा रुजां रोगाणां भुवा जन्मक्षेत्रेण देहेन उपासितव्यं सेव्यं न स्पृहयामहे मेत्य परलोके च क्रियाफलं स्वर्गादिभोगं उपासितव्यं

मृगतृष्णां यथा बाला मन्यंत उदकाशयम् ॥ एवं वैकारिकीं मायामयुक्ता वस्तु चक्षते ॥११॥ वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयाऽस्या इतरेतरस्पृधः ॥ घ्नंतः प्रजाः स्वा अतिनिर्घृणाः प्रभो मृत्युं पुरस्त्वाविगणय्य दुर्मदाः ॥१२॥ त एव कृष्णाद्य गभीररंहसा दुरंतवीर्येण विचालिताः श्रियः ॥ कालेन तन्वा भवतोऽनुकंपया विनष्टदर्पाश्चरणौ स्मरामते ॥१३॥ अथो न राज्यं मृगतृष्णिरूपितं देहेन शश्वत्पतता रुजां भुवा ॥ उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम् ॥१४॥ तन्नः समादिशोपायं येन ते चरणाब्जयोः ॥ स्मृतिर्यथा न विरमेदपि संसरतामिह ॥१५॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविंदाय नमो नमः ॥१६॥ श्रीशुक उवाच ॥ संस्तूयमानो भगवान्राजभिर्मुक्तबंधनैः ॥ तानाह करुणस्तात शरण्यः श्लक्ष्णया गिरा ॥१७॥ श्रीभगवानुवाच ॥ अद्यप्रभृति वो भूपा मय्यात्मन्यखिलेश्वरे ॥ सुदृढा जायते भक्तिर्बाढमाशंसितं तथा ॥१८॥ दिष्ट्या व्यवसितं भूपा भवंत ऋतभाषिणः ॥ श्रियैश्वर्यमदोन्नाहं पश्य उन्मादकं नृणाम् ॥१९॥ हैहयो नहुषो वेनो रावणो नरकोऽपरे ॥

न स्पृहयामहे कथंभूतं कर्णयोः रोचनं रुचिजनकमात्रं तत्र गतस्य स्पर्द्धाद्यनपगमेन सुखाभावादित्यर्थः ॥१४॥ यद्येवंभूता यूयं तर्हि मम चरणौ स्मरत ततो ऽनायासेन मुक्तिर्भविष्यतीति किंमदपेक्षयेति चेदत आहुः तन्न इति त्वच्चरणस्मृतिरपि त्वत्प्रसादफलमेवेत्यर्थः ॥१५॥१६॥ श्लक्ष्णया मंजुलया ॥१७॥ यथा भवद्भिराशंसितं तथा बाढं निश्चितं वो मयि भक्तिर्जायते जायतामित्यर्थः ॥१८॥ हे भूपाः मद्भजनमेव कर्तव्यमिति भवद्भिर्व्यवसितं संकल्पितं दिष्ट्या भद्रं भवद्भिरुक्तं च सत्यमेवेत्याह भवंत इति श्रीश्च ऐश्वर्यं च ताभ्यां मदस्तेनोन्नाहं उद्धं धनं स्वैराचारमित्यर्थः पश्ये पश्यामि ॥१९॥ तदेवाह हैहय इति हैहयः कार्तवीर्यश्चक्रवर्ती नरेश्वरः पितुः कामधेनुहरणात् परशुरामेण सपुत्रो हतः नहुषो देवेंद्रासनात् सः अजगरः ॥

शचीसंगाय ब्राह्मणान् शिबिकां वाहयन् तैरेव ततो भ्रंशितोऽजगरत्वमवाप वेनोप्युन्मत्तो ब्राह्मणानधिक्षिपंस्तैरेव हुंकारैर्हतः रावणो राक्षसे-
श्वरः सीतामभिलषन् राघवेण हतः नरको दैत्येश्वरोऽदितिकुंडलाद्याहरणान्मयैव हतः अपरेपि श्रीमदात् स्थानाद्भ्रंशिताः ॥२०॥ यदुत्पाद्यं दे-
हादि तदन्तवत् एवं विज्ञाय युक्ता अप्रमत्ताः रक्षथ रक्षतेत्यर्थः ॥२१॥ प्रजातन्तून् पुत्रादीन् संतन्वन्तः प्राप्तं समत्वेन सेवमानाः ॥२२॥ मां ब्रह्म यास्य-

श्रीमदाङ्कुशिताः स्थानाद्देवदैत्यजनेश्वराः ॥२०॥ भवन्त एतद्विज्ञाय देहाद्युत्पाद्यमन्तवत् ॥ मां यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षथ ॥२१॥ संतन्वन्तः प्रजातन्तून् सुखं दुःखं भवाभवौ ॥ प्राप्तं प्राप्तं च सेवन्तो मच्चित्ता विचरिष्यथ ॥२२॥ उदासीनाश्च देहादावात्मारामा धृतव्रताः ॥ मय्यावेश्य मनः सम्यङ् मामन्ते ब्रह्म यास्यथ ॥२३॥ श्रीशुक उवाच ॥ इत्यादिश्य नृपान् कृष्णो भगवान् भुवनेश्वरः ॥ तेषां न्ययुंक्त पुरुषान् स्त्रियो मज्जनकर्मणि ॥२४॥ सपर्यां कारयामास सहदेवेन भारत ॥ नरदेवोचितैर्वस्त्रैर्भूषणैः स्रग्विलेपनैः ॥२५॥ भोजयित्वा वरान्नेन सुस्नातान् समलंकृतान् ॥ भोगैश्च विविधैर्युक्तांस्ताम्बूलाद्यैर्नृपोचितैः ॥२६॥ ते पूजिता मुकुन्देन राजानो मृष्टकुंडलाः ॥ विरेजुर्मोचिताः क्लेशात् प्रावृडन्ते यथा ग्रहाः ॥२७॥ रथान् सदश्वानारोप्य मणिकाञ्चनभूषितान् ॥ प्रीणय्य सूनृतैर्वाक्यैः स्वदेशान् प्रत्ययापयत् ॥२८॥ त एवं मोचिताः कृच्छ्रात् कृष्णेन सुमहात्मना ॥ ययुस्तमेव ध्यायन्तः कृतानि च जगत्पतेः ॥२९॥ जगदुः प्रकृतिभ्यस्ते महापुरुषचेष्टितम् ॥ यथान्वशासद्भगवांस्तथा चक्रुरतन्द्रिताः ॥३०॥ श्रीशुक उवाच ॥ जरासंधं घातयित्वा भीमसेनेन केशवः ॥ पार्थाभ्यां संयुतः प्रायात् सहदेवेन पूजितः ॥३१॥ गत्वा ते खांडवप्रस्थं शंखान् दध्मुर्जितारयः ॥ हर्षयन्तः स्वसुहृदो दुर्हृदां चासुखावहाः ॥३२॥ तच्छ्रुत्वा प्रीतमनस इंद्रप्रस्थनिवासिनः ॥ मेनिरे मागधं शान्तं राजा चाप्तमनोरथः ॥३३॥ अभिवंद्याथ राजानं भीमार्जुनजनार्दनाः ॥ सर्वमाश्रावयांचक्रुरात्मना यदनुष्ठितम् ॥३४॥

२२थ ॥२३॥ स्त्रियश्च तेषां मज्जनकर्मणि अभ्यंगस्नानादौ न्ययुंक्त
॥२४।२५॥ सुस्नातान् सम्यगलंकृतान् भोगैश्च युक्तान् वरेणान्नेन भोजयित्वा पुनस्तेषां सपर्यां सहदेवेन कारयामास ॥२६॥ ग्रहाश्चन्द्रादयो य-
था ॥२७॥ प्रीणय्य नंदयित्वा ॥२८।२९॥ जगदुः ऊचुः ॥३०।३१॥ खांडवप्रस्थं इंद्रप्रस्थं दुर्हृदां दुर्योधनादीनाम् ॥३२॥ शांतं मृतं आप्तमनोरथो बभूव

॥३५॥इतिदशमेटीकायांत्रिसप्ततितमोऽध्यायः॥७३॥ चतुर्थेकसप्ततितमेराजसूयक्रियाद्विजैः अग्रपूजाप्रसंगेनचैद्यघातादिवर्ण्यते॥१॥राजसू
यमुखेहत्वाजरासंधंतदंतरेचैद्यंतदंतेकुर्वतंबीजंकलिमिवावपत्॥२॥कृष्णस्यचानुभावमितिचकारात्तस्यस्वानुविधायित्वंचालक्ष्येत्यर्थः॥१॥
तदाहयेस्युरितियेत्रैलोक्यस्यापिगुरवःस्युःसनकादयःसर्वेचलोकाःलोकपालाश्चतेशिरसैवतवानुशासनंवहंतिदुर्लभंलब्ध्वेतिभाग्येनेनह्ल
ब्धमितिबहुमानेनेत्यर्थः॥२॥सभवान्परमेश्वरोऽस्माकमनुशासनंधत्तेतदत्यंतविडंबनम् अननुरूपमनुकरणंस्वतेजोहानिप्रसंगादित्यर्थः॥३॥अ
थवातवपरिपूर्णस्याज्ञापनाज्ञाधारणाभ्यांनतेजसोहानिवृद्धीअतःकृपयासर्वेसंगच्छतइत्याहनह्येकस्याद्वितीयस्येतिसमानासमानरहितस्यब्रह्म

निशम्यधर्मराजस्तत्केशवेनानुकंपितम्॥आनंदाश्रुकलांमुंचन्प्रेम्णानोवाचकिंचन॥३५॥इतिश्रीभागवतेमहापुराणे
दशमस्कन्धेराजसूयदिग्विजयेजरासंधवधोनामत्रिसप्ततितमोऽध्यायः॥७३॥श्रीशुकउवाच॥एवंयुधिष्ठिरोराजाजरा
संधवधंविभोः॥कृष्णस्यचानुभावंतंश्रुत्वाप्रीतस्तमब्रवीत्॥१॥युधिष्ठिरउवाच॥येस्युस्त्रैलोक्यगुरवःसर्वेलोकमहेश्वराः
॥वहंतिदुर्लभंलब्ध्वाशिरसैवानुशासनम्॥२॥सभवानरविन्दाक्षोदीनानामीशमानिनाम्॥धत्तेऽनुशासनंभूमंस्तदत्यं
तविडंबनम्॥३॥नह्येकस्याद्वितीयस्यब्रह्मणःपरमात्मनः॥कर्मभिर्वर्द्धतेतेजोह्रसतेचयथारवेः॥४॥नवैतेऽजितभक्तानां
ममाहमितिमाधव॥त्वंतवेतिचनानाधीःपशूनामिववैकृता॥५॥श्रीशुकउवाच॥इत्युक्त्वायाज्ञियेकालेवव्रेयुक्तान्स्मऋत्वि
जः॥कृष्णानुमोदितःपार्थोब्राह्मणान्ब्रह्मवादिनः॥६॥द्वैपायनोभरद्वाजःसुमंतुर्गौतमोऽसितः॥वसिष्ठश्च्यवनःकण्वोमैत्रे
यःकवषस्त्रितः॥७॥विश्वामित्रोवामदेवःसुमतिर्जैमिनिःक्रतुः॥पैलःपराशरोगर्गोवैशंपायनएवच॥८॥अथर्वाकश्यपो
धौम्योरामोभार्गवआसुरिः॥ ६ ॥ ७ ॥ ६ ॥

णस्तवोभयंमायापरमात्मनइतिसर्वजीवनियंतुस्तवनिय
म्यत्वंसुतरांनवास्तवंअतःपरानुग्रहार्थैरेतैःकर्मभिस्तवतेजोनवर्द्धतेनचह्रसतिरवेरिवोदयास्तमयादिकर्मभिरित्यर्थः तथाचश्रुतिःनकर्म
णावर्द्धतेनोकनीयानितितु॥४॥नन्वेवमप्यहंपरमेश्वरःममेदंनीचंकर्मायोग्यमितिमनसिकथंनभवेदतआहनवैतदितिहेअजिततवभक्ता
नामेवतावदियंनानाधीर्भेदमतिर्नास्तियथापशूनामज्ञानांविकृताशरीरविषयातवतु नास्तीतिकिंपुनर्वक्तव्यमित्यर्थः॥५॥याज्ञियेयज्ञो
चितेवसंतादिकालेयुक्तान् अभियुक्तान्सयुधिष्ठिरःऋत्विजोहोतृप्रमुखान्वव्रेवृतवान्॥६॥तानाहद्वैपायनइतित्रिभिः॥७।८॥ अकृतव्र
॥णांतान्एतान्त्रिशपद्र॥ ७ ॥ ७ ॥

॥णानान एतान्न विशपेद्र॥ ७ ॥ ७ ॥



ष्ठादिभेदेन वद्ने॥९॥ अन्ये चोपहूता यज्ञदिदृक्षवस्तत्रेयुरित्यन्वयः॥१०।११॥ देवयजनं यज्ञभूमिं कृष्ट्वा कर्षणादिभिः संशोध्य दीक्षयां च क्रिरे दीक्षासंस्कारयुक्तमकुर्वन्॥१२॥ उपकरणा उपस्कराः वरुणस्य राजसूये यथा आसन्निति शेषः किंच इंद्रादयो देवगणाः॥१३।१४॥ ये च राजादयः समाहूताः ते च समीयुः स्म॥१५॥ ते सर्वे कृष्णभक्तस्य पांडुसुतस्य राज्ञो युधिष्ठिरस्य राजसूयं अविस्मिताः सन्तः सूपपन्नं सुसंपन्नं मेनिरे इत्यन्वयः याजका ऋत्विजः॥१६॥ सौत्ये ऽहनि सोमाभिषवदिने॥१७॥ अग्र्यार्हणं अग्रपूजा तस्या अर्हं योग्यं अनैकांत्यात् योग्यानां बहुत्वेनैक

वीतिहोत्रो मधुश्छन्दा वीरसेनोऽकृतव्रणः॥९॥ उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः॥ धृतराष्ट्रः सहसुतो विदुरश्च महामतिः॥१०॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः॥ तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप॥११॥ ततस्ते देवयजनं ब्राह्मणाः स्वर्णलांगलैः॥ कृष्ट्वा तत्र यथाम्नायं दीक्षयां चक्रिरे नृपम्॥१२॥ हैमाः किलोपकरणा वरुणस्य यथा पुरा॥ इंद्रादयो लोकपाला विरिंचिभवसंयुताः॥१३॥ सगणाः सिद्धगंधर्वा विद्याधरमहोरगाः॥ मुनयो यक्षरक्षांसि खगकिन्नरचारणाः॥१४॥ राजानश्च समाहूता राजपत्न्यश्च सर्वशः॥ राजसूयं समीयुः स्म राज्ञः पांडुसुतस्य वै॥१५॥ मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः॥ अयाजयन्महाराजं याजका देववर्चसः॥ राजसूयेन विधिवत्प्राचेतसमिवामराः॥१६॥ सौत्येऽहन्यवनीपालो याजकान्सदसस्पतीन्॥ अपूजयन्महाभागान्यथावत्सुसमाहितः॥१७॥ सदस्याग्र्यार्हणार्हं वै विमृशंतः सभासदः॥ नाध्यगच्छन्ननैकांत्यात्सहदेवस्तदाब्रवीत्॥१८॥ अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान्सात्वतां पतिः॥ एष वै देवताः सर्वा देशकालधनादयः॥१९॥ यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः॥ अग्निराहुतयो मंत्राः सांख्यं योगश्च तत्परः॥२०॥ एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत्॥ आत्मनात्माश्रयः सभ्याः सृजत्यवति हंत्यजः॥२१॥ श्री ॥

स्यानिश्चयात्॥१८।१९॥ सांख्यं ज्ञानं योग उपासना॥२०॥ ननु सांख्यं केवलपरं योगः सविशेषणपरः कथमुभयोरेकपरत्वं तत्राह एक एवाद्वितीयोऽसौ अतः सांख्यस्य तत्परत्वं युक्तं विशेषणभूतस्य सर्वप्रपंचस्य तन्मयत्वात् विशेषणविषयस्य योगस्यापि युक्तमद्वितीयपरत्वमित्याह ऐतदात्म्यमिति एषः श्रीकृष्णः आत्मा यस्य तत् एतदात्मा तस्य भावः ऐतदात्म्यं भवितव्ये च भावनिर्देशः ऐतदात्म्यमिदं सर्वमिति श्रुतेः अत्र हेतुः ॥ आत्मनेति हे सभ्याः आत्माश्रयः अन्यनिरपेक्षः सन् अजः इदं जगत् सृजति अवति हंति चेति॥ २१ ॥ ७ ॥

किन्त्वविविधानीति यस्यावेक्षया अनुग्रहेण विविधानि नानाप्रकाराणि कर्माणि तपोयोगादीनि जनयन् कुर्वन् यद्यस्मात् अयं सर्वोऽपि जनो धर्मादिलक्षणं श्रेय ईहते साधयति कर्माणि तत्फलानि च यदधीनानीत्यर्थः॥२२।२३॥ ननु आत्मनाऽग्रियमाणमर्हणमात्मनः कथं स्यात्तत्राह सर्वभूतानामात्मभूताय अनन्यदर्शिने निरस्तभेदमतये॥२४॥ श्रीकृष्णानुभाववित्सहदेव इत्युक्त्वा तूष्णीमभूत्॥२५॥ द्विजेरितं साधु साध्विति घोषं श्रुत्वा हार्दमभिप्रायम्॥२६।२७।२८।२९।३०।३१॥ हे सदसस्पतयः सर्वे बालस्य भाषितं मामन्यध्वं मा जानीत मा गृह्णीत नकिं तत् यत् यतः कृ

विविधानीह कर्माणि जनयन्यदवेक्षया॥ ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम्॥२२॥ तस्मात्कृष्णाय महते दीयतां परमार्हणम्॥ एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेत्॥२३॥ सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने॥ देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता॥२४॥ इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित्॥ तच्छ्रुत्वा तुष्टुवुः सर्वे साधु साध्विति सत्तमाः॥२५॥ श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम्॥ समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः॥२६॥ तत्पादाववनिज्यापः शिरसा लोकपावनीः॥ सभार्यः सानुजामात्यः सकुटुम्बो वहन्मुदा॥२७॥ वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः॥ अर्हयित्वाश्रुपूर्णाक्षो नाशकत्समवेक्षितुम्॥२८॥ इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः॥ नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः॥२९॥ इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः॥ उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावयन्भगवते परुषाण्यभीतः॥३०॥ ईशो दुरत्ययः काल इति सत्यवती श्रुतिः॥ वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते॥३१॥ यूयं पात्रविदां श्रेष्ठा मा मन्यध्वं बालभाषितम्॥ सदसस्पतयः सर्वे कृष्णो यत्संमतोऽर्हणे॥३२॥ तपोविद्याव्रतधरान्ज्ञानविध्वस्तकल्मषान्॥ परमर्षीन्ब्रह्मनिष्ठाँल्लोकपालैश्च पूजितान्॥३४॥ सदस्पतीनतिक्रम्य गोपालः कुलपांसनः॥ यथा काकः पुरोडाशं सपर्यां कथमर्हति॥३५॥

ष्णोऽर्हणे अग्रपूजायां संमतस्तत्॥३२।३३॥ अस्यैव वास्तवोऽर्थः पूर्ववदुन्नेयः गोपाल इति वेदपृथिव्यादिपालक इत्यर्थः कुत्सितं वेदविपरीतं लपन्तीति कुलपाः पाखण्डास्तान् अंसते समाघातयतीति तथा सः अकाकः कं च अकं च काके सुखदुःखे से न विद्येते यस्य सः अकाकः आप्तकाम इत्यर्थः स यथा आप्तकामो देवयोग्यं केवलं पुरोडाशमात्रं नार्हति अपितु सर्वस्वमर्पितमयं श्रीकृष्णोऽपि ब्रह्मर्षियोग्यं सपर्यामात्रं कथमर्हति किं त्वात्मसमर्पणमप्यर्हतीत्यर्थः॥३५॥

वर्णाश्रमकुलेभ्योऽपेतो ब्रह्मत्वात् अनामगोत्रमिति श्रुतेः अत एवानधिकारित्वात् सर्वधर्मैर्बहिष्कृतः स्वैरवर्ती परमेश्वरत्वात् अत एव नि
र्गुणः तमआदिरहितः एवंभूतो जीवानां योग्यं तुच्छं सपर्य्यामात्रं कथमर्हतीत्यर्थः॥३५॥ अपि च कथं वर्णनीयो माहेश्वरैः येषां यदूनां महिमापद्य
स्मादेषां कुलं ययातिनाशप्तमपि किं सद्भिर्बहिष्कृतं अपि तु शिरसा धृतं किं च अस्मदादिकुलवत् किं वृथापानरतं अपि त्वतिनियताचारमि
त्यर्थः अहो यदूनामिव तावदीदृशं माहात्म्यं यदुकुलवृद्धस्य ययातेः शापो न प्रादुरभूदित्यादि अयं तु साक्षादीश्वरः अतः सपर्यामात्रं कथमर्हती
त्यर्थः॥३६॥ किं च ये राजानो दुष्टानुच्चाटयंति तेन तदर्थं कीकटादिदेशान् प्याश्रयंति एते तु ब्रह्मर्षिसेवितान् देशानाश्रित्य अब्रह्मवर्चसम् स

वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः॥ स्वैरवर्ती गुणैर्हीनः सपर्य्यां कथमर्हति॥३५॥ ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम्॥ वृथापानरतं शश्वत्सपर्य्यां कथमर्हति॥३६॥ ब्रह्मर्षिसेवितान्देशान्हित्वैते ब्रह्मवर्चसम्॥ समुद्रं दुर्गमाश्रित्य बाधंते दस्यवः प्रजाः॥३७॥ एवमादीन्यभद्राणि बभाषे नष्टमंगलः॥ नोवाच किंचिद्भगवान्यथा सिंहः शिवारुतम्॥३८॥ भगवन्निंदनं श्रुत्वा दुःसहं तत्सभासदः॥ कर्णौ पिधाय निर्जग्मुः शपंतश्चेदिपं रुषा॥३९॥ निंदां भगवतः शृण्वन् तत्परस्य जनस्य वा॥ ततो नापैति यः सोपि यात्यधः सुकृताच्च्युतः॥४०॥ ततः पांडुसुताः क्रुद्धा मत्स्यकैकयसृंजयाः॥ उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः॥४१॥ ततश्चैद्यस्त्वसंभ्रांतो जगृहे खड्गचर्मणी॥ भर्त्सयन्कृष्णपक्षीयान् राज्ञः सदसि भारत॥४२॥ तावदुत्थाय भगवान्स्वान्निवार्य्य स्वयं रुषा॥ शिरः क्षुरांतचक्रेण जहारापततो रिपोः॥४३॥ शब्दः कोलाहलोप्यासीच्छिशुपाले हते महान्॥ तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः॥४४॥ चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत्॥ पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता॥४५॥

१ समुद्रं दुर्गमपि हित्वाहापयित्वेत्यर्थः बाधंते
तथा दस्यवः प्रजाः ताश्च अयमर्थः वेदतदर्थाभियोगो ब्रह्मवर्चसं तद्विरुद्धमब्रह्मवर्चसं समुद्रं समुद्रा इत्रलिंगं तत्सहितं समुद्रं वेदविरुद्ध
लिंगधारणं पाखंडमित्यर्थः तल्लिंगं त्याजयित्वा बाधते दंडयंति कथंभूतं दुर्गं धर्मवत्मनी तर धर्मं तयादुर्ज्ञेयमित्यर्थः तथा दस्यवः दस्यूनपि
प्रजाविषेण वर्तमानान् दंडयंति अतो यदुभ्योन्यः को नाम धार्मिको सीति पाखंड्युक्तार्थमेव॥३७॥ शिवा फेरुः तस्या रुतं श्रुत्वा यथा सिंहो न किं
चिद्ब्रूते तद्वत्॥३८।३९।४०।४१।४२॥ तावदुत्थायेत्यस्यायमभिप्रायः एष मत्पार्षदो मत्तुल्यबलः सर्वानेतान्हन्यात् अतो मयैव शीघ्रं हंतव्य इति
१ तत्क्षणमेवोत्थाय शिरो जहार

नन्वेवंनिरंकस्यकथंवासुदेवेप्रवेशः तत्राहजन्मत्रयेतिजन्मत्रयेअनुगुणितमनुवर्णितंयद्वैरंतेनसंरब्धयाआविष्टयातन्मयतांतन्स्वरूपतांयातः पुनःपार्षदोबभूवेत्यर्थः अत्रहेतुःभावोहीतिभावोभावनाअनुध्यानंभवस्यध्येयाकारजन्मनःकारणम् पेशस्कारिध्यानेनकीटादेस्तथात्वदृष्टत्वादित्यर्थः ॥४६॥४७॥४८॥४९॥५०॥५१॥सुरामानवाःखेचराः प्रमथाश्च॥५२॥पापंधर्मद्विषं अत्रहेतुःकलिंकलेरंशभूतंअतएवकुरुकुलस्यामयंव्याधिवत्ना



जन्मत्रयानुगुणितवैरसंरब्धयाधिया॥ध्यायंस्तन्मयतांयातोभावोहिभवकारणम्॥४६॥ऋत्विग्भ्यःससदस्येभ्योदक्षिणांविपुलामदात्॥सर्वान्संपूज्यविधिवच्चक्रेऽवभृथमेकराट्॥४७॥साधयित्वाक्रतुंराज्ञःकृष्णोयोगेश्वरेश्वरः॥उवासकतिचिन्मासान्सुहृद्भिरभियाचितः॥४८॥ततोनुज्ञाप्यराजानमनिच्छंतमपीश्वरः॥ययौसभार्य्यःसामात्यःस्वपुरंदेवकीसुतः॥४९॥वर्णितंतदुपाख्यानंमयातेबहुविस्तरम्॥वैकुंठवासिनोर्जन्मविप्रशापात्पुनःपुनः॥५०॥राजसूयावभृथ्येनस्नातोराजायुधिष्ठिरः॥ब्रह्मक्षत्रसभामध्येशुशुभेसुरराडिव॥५१॥राज्ञासंपूजिताःसर्वेसुरमानवखेचराः॥कृष्णंक्रतुंचशंसंतःस्वधामानिययुर्मुदा॥५२॥दुर्योधनमृतेपापंकलिंकुरुकुलामयं॥योनसेहेश्रियंस्फीतांदृष्ट्वापांडुसुतस्यताम्॥५३॥यइदंकीर्तयेद्विष्णोःकर्मचैद्यवधादिकम्॥राजमोक्षंवितानंचसर्वपापैःप्रमुच्यते॥५४॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेशिशुपालवधोनामचतुःसप्ततितमोऽध्यायः॥७४॥राजोवाच॥अजातशत्रोस्तंदृष्ट्वाराजसूयमहोदयम्॥सर्वेमुमुदिरेब्रह्मन्नृदेवायेसमागताः॥१॥दुर्योधनंवर्जयित्वाराजानःसर्षयःसुराः॥ इतिश्रुतन्नोभगवंस्तत्रकारणमुच्यताम्॥२॥ऋषिरुवाच॥पितामहस्यतेयज्ञेराजसूयेमहात्मनः॥बांधवाःपरिचर्यायांतस्यासन्प्रेमबंधनाः॥३॥भीमोमहानसाध्यक्षोधनाध्यक्षःसुयोधनः॥ सहदेवस्तुपूजायांनकुलोद्रव्यसाधने॥४॥ ७ ॥

यकं॥५३॥वितानंयज्ञंच॥५४॥इतिश्रीभागवतेमहापुराणेदशमस्कंधेटीकायांचतुःसप्ततितमोऽध्यायः॥७४॥ पंचसप्ततितमेयज्ञावभृथसंभ्रमःसुयोधनस्यचासांत्यामानभङ्गोदर्शिभ्रमात्॥१॥दुर्योधनस्यैकस्यैवदुःखेकारणंपृष्टमुक्तमनुवदतिअजातशत्रोरिति॥१॥इतिश्रुतंत्वन्मुखादेवेत्यर्थः॥२॥दुर्योधनस्या सहनकारणंत्वेनयागमहोत्सवमेवपुनःसिंहावलोकनेननिरूपयतिपितामहस्येत्यादिनाएकंदशनः॥३॥...पूजायांसमानेनेद्रव्यसाधनेनानावस्तुसंपादने॥४॥ ७ ॥

तत्कृतां मैत्रीमाहतुः एतावितिनदृष्टौ पितरौ याभ्यां तौ वसुतस्तु अजन्मत्वादिवादृष्टपितरौ हे भवति युवयोः पित्रोर्न्यस्तावितौ संप्रीणनादीनि प्राप्य अकु
त्रचभयौ क्वचिदपि भयरहितौ भूत्वा ऊषतुः वासं चक्रतुः कथंभूतयोः अक्ष्णोर्नेत्रयोः रक्षकं पक्ष्म यद्वत् तथा रक्षकयोर्युक्तं युवयोरेतत् यतः सतां सतु
कृपाणां परः स्व इति नास्ति वैषम्यम् ॥३८॥ अभीष्टत्वे लिंगं यत्यस्य श्रीकृष्णस्य प्रेक्षणे दृशिषु नेत्रेषु अवधायकं पक्ष्मकृतं विधातारं शपन्ति दृग्भि
र्नेत्रद्वारैः हृदि कृतं हृदये प्रवेशितं परिरभ्य तद्भावं तदात्मतां प्रापुः अपि नित्ययुजां आरूढयोगिनामपि समाधिनिष्ठानामिति यावत् दुरापं दुष्प्रापम् ॥३९॥
॥४०॥ चिरायितान् चिरं विलंबितान् अत्र हेतुः शत्रूणां पक्षस्य क्षपणे चेतो येषां तान् ॥४१॥ अपि स्वित् अस्मान् अवध्यायथ अवजानीथ अकृतज्ञा एते इत्या
विशंकया ईषच्छंकया न शंकामात्रं निश्चितमेवैतत् परित्यज्य गतत्वादिति अत आह नूनमिति ॥४२॥ एतत्स्पष्टं तमाह वायुरिति आक्षिपते पृथक्करोतीत्यर्थः ॥४३॥

एतावदृष्टपितरौ युवयोः स्म पित्रोः संप्रीणनाभ्युदयपोषणपालनानि ॥ प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्न्यस्तावकुत्रच
भयौ न सतां परः स्वः ॥३८॥ श्रीशुक उवाच ॥ गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपंति ॥ दृग्भिर्हृदि
कृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापम् ॥३९॥ भगवांस्तास्तथाभूता विविक्त उपसंगतः ॥ आश्लिष्यानाम
यं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥४०॥ अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया ॥ गतांश्चिरायिताञ्छत्रुपक्षक्षपणचेतसः ॥४१॥
अप्यवध्यायथास्मान्स्विदकृतज्ञाविशंकया ॥ नूनं भूतानि भगवान्युनक्ति वियुनक्ति च ॥४२॥ वायुर्यथा घनानीकं तृणं तूलं
रजांसि च ॥ संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ॥४३॥ मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ॥ दिष्ट्या यदासीन्मत्स्ने
हो भवतीनां मदायनः ॥४४॥ अहं हि सर्वभूतानामादिरंतोऽन्तरं बहिः ॥ भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरंगनाः ॥४५॥ एवं ह्ये
तानि भूतानि भूतेष्वात्मात्मना ततः ॥ उभयं मय्यथ परे पश्यताभातमक्षरे ॥४६॥ ((अपि च अतिभद्रमिदं यद्भवतीनां मद्वियोगेन मत्

प्रेमातिशयो जात इत्याह मयीति मयि भक्तिमात्रमेव तावदमृतत्वाय कल्पते इति यद्भवतीनां मत्स्नेह आसीत् तद्दिष्ट्या अतिभद्रं कुतः मदायनः मत्प्रा
पण इति ॥४४॥ कीदृशस्त्वं यं वयं स्नेहेन प्राप्स्याम इत्यपेक्षायामात्मस्वरूपमाह अहं हीति हे अंगनाः भौतिकानां शरावसैंधवादीनां यथा आकाशादीनि
पंच महाभूतान्याद्यन्तादिरूपाणि एवं सर्वभूतानां जरायुजादीनां अहं अतो व्यापकं मां भवत्यः प्राप्ता एवेति ॥४५॥ ननु चतुर्विधस्तु प्रमाणां तद्देहकाले वार्य
तादिरूपः तस्मिंश्च सर्वव्यापके सर्वभूतानि वर्तंत इति कुतस्त्वत्प्रेरस्माकमिति अत आह एवं हीति अयमर्थः यथा शरावादीनां भौतिकानां महाभूतान्या
द्यन्तादिरूपाणि एवमेतानि चतुर्विधानि भूतान्यपि भौतिकत्वाविशेषात् स्वकारणेषु भूतेष्वेव वर्तन्ते न तु भोक्तर्यात्मनि आत्मा तु भूतेष्वात्मनाभो
[illegible] आभातं [illegible] ॥ ४६ ॥ ८२ ॥

अध्यात्मशिक्षया स्वरूपोपदेशेन शिक्षिताः बोधिताः तस्यानुस्मरणेन ध्वस्तो जीवकोशो लिंगं यासां ताः तमेवाध्यगमन् प्रापुः ॥४७॥ एवं मातो पिक्ष्य पुनर्गृहव्यासंगेन माः पया त्विति तच्चरणस्मरणं प्रार्थयामासुरित्याह आहुश्चेति हे नलिननाभ त्वत्पदारविंदं गेहजुषां गृहसेविनीनामपि नो मनसि सदा उदियात् आविर्भवेत् ॥४८॥ इति दशमे टीकायां द्व्यशीतितमोऽध्यायः ॥८२॥ त्र्यशीतितमे एवं च स्त्रीणां कृष्णकथोत्सवो द्रौपद्यै कृष्णभार्याभिरुक्ताः स्वस्वकरग्रहाः ॥१॥ अथ यंकुशलं ॥१॥ तत्र्यादेक्षया हतमंहो येषां ते ॥२॥ महतां मनस्तः सकाशात् मुखद्वारेतो निःसृतं क्वचित्कदाचित् देहभृतां देहधारिणां देहकृच्चासावस्मृतिश्च अविद्यातां छिनत्तीति तथा तं देहकृदीश्वरस्तद्विषयाज्ञानच्छिदं वा हे प्रभो त्वच्चरणांबुजासवं कर्णपुटैर्येः लं पिबंति तेषां त्वत्तः दुर्जेन शास्तुः कालरूपात् कुतोऽशिवं भवतीत्यर्थः कथंभूतं महात्मनां व्यासादीनां मुखनिःसृतं क्वचिदपि व्यासादिवाक्यैः स्वमात्मत्वेन जानतो न दुःखं भवतीत्यर्थः ईश्वरस्यात्मत्वमेव कथं तत्राह देहे देहभृत इति देहभृतो जीवाः त्वत्कृतेन त्वद्हेतुत्वेन उच्छ्वसंति जीवंति कोह्येवान्यात् कः प्राण्यात् यदेष आकाश

॥ श्रीशुक उवाच ॥ अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः ॥ तदनुस्मरणध्वस्तजीवकोशास्तमध्यगमन् ॥४७॥ आहुश्च ते नलिननाभ पदारविंदं योगेश्वरैर्हृदि विचिंत्यमगाधबोधैः ॥ संसारकूपपतितोत्तरणावलंबं गेहंजुषामपि मनस्युदियात्सदा नः ॥४८॥ इति श्रीभागवते महापुराणे दशमस्कंधे तीर्थयात्रायां वृष्णिकुरुसंगमो नाम द्व्यशीतितमोऽध्यायः ॥८२॥ श्रीशुक उवाच ॥ तथानुगृह्य भगवान् गोपीनां स गुरुर्गतिः ॥ युधिष्ठिरमथापृच्छत्सर्वांश्च सुहृदोऽव्ययम् ॥१॥ त एवं लोकनाथेन परिपृष्टाः सुसत्कृताः ॥ प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥२॥ कुतोऽशिवं त्वच्चरणांबुजासवं महन्मनस्तो मुखनिःसृतं क्वचित् ॥ पिबंति ये कर्णपुटैरलं प्रभो देहंभृतां देहकृदस्मृतिच्छिदम् ॥३॥ हित्वात्मधामविधुतात्मकृतत्र्यवस्थमानंदसंप्लवमखंडमकुंठबोधम् ॥ कालोपसृष्टनिगमावन आत्तयोगमायाकृतिं परमहंसगतिं नताः स्म ॥४॥ ७ ॥

आनंदो न स्यात् इति श्रुतिः अथवा त्वन्मुखनिःसृतं त्वच्चरणांबुजासवं ये पिबंति तेषां महात्मनां कुतोऽशिवमित्यर्थः त्वत्कृते भगवन्नमस्कारकरणाय ॥४॥ हित्वेति परं हि यत्त्वात्वां हि एवं त्वामेव नताः स्मेत्यर्थः कथंभूतं आत्मधाम्ना स्वरूपप्रकाशेन विधुता निरस्ता आत्मकृता बुद्धिनिमित्तास्तिस्रो वस्था यस्मिन् तं अत एव आनंदसंप्लवं सर्वानंदैकरूपम् अखंडं च अपरिच्छिन्नं यतः नकुंठः कुंठितो बोधश्चित्शक्तिर्यस्य तं नन्वेवं रूपस्ताश्चेत् कृष्णस्य कुतोऽस्य सदा दिव्यदेवमतीतिरत आह कालोपसृष्टेति कालेन उपसृष्टा विलुप्ता ये निगमाः श्रुतयः तेषामवने रक्षार्थं आत्ता उपात्ता योगमायया आकृतिर्निराकारमूर्तिर्येन तं परमहंसानां गतिं त्वां अतस्त्वैवं रूपत्वादस्माकं च त्वन्मायया एतत्सर्वं विपरीत्यात् त्वामेव नताः स्मेति यद्वा त्वामिति प्रकरणात् ज्ञानमेत्वं नताः स्म किंकृत्वा हित्वा किं आत्मधाम आत्मा शरीरं धाम गृहं च तत्र नच देहदैहिकसंगं परित्यज्येत्यर्थः समानमन्यत् ॥४॥

त्रिषु लोकेषु गीताः ॥ ५ ॥ कौसले हे सत्ये शैब्ये हे मित्रविंदे रोहिणीनामका काचित्कृष्णमहिषी तुल्या ॥ ६ ॥ हे अन्याः श्रीकृष्णपत्न्यः ॥ ७ ॥ मां मा अर्पयितुं सम्पाद्य पितुं राजसु जरासंधादिषु उद्यतकार्मुकेषु सत्सु अजेया ये भटास्तेषां शेखरिताः मुकुटवत् कृता अंघ्रिरेणवो येन तेषां मूर्ध्नि पदं दधदित्यर्थः तस्य श्रीनिकेतस्य चरणौ मम मार्चनाय अस्तु ॥ ८ ॥ सनाभेर्भ्रातुर्वधेन सिंहकृतेन तप्तं संहृद्यस्य तेन मे ततेन ततातेन लिप्तमभिशापं दुर्यशः अपमार्ष्टुं परिहर्तुमृक्षराजं जित्वा रत्नं स्यमंतकमुपाजहार आनीतवान् अथानंतरं मत्पित्रे रत्नमदात् तेन स्वापराधेन भीतः स मे पिता प्रभवे श्रीकृष्णाय मामदिशत् ददौ दत्तामक्रू

ऋषिरुवाच ॥ इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वंधककौरवस्त्रियः ॥ समेत्य गोविंदकथा मिथोऽगृणंस्त्रिलोकगीताः शृणु वर्णयामि ते ॥ ५ ॥ श्रीद्रौपद्युवाच ॥ हे वैदर्भ्यच्युतो भद्रे हे जांबवति कौसले ॥ हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्ष्मणे ॥ ६ ॥ हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान्स्वयम् ॥ उपयेमे यथा लोकमनुकुर्वन्स्वमायया ॥ ७ ॥ रुक्मिण्युवाच ॥ चैद्याय मार्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरितांघ्रिरेणुः ॥ निन्ये मृगेंद्र इव भागमजावियूथात्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥ ८ ॥ सत्यभामोवाच ॥ यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ॥ जित्वर्क्षराजमथ रत्नमदात्स तेन भीतः पिताऽदिशत मां प्रभवेऽपि दत्तां ॥ ९ ॥ जांबवत्युवाच ॥ प्राज्ञाय देहकृदमुं निजनाथदैवं सीतापतिं त्रिणवहान्यमुनाऽभ्ययुध्यत् ॥ ज्ञात्वा परीक्षित उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाहममुष्य दासी ॥ ११ ॥ कालिंद्युवाच ॥ तपश्चरंतीमाज्ञाय स्वपादस्पर्शनाशया ॥ सख्योपेत्याग्रहीत्पाणिं योऽहं तद्गृहमार्जनी ॥ ११ ॥ मित्रविंदोवाच ॥ यो मां स्वयंवर उपेत्य विजित्य भूपान्निन्ये श्वयूथगमिवात्मबलिं द्विपारिः ॥ भ्रातॄंश्च मेऽपकुरुतः स्वपुरं श्रियौकस्तस्यास्तु मेऽनुभवमंघ्र्यवनेजनत्वम् ॥ १२ ॥ सत्योवाच ॥ सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृंगान् पित्राकृतान्क्षितिपवीर्यपरीक्षणाय ॥ ॥

११ राद्भ्यः ॥

मतिश्रुतामपीत्यर्थः ॥ ९ ॥ देहकृत् पिता अमुं श्रीकृष्णं निजनाथं स्वामिनं दैवमीश्वरं सीतापतिं माज्ञाय अविज्ञाय त्रिणवहानि त्रिनवाहानि दृढस्पर्धं रोधेन सप्तविंशतिदिनान्यमुनाऽयुध्यत परीक्षितः संजातपरीक्षायस्स परी—क्षितः ते साक्षात्सीतापतिरेवासाविति ज्ञात्वा पादौ प्रगृह्य मणिना सह मामर्हणमुपाहरत् अर्हणतया समर्पितवान् अहो तर्हि त्वमतिश्रेष्ठासि नेत्याह अमुष्याहं दासीति ॥ १० ॥ सख्या अर्जुनेन तस्य गृहमार्जनी गृहसंमार्जनकर्त्री ॥ ११ ॥ श्वयूथगं श्वयूथगतं स्वबलिं द्विपारिः सिंह इवेति मे भ्रातॄंश्चापकुरुतः अपकारं कुर्वतो विजित्य श्रियौकः लक्ष्मीनिवासः तस्यांघ्र्यव—नेजनं चरणक्षालनं कैंकर्यं मम भवे भवे प्रतिजन्मनि स्तु ॥ १२ ॥ सप्तोक्षणः वृषभान् ॥ ॥

बलंचवीर्यंचतीक्ष्णशृंगाणिचअनिशायितानियेषांतान्मेपित्राकृतान्संपादितान्बलीयसोमांदातुंक्षितिपानांवीर्यस्यबलस्यपरीक्षणायतान्
तिप्रसिद्धान्वीराणांदुर्मदंघ्नंतियेतान्नरसाशीघ्रमेवनिगृह्यदमयित्वाक्रीडन्नायासेनैवबबंधअजतोकान्अजापत्यानि॥१३॥वीर्यमेवशुल्कंदेयं
यस्यास्ताम्दासीभिःसहचतुरंगिणींगजाश्वादिसेनायुक्तांपुरंनिन्ये॥१४॥हेकृष्णेहेद्रौपदितस्मिन्नेवचित्तंयस्यास्तांमाम्अक्षौहिण्यासेनयासहसखी
जनैश्चसह॥१५॥येनपादसंस्पर्शेनआत्मनोमेतत्कैवल्याख्यंश्रेयोभवेत्तस्यहायेनकारणेनआत्मनोजीवस्यतत्श्रेयःसएवपुरुषार्थइति॥१६॥राज्ञि
हेद्रौपदियथामित्रविंदायास्तथैवममापिचित्तंमुकुंदविषयमासीत्सुसंमृश्यसुविचार्यपद्महस्तयाश्रियावृतःकिलअतोऽपिममचित्तंश्रीमुकुंदेआ

तान्वीरदुर्मदहनस्तरसानिगृह्यक्रीडन्बबंधहयथाशिशवोऽजतोकान्॥१३॥यइत्थंवीर्यशुल्कांमांदासीभिश्चतुरंगि
णीम्॥पथिनिर्जित्यराजन्यान्निन्येतद्दास्यमस्तुमे॥१४॥भद्रोवाच॥पितामेमातुलेयायस्वयमाहूयदत्तवान्॥कृष्णेकृ
ष्णायतच्चित्तामक्षौहिण्यासखीजनैः॥१५॥अस्यमेपादसंस्पर्शोभवेज्जन्मनिजन्मनि॥कर्मभिर्भ्राम्यमाणायायेनतच्छ्रे
यआत्मनः॥१६॥लक्ष्मणोवाच॥ममापिराज्ञ्यच्युतजन्मकर्मश्रुत्वामुहुर्नारदगीतमासह॥चित्तंमुकुंदेकिलपद्महस्त
यावृतःसुसंमृश्यविहायलोकपान्॥१७॥ज्ञात्वाममामतंसाध्विपितादुहितृवत्सलः॥बृहत्सेनइतिख्यातस्तत्रोपा
यमचीकरत्॥१८॥यथास्वयंवरेराज्ञिमत्स्यःपार्थेप्सयाकृतः॥अयंतुबहिराच्छन्नोदृश्यतेसजलेपरं॥१९॥श्रुत्वैतत्सर्व
तोभूपाआययुर्मत्पितुःपुरम्॥सर्वास्त्रशस्त्रतत्त्वज्ञाःसोपाध्यायाःसहस्रशः॥२०॥पित्रासंपूजिताःसर्वेयथावीर्ययथा
वयः॥आददुःसशरंचापंवेद्धुंपर्षदिमद्धियः॥२१॥आदायव्यसृजन्केचित्सज्यंकर्तुमनीश्वराः॥आकोष्ठंज्यांसमुत्कृष्यपे
तुरेकेऽमुनाहताः॥२२॥सज्यंकृत्वापरेवीरामागधांबष्ठचेदिपाः॥भीमोदुर्योधनःकर्णोनाविदंस्तदवस्थितिम्॥ ७ ॥

सेतिहृदनिहर्षे॥१७॥तत्रश्रीकृष्णप्राप्तावुपायमचीकरत्कारयामास॥१८॥यथाराज्ञितवस्वयंवरेपार्थेप्सयाआप्तुमिच्छयाकृतःतथामत्स्यंका
रितवान्पाठांतरेपार्थस्येप्सुणाऽपाकृतःतर्हिदमपिअर्जुनएवकिंनाविध्यत्तत्राहअयंत्वितिसमत्स्योबहिरेवाच्छन्नःनांतःअंतःस्तंभलग्नयोर्ध्वेदृष्ट्या
संलक्ष्यतेअयंतुनतथाकिंतुस्तंभमूलेनिहितकलशजलेकेवलंदृश्यतेअतोदृष्टिरधस्तात्उपरिचलक्ष्यमितिश्रीकृष्णव्यतिरेकेणनकस्यापिभे
द्यबुद्धिभावः॥१९॥२०॥मत्स्यंवेद्धुम्पर्षदिसंसदिमद्धियःमय्येवधीर्येषामितिअन्यविशेषानवेद्धुंशक्ताइतिभावः॥२१॥नदेवाहआदायेतिअमुना
॥चापेन॥२२॥नाविदन्तदवस्थितिमितिमागधादीनांक्रियाशक्तिरेवनतुलक्ष्याभिज्ञतेत्यर्थः॥२३॥

 

यत्तो यत्नवान् असृजत् मुमोच स बाणो मत्स्यं नाच्छिनत् परं केवलं पस्पर्श ज्ञानवानप्यर्जुनो बलेनापूर्णत्वादित्यर्थः ॥२४॥२५॥ अभिजिति सर्वार्थसाधके मुहूर्ते ॥२६॥२७॥ भगवत्प्राप्तिहर्षनिर्भरेणात्मानमेवानुवर्णयन्त्याह द्वाभ्यां तद्रंगमिति तत्तदा कलौ कलस्वनौ नूपुरौ ययोस्ताभ्यां पद्भ्यां रंगमाविशं कनकेनोज्ज्वलां रत्नमालां निवीय प्रावृत्य परिधाय च नीवीबंधेन च कौशिकाग्र्यं उत्तमकौशेयवस्त्रं सव्रीडो हासो यस्मिंस्तद्वदनं यस्याः सा कबर्य्यां धृताः स्रजो यया सा ॥२८॥ उरवः कुंतला यस्मिन् कुंडलयोस्त्विषो ययोस्ते गंडस्थले यस्मिन् तच्च तच्च शिशिरः संतापहारी हासो येषु तैः कटाक्षमोक्षैः अपांगमोक्ष

मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितिम् ॥ पार्थो यत्तोऽसृजद्बाणं नाच्छिनत्पस्पृशे परम् ॥२४॥ राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु ॥ भगवान्धनुरादाय सज्यं कृत्वाऽथ लीलया ॥२५॥ तस्मिन्संधाय विशिखं मत्स्यं वीक्ष्य सकृज्जले ॥ छित्त्वेषुणापातयत्तं सूर्ये चाभिजिति स्थिते ॥२६॥ दिवि दुंदुभयो नेदुर्जयशब्दयुता भुवि ॥ देवाश्च कुसुमासारान्मुमुचुर्हर्षविह्वलाः ॥२७॥ तद्रंगमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ॥ नूत्ने निवीय परिधाय च कौशिकाग्र्ये सव्रीडहासवदना कबरीधृतस्रक् ॥२८॥ उन्नीय वक्त्रमुरुकुंतलकुंडलत्विड्गंडस्थलं शिशिरहासकटाक्षमोक्षैः ॥ राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥२९॥ तावन्मृदंगपटहाः शंखभेर्यानकादयः ॥ निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥३०॥ एवं वृते भगवति मयेशे नृपयूथपाः ॥ न सेहिरे याज्ञसेनि स्पर्द्धंतो हृच्छयातुराः ॥३१॥ मां तावद्रथमारोप्य हयरत्नचतुष्टयम् ॥ शार्ङ्गमुद्यम्य संनद्धस्तस्थावाजौ चतुर्भुजः ॥३२॥ दारुकश्चोदयामास कांचनोपस्करं रथम् ॥ मिषतां भूभुजां राज्ञि मृगाणां मृगराडिव ॥३३॥ तेऽन्वसज्जंत राजन्या निषेद्धुं पथि केचन ॥ संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम् ॥३४॥ ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वंघ्रिकंधराः ॥ निपेतुः प्रधने केचिदेके संत्यज्य दुद्रुवुः ॥३५॥

णविलासैः अनुरक्तं हृदयं यस्याः साऽहम् ॥ २९ ॥ ३० ॥ हे याज्ञसेनि हे द्रौपदि श्रीकृष्णे ईशे मया वृते सति स्पर्द्धंतः स्पर्द्धमानाः नन्वेवं परमैश्वर्य्यं दृष्टवतां कुतः स्पर्द्धावसरस्तत्राह हृच्छयातुरा इति हृच्छयेन कामेनातुराः विवशाः कामविजृंभिता स्पर्द्धेति भावः ॥ ३१ ॥ हयरत्नानां चतुष्टयं यस्मिंस्तं रथं द्वाभ्यां मामालिंग्य द्वाभ्यां धनुर्बाणौ गृहीत्वा चतुर्भुजः तस्थौ ॥ ३२ ॥ मृगाणां मिषतां मृगराडिव तदा हरिर्जगामेति शेषो ज्ञातव्यः रा- कस्यैव वा मृगराजोपमा ॥ ३३ ॥ अन्वसज्जंत पृष्ठतः सक्ता बभूवुर्निषेद्धुं प्रतिबंधकर्तुं केचन पुरतो गत्वा पथि संयत्ता बभूवुरित्यर्थः उद्धृतेष्वा-साः ऊर्ध्वकृतचापाः ग्रामसिंहाः श्वानः हरिं सिंहं यथेति ॥ ३४ ॥ ३५ ॥

रविंच्छादयंति ते रविच्छदाः ध्वजेषु पटा यस्यां चित्राणि तोरणानि यस्यां सा चसा च तां कुशस्थलीं पुरीं यदुपतिः समाविशत् स्वकेतनं मंडलं अलंचलं वा ॥ ३६ ॥ महार्हवासः प्रभृतिभिः सुहृदादीन्पूजयामास ॥ ३७ ॥ दास्यादिभिः सह आयुधानि पूर्णस्य पूर्णायापि ददौ ॥ ३८ ॥ इमा अष्टौ वयं सर्वसंगनिवृत्त्या तपसा स्वधर्मेण अद्धा साक्षात्तस्य गृहदासिका बभूविम ॥ ३९ ॥ क्षितिजये दिग्विजये जितानां राज्ञां कन्या नः अस्मान् तेन रुद्धाः ज्ञात्वा ततो निर्मुच्य संसृतेर्विमोक्षो यस्मात्तत्पादांबुजं अनुस्मरतीर्नः परिणिनाय उदवहत् आप्तकामो पिपः ॥ ४० ॥ न वयमिति साम्राज्यादि न कामयामहे किंतु एतस्य श्रीमत्पादरजो मूर्ध्ना वोढुं कामयामह इति ननु तस्य गृहिण्या यूयं सर्वसंपद्भाजः किमेवं कामयध्वं अत आहुः हे साध्वि साम्राज्यं सार्वभौमपदं तथैव च हे

ततः पुरीं यदुपतिरत्यलंकृतां रविच्छदध्वजपटचित्रतोरणाम ॥ कुशस्थलीं दिविभुवि चाभिसंस्तुतां समाविशत्तरणिरिव स्वकेतनम ॥ ३६ ॥ पिता मे पूजयामास सुहृत्संबंधिबांधवान ॥ महार्हवासोलंकारैः शय्यासनपरिच्छदैः ॥ ३७ ॥ दासीभिः सर्वसंपद्भिर्भटेभरथवाजिभिः ॥ आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः ॥ ३८ ॥ आत्मारामस्य तस्येमा वयं वै गृहदासिकाः ॥ सर्वसंगनिवृत्त्याद्धा तपसा च बभूविम ॥ ३९ ॥ श्रीमहिष्य ऊचुः ॥ भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाथ नः क्षितिजये जितराजकन्याः ॥ निर्मुच्य संसृतिविमोक्षमनुस्मरंतीः पादांबुजं परिणिनाय य आप्तकामः ॥ ४० ॥ न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत ॥ वैराज्यं पारमेष्ठ्यं च आनंत्यं वा हरेः पदम ॥ ४१ ॥ कामयामह एतस्य श्रीमत्पादरजः श्रियः ॥ कुचकुंकुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः ॥ ४२ ॥ व्रजस्त्रियो यद्वांछंति पुलिंद्यस्तृणवीरुधः ॥ गावश्चारयतो गोपाः पादस्पर्शं महात्मनः ॥ ४३ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ श्रीशुक उवाच ॥ श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः ॥ कृष्णेऽखिलात्मनि हरौ प्रणयानुबंधं सर्वा विसिस्मु

साध्वि स्वाराज्यमैंद्रं पदं भौज्यं तदुभयभोगभाक्त्वम् विविधं राजत इति विराट् तस्य भावो वैराज्यं अणिमादिसिद्धिभाक्त्वमित्यर्थः पारमेष्ठ्यं ब्रह्मपदं आनंत्यं मोक्षं हरेः पदं तत्सालोक्यादि न तु कामयामह इति यद्वा बहु च ब्राह्मणोक्तक्रमेण प्रागादिदिक्चतुष्टयाधिपत्यानि साम्राज्य भौज्य स्वाराज्य वैराज्याख्यानि ॥ ४१ ॥ तर्हि किं तत् पादरज एव काम्यते अत आहुः श्रियः कुचकुंकुमगंधाढ्यमिति ब्रह्मादिसेव्यया श्रिया पि सेवितत्वादिति भावः ॥ ४२ ॥ ननु तर्हि अतिदुर्लभत्वात् किं तदाशया अत आहुः व्रजस्त्रिय इति यत् यथा गावः गाः महात्मनो पि गाश्चारयतः पादस्पर्शं च गोपा यथा वांछंति तद्वत् तत्पराणां सुलभ इति भावः ॥ ४३ ॥ इति दशमे टीकायां त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ चतुर्भिरधिकाशीतितमे मुनिसमागमे ॥ वसुदेव

लपुत्री गांधारी माधवी सुभद्रा क्षितिपानां राज्ञां पत्न्यः स्वगोप्यः कृष्णभक्ता गोप्यः विसिस्म्युः विस्मयं चक्रुः ॥१॥२॥३॥४॥५॥६॥ आनर्चुः अर्चितवंतः ॥७॥ धर्म गोप्त्री तनुर्यस्य स धर्मगुप्ततनुः यतानि यता वाग्यस्य तस्य सदसः ॥८॥ जन्मभृतः सफलजन्मानः तत्फलं जन्मफलं किं तत् यद्योगेश्वरदर्शनं ॥९॥ किंच युष्माकं दर्शनमेव तावद्देवानामपि दुष्प्रापं अस्माकं तु स्पर्शनादिकमपि कथं नु घटितमिति विस्मयेनाह किमिति स्वल्पतपसां तीर्थस्नानादिमात्रे तपोबुद्धिर्येषां तथा चार्चायां प्रतिमायां देवबुद्धिश्चक्षुर्दृष्टिर्येषां तेषां योगेश्वरदर्शनादिकमिदं किं असंभावितमित्यर्थः ॥१०॥ एतत्प्रपंचयति नह्यम्मयानीति ॥

इति संभाष्यमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु ॥ आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥२॥ द्वैपायनो नारदश्च च्यवनो देवलोऽसितः ॥ विश्वामित्रः शतानंदो भरद्वाजोऽथ गौतमः ॥३॥ रामः सशिष्यो भगवान्वसिष्ठो गालवो भृगुः ॥ पुलस्त्यः कश्यपोऽत्रिश्च मार्कण्डेयो बृहस्पतिः ॥४॥ द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रास्तथांगिराः ॥ अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥५॥ तान्दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः ॥ पांडवाः कृष्णरामौ च प्रणेमुर्विश्ववंदितान् ॥६॥ तानानर्चुर्यथा सर्वे सहरामोऽच्युतोऽर्चयत् ॥ स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥७॥ उवाच सुखमासीनान्भगवान्धर्मगुप्तनुः ॥ सदसस्तस्य महतो यतवाचोऽनुशृण्वतः ॥८॥ श्रीभगवानुवाच ॥ अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम् ॥ देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥९॥ किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम् ॥ दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥१०॥ नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ॥ ते पुनंत्युरुकालेन दर्शनादेव साधवः ॥११॥ नाग्निर्न सूर्यो न च चंद्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः ॥ उपासिता भेदकृतो हरंत्यघं विपश्चितो घ्नंति मुहूर्तसेवया ॥१२॥ यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ॥ यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥१३॥

॥ त्रिभिः ॥११॥ वाङ्मनसयोरप्युपासनाविषयत्वं यो वाचं ब्रह्मेत्युपास्ते यो मनो ब्रह्मेत्युपास्त इति श्रुतेः अघं हरंतीति तन्मूलमज्ञानं न हरंतीति अत्र हेतुः भेदकृतः भेदकर्तारः यद्वा भेदबुद्धिं कुर्वतः पुंसः विपश्चितो निरस्तभेदाः ते तु मुहूर्तमात्रसेवयैवाघं घ्नंतीति ॥१२॥ अतः साधूंस्त्विहायान्यत्रात्मादिबुद्ध्यासज्जमानो तिर्यक्तुल्य इत्याह यस्येति आत्मबुद्धिः अहमिति बुद्धिः त्रयो धातवो वातपित्तश्लेष्माणः प्रकृतयो यस्य तस्मिन् कुणपे शरीरे स्वधीः स्वीया इति बुद्धिः भौमे भूविकारे इज्यधीः देवताबुद्धिः यत् यस्य तीर्थबुद्धिः अभिज्ञेषु तत्त्ववित्सु यस्य नात्मबुद्ध्यादिः स एव गोखरः गवां खरः अत्यविवेकी यद्वा गवां तृणादिभारवाहः खरो गर्दभ इत्यर्थः ॥१३॥

दुरन्वयं अननुरूपं भ्रमंती अनवस्थिता धीर्बुद्धिर्येषां ते ॥१४॥ ईशितव्यतां अनीश्वरतां [illegible] मधिकारितां जनसंग्रहमात्रमेतदित्यूचुः स्मयंतः हसंतः
॥१५॥ अनन्वयं विवृण्वंत आहुर्द्वाभ्यां यन्माययेति तत्त्वविदुत्तमा अपि वयं कां सा माया यया विमोहिता इति तामाहुः यदिति यद्यस्मादीहया न
रचेष्टितेन गूढः सन् ईशितव्यायति अनीश्वरवदाचरसि भवान्नन्वहमीश्वरश्चेत्किमित्येवमाचरेयं तत्राहुः अहो इति भगवतस्तव विचेष्टि
तं विचित्रं अतर्क्यं ॥१६॥ भगवत्त्वमेवाहुः अनीह इति अनीहः अक्रिय एव आत्मना स्वरूपमात्रेण बहुधेत्यत्र दृष्टांतः यथा भौमैरिति भौमैर्घटा
दिविकारैरुपलक्षिता वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः ननु कथमहं जगत्सृष्ट्यादिकर्ता वसुदेवपुत्रत्वादिति तत्रा



॥श्रीशुक उवाच॥ निशम्येत्थं भगवतः कृष्णस्याकुंठमेधसः ॥ वचो दुरन्वयं विप्रास्तूष्णीमासन् भ्रमद्धियः ॥१४॥ चिरं
विमृश्य मुनय ईश्वरस्येशितव्यताम् ॥ जनसंग्रह इत्यूचुः स्मयंतस्तं जगद्गुरुम् ॥१५॥ मुनय ऊचुः ॥ यन्मायया तत्त्वविदुत्त
मा वयं विमोहिता विश्वसृजामधीश्वराः ॥ यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥१६॥ अनीह ए
तद्बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ॥ भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडंबनम्
॥१७॥ अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय ॥ स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः
परो भवान् ॥१८॥ ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः ॥ यत्रोपलब्धं सद्व्यक्तमव्यक्तं च ततः परम् ॥१९॥ तस्माद्ब्र
ह्मकुलं ब्रह्मन् शास्त्रयोनेस्त्वमात्मनः ॥ सभाजयसि सद्धाम तद्ब्रह्मण्याग्रणीर्भवान् ॥२०॥ अद्य नो जन्मसाफल्यं वि
द्यायास्तपसो दृशः ॥ त्वया संगम्य सद्गत्या यदंतः श्रेयसां परः ॥२१॥ नमस्तस्मै भगवते कृष्णायाकुंठमेधसे ॥ स्वयोगमा
ययाच्छन्नमहिम्ने परमात्मने ॥२२॥ हुः अहो इति विभून्नः परिपूर्णस्य तव इदं जन्मादिचरितं विडंबनम् अनुकरणमात्रं न तु तत्त्व
मिति ॥१७॥ जनसंग्रहमाहुः अथापीति त्रिभिः सत्त्वं शुद्धसत्त्वात्मकं रूपं बिभर्षि स्वलीलया आचारेण वेदपथं च बिभर्षि ॥१८॥ अत एव ब्राह्मणेषु बहुमानम
पि करोषीति सहेतुकमाहुः ब्रह्मेति ब्रह्म वेदाख्यं शुक्लं शुद्धं ते हृदयं अंतरंगरूपं कुत इत्यत आहुः यत्रेति यत्र ब्रह्मणि व्यक्तं कार्यं अव्यक्तं कारणं ततः
परं सत् सन्मात्रं ब्रह्म च तप आदिभिरुपलब्धं तद्ब्रह्म इति ॥१९॥ तस्मादिति हृदयत्वाद्धेतोर्ब्रह्मवर्तकं ब्राह्मणकुलं शास्त्रयोनेर्वेदप्रमाणकस्य तव सद्धाम अभि
व्यक्त्युपलब्धिस्थानं सभाजयसि संपूजयसि ततस्मादेव कारणात्त्वं ब्रह्मण्यानामग्रणीर्मुख्यः तत्प्रवर्तकः सन्कर्माचरसीत्यर्थः ॥२०॥ तस्मादीश्वरस्य त
वेदं जनसंग्रहमात्रं वयं तु तव संगत्या कृतार्था इत्याहुः अद्येति षड्भिः सतां गत्या त्वया संगम्य संगं प्राप्य यत् यस्मात्त्वं श्रेयसां परः अवधिः ॥२१॥२२॥

एकस्मिन्नेवस्थाने आरामो येषां ते ऽपि कालम् [illegible] ॥२३॥ एतत्स्पष्टयंतमाहुः अथेति शयानः स्वप्नान् पश्यन् गुणतत्त्वदृक्
स्वप्नविषयेषु तत्त्वदृष्टिर्नाममात्रमिंद्रियेण मनसा आभातं सिंहव्याघ्रादिरूपमात्मानं वेद तद्रहितं देवदत्तादिरूपमात्मानं न वेद यथा ॥२४॥ एवं त्वा त्वां ना
ममात्रेषु स्वप्नादितुल्य विषयेषु इंद्रियै ईहा प्रवृत्तिः सैव माया तया विभ्रमच्चित्तो न वेद स्मृतेर्विवेकस्योपप्लवान्नाशात् ॥२५॥ अघौघस्य मर्षेण नाशं करोति य
द्गंगाख्यं तीर्थं तस्यास्पदमाश्रयं तें घ्रिं सुविपक्वयोगैरपि हृदि कृतं केवलं न तु दृष्टं तस्य तेंघ्रिं ददृशिम दृष्टवंतो वयं बहुभिः पुण्यैः अतो ऽस्मान् भक्तानुग्र
हाण भक्तान् कृत्वा अनुग्रहं कुर्वित्यर्थः ननु किं भक्त्या पश्चात् पूर्वं न एवं तप्यतामिति नेत्याहुः उत्सिक्ता उद्रिक्ता या भक्तिः तया उपहत आशयलक्षणो जी

नयं विदं त्वमी भूपा एकारामाश्च वृष्णयः ॥ मायाजवनिकाच्छन्नमात्मानं कालमीश्वरम् ।२३। यथा शयानः पुरुष आत्मानं गु
णतत्त्वदृक् ॥ नाममात्रेंद्रियाभातं न वेद रहितं परम् ॥२४॥ एवं त्वा नाममात्रेषु विषयेष्विंद्रियेहया ॥ मायया विभ्रमच्चि
त्तो न वेद स्मृत्युपप्लवात् ॥२५॥ तस्याद्य ते ददृशिमांघ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः ॥ उत्सिक्तभक्त्यु
पहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् ॥२६॥ श्रीशुक उवाच ॥ इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं यु
धिष्ठिरम् ॥ राजर्षे स्वाश्रमान्गंतुं मुनयो दधिरे मनः ॥२७॥ तद्वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः ॥ प्रणम्य चोपसंगृ
ह्य बभाषेदं सुयंत्रितः ॥२८॥ श्रीवसुदेव उवाच ॥ नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ ॥ कर्मणा कर्मनिर्हारो यथा स्या
न्नस्तदुच्यताम् ॥२९॥ नारद उवाच ॥ नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया ॥ कृष्णं मत्वार्भकं यन्नः पृच्छति श्रेय
आत्मनः ॥३०॥ सन्निकर्षोऽत्र मर्त्यानामनादरणकारणम् ॥ गांगं हित्वा यथान्यांभस्तत्रत्यो याति शुद्धये ॥३१॥ यस्यानु
भूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै ॥ स्वतोऽन्यस्माच्च गुणतो न कुतश्चिन्न रिष्यति ॥३२॥

॥ वकोशो येषां त एवं पूर्वं भगवद्ग
तिमापुः नान्य इति ॥२६॥२७॥ उपसंगृह्य चरणौ पाणिभ्यां धृत्वा बभाषे इदमिति संधिरार्षः ॥२८॥ सर्वदेवा येषु तेभ्यः यावतीर्वै देवतास्ताः सर्वा वेदवि
दि ब्राह्मणे वसंतीति श्रुतेः येन कर्मणा यथाकृतेन वा कर्मणां निर्हारो निरासो भवति तदुच्यताम् ॥२९॥ श्रीकृष्णं हित्वास्मान् पृच्छतीति विस्मिता
न्प्रत्याह नातीति बुभुत्सया बोद्धुमिच्छया ॥३०॥ तत्र स्थो गंगातीरवासी ॥३१॥ श्रीकृष्णो ऽर्भकत्वमापन्नो ऽविद्याविजृंभित इत्याह यस्येति द्वाभ्यां अनुभूति
र्ज्ञानं कुतश्चिदपि न रिष्यति न नश्यति तत्र वा हि कालेन कर्कटिकाफलवत् अस्य विश्वस्य लयोत्पत्त्यादिनापि स्वतश्च विद्युदादिवत् अन्यस्माच्च
॥ खड्गादेर्घटादिवत् गुणतो रूपाद्युत्पत्तेः पूर्वरूपादिनाशे हादिवत् ॥३२॥

तमेवक्लेशादिभिरव्याहतानुभवं अतएव ईश्वरं किंच अद्वितीयं कृष्णं अन्यः प्राकृतः उपगूढमाच्छन्नं मनुष्यं मन्येत कैः क्लेशकर्मादिभिः तत्र क्लेशा रागादयश्च तत्पूर्वकानि कर्माणि च तत्परिपाके सुखदुः [illegible] प्राणादिभिश्च स्वविभवैः स्वकार्यैः अत्र दृष्टान्तः मेघहिमोपरागैः अभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ॥३३।३४।३५॥ चित्तस्योपशमः उपशमहेतुः योगो मोक्षोपायहेतुश्च शनैरात्ममुदमावहतीति तथा सुगमः प्रवृत्त्याश्रयत्वात् स्वधर्मश्च आवश्यकः अन्यथा विहिताकरणेन मालिन्यप्रसंगात् ।३६। ननु न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरित्यादिना त्यागस्यैव विहितत्वात् कथं कर्म मोक्षोपाय इत्याशंक्य आदावेव त्यागस्याशक्यत्वादित्याशयेनाहुः अयमिति सार्द्धचतुर्भिः स्वस्त्ययनः। स्वस्ति क्षेममयते एनेनेति तथा श्रद्धया निष्कामतया शुक्लेन शुद्धेन आप्तेन वित्तेन पुरुष ईश्वर इज्येतेति यत् एषः पंथाः ।३७। स्वस्त्ययनत्वमाहुः वित्तैषणा

तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम्॥ प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ॥३३॥ अथोचुर्मुनयो राजन्नाभाष्यानकदुंदुभिम्॥ सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥३४॥ कर्मणा कर्मनिर्हार एष साधुनिरूपितः॥ यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ॥३५॥ चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा॥ दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥३६॥ अयं स्वस्त्ययनः पंथा द्विजातेर्गृहमेधिनः॥ यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥३७॥ वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम्॥ आत्मलोकैषणां देव कालेन विसृजेद्बुधः ॥३८॥ ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम्॥ ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो ॥३९॥ यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन्पतेत्॥ त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते ॥४०॥ यज्ञैर्देवर्णमुन्मुच्य निरृणोऽशरणो भव॥ वसुदेव भवान्नूनं भक्त्या परमया हरिम्॥ जगतामीश्वरं प्रार्चः स यद्वां पुत्रतां गतः ॥४१॥

((क्षितिवित्तफलभूतैर्यज्ञैर्दानैश्च वित्तैषणां वित्तेच्छां विसृजेत् गृहैर्गृहोचितैर्भोगैर्दारसुतैषणां विसृजेत् तदनुभवेनैव तदौत्सुक्यनिवृत्तेः देहमृते आत्मनः स्वर्गादिलोकैषणां च कालेन स्पानुसंधानेन विसृजेत् देवहे वसुदेव यद्वा देवकालेन देवानामपि मृत्युना मृत्युहेतुभूतेनेत्यर्थः ॥३८॥ अत्राचारं प्रमाणयति ग्राम इति किंच ऋणैरिति तथा च श्रुतिः जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इत्यादिना तान्यनिस्तीर्य तेषामृणान्यनपाकृत्य तथा च मनुः ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः इत्यादि ॥३९॥ निर्ऋणः निर्मुक्तर्णः अशरणो भव गृहात्प्रव्रज ॥४०॥ किंच अविशुद्धचित्तानामयं क्रमः त्वं तु कृतार्थ एवेत्याहुः वसुदेवेति भवान्नूनं निश्चितं परमया प्रेमलक्षणया भक्त्या हरिं प्रार्चः अर्चि

॥४२॥४३॥४४॥ आलिप्ताः कुंकुमादिभिः वस्तुपाणयः गृहीतार्हणहस्ताः ॥४५॥४६॥ अक्तं नेत्रयोरंजनेन अभ्यक्तं सर्वांगेषु नवनीतेन ॥४७॥ ताभिः पत्नीभिः सहितो दीक्षितो विरेजे ॥४८॥४९॥ जीवेशौ सर्वजीवानामीशौ ॥५०॥ अनुयज्ञं प्रतियज्ञं आम्नातसर्वांगाः प्राकृताः ज्योतिष्टोमदर्शपूर्णमासादयः तेभ्योऽन्ये द्रव्यलिंगादिभिरतिदेशप्राप्तांगाः वैकृताः सौरसौत्रामण्यादयः तैः सर्वैर्द्रव्यपुरोडाशादिज्ञानं मंत्रः क्रियाकर्म तेषामीश्वरम् ॥५१॥५२॥ असस्नुः स्नानं चक्रुः



श्रीशुक उवाच ॥ इति तद्वचनं श्रुत्वा वसुदेवो महामनाः ॥ तानृषीनृत्विजो वव्रे मूर्ध्नानम्य प्रसाद्य च ॥४२॥ त एनमृषयो राजन्वृता धर्मेण धार्मिकम् ॥ तस्मिन्नयाजयन्क्षेत्रे मखैरुत्तमकल्पकैः ॥४३॥ तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः ॥ स्नाताः सुवाससो राजन्राजानः सुष्ठ्वलंकृताः ॥४४॥ तन्महिष्यश्च मुदिता निष्ककंठ्यः सुवाससः ॥ दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥४५॥ नेदुर्मृदंगपटहशंखभेर्यानकादयः ॥ ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः ॥ जगुः सुकंठ्यो गंधर्व्यः संगीतं सहभर्तृकाः ॥४६॥ तमभ्यषिंचन्विधिवदक्तमभ्यक्तमृत्विजः ॥ पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥४७॥ ताभिर्दुकूलवलयैर्हारनूपुरकुंडलैः ॥ स्वलंकृताभिर्विबभौ दीक्षितोऽजिनसंवृतः ॥४८॥ तस्यर्त्विजो महाराजन्रत्नकौशेयवाससः ॥ ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥४९॥ तदा रामश्च कृष्णश्च स्वैः स्वैर्बंधुभिरन्वितौ ॥ रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥५०॥ ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः ॥ प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥५१॥ अथर्त्विग्भ्योऽददात्काले यथाम्नातं स दक्षिणाः ॥ स्वलंकृतेभ्यो विप्रेभ्यो गोभूकन्या महाधनाः ॥५२॥ पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः ॥ सस्नू रामह्रदे विप्रा यजमानपुरःसराः ॥५३॥ स्नातोऽलंकारवासांसि वंदिभ्योऽदात्तथा स्त्रियः ॥ ततः स्वलंकृतो वर्णानाश्वभ्योऽन्नेन पूजयत् ॥५४॥ बंधून्सदारान्ससुतान्पारिबर्हेण भूयसा ॥ विदर्भकोसलकुरून्काशिकेकयसृंजयान् ॥५५॥ सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणान् ॥ श्रीनिकेतमनुज्ञाप्य शंसंतः प्रययुः क्रतुम् ॥५६॥ धृतराष्ट्रोऽनुजः पार्था भीष्मो द्रोणः पृथा यमौ ॥ नारदो भगवान्व्यासः सुहृत्संबंधिबांधवाः ॥५७॥ ७ ॥ ७ ॥ ७ ॥

॥५३॥ आश्वभ्यः श्वपाकपर्यंतान् अन्नेन पूजयत् अपूजयत् ॥५४॥ बंधूनादीनृत्विगादींश्चारणांतान् पारिबर्हेण श्रीनिकेतं दानेन चापूजयत् ते च सर्वे प्रययुः ॥५५॥५६॥ प्रयाणकाले विदुरादीन्प्रत्याह धृतराष्ट्र इति द्वाभ्याम् अनुजो विदुरः पार्था युधिष्ठिरभीमार्जुनाः यमौ नकुलसहदेवौ ॥५७॥ ७ ॥

सौहृदेनाक्लिन्नानि चेतांसि येषां ते॥५८।५९॥ मनोरथो यद्विषयः तमेव महार्णवं॥६०॥ शूराणां बलेन योगिनां ज्ञानेनापीत्यर्थः॥६१॥ तत्कुतस्तत्राह अ-
स्मास्विति कृता ईहा येषु कृतमुपकारमजानत्सु सत्सु मैत्री अवज्ञा प्रतिकल्याः अनुपमा मैत्री यमर्पिता अफलाः अपि प्रत्युपकारशून्या अपि कर्हिचित् यद्यस्मान्
निवर्तेत तस्मादीश्वरकृतः पाशोऽयं भवतामिति गम्यत इत्यर्थः॥६२॥ अफलत्वमेवाह प्रागिति हे भ्रातः अकल्पात् असमर्थत्वात् वः कुशलं प्रियं न हि

बंधून्परिष्वज्य यदून्सौहृदाक्लिन्नचेतसः॥ ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः॥५८॥ नंदस्तु सह गोपालैर्बृहत्या
पूजयार्चितः॥ कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बंधुवत्सलः॥५९॥ वसुदेवोंऽजसोत्तीर्य मनोरथमहार्णवम्॥ सुहृद्वृतः प्री-
तमना नंदमाह करे स्पृशन्॥६०॥ श्रीवसुदेव उवाच॥ भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः॥ तं दुस्त्यजमहं मन्ये शू-
राणामपि योगिनाम्॥६१॥ अस्मास्वप्रतिकल्पेयं यत्कृताज्ञेषु सत्तमैः॥ मैत्र्यर्पिताऽफला वाऽपि न निवर्तेत कर्हिचित्॥६२॥
प्रागकल्पाच्च कुशलं भ्रातर्वो नाचरामहि॥ अधुना श्रीमदांधाक्षा न पश्यामः पुरः सतः॥६३॥ मा राज्यश्रीरभूत्पुंसः श्रेय-
स्कामस्य मानद॥ स्वजनानुत बंधून्वा न पश्यति ययांधदृक्॥६४॥ श्रीशुक उवाच॥ एवं सौहृदशैथिल्यचित्त आनकदुंदु-
भिः॥ रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः॥६५॥ नंदस्तु सख्युः प्रियकृत्प्रेम्णा गोविंदरामयोः॥ अद्य श्व इति मासांस्त्री-
न्यदुभिर्मानितोऽवसत्॥६६॥ ततः कामैः पूर्यमाणः सव्रजः सहबांधवः॥ परार्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः॥६७॥
वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः॥ दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ॥६८॥ नंदो गोपाश्च गोप्यश्च गो-
विंदचरणांबुजे॥ मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः॥६९॥ बंधुषु प्रतियातेषु वृष्णयः कृष्णदेवताः॥ वीक्ष्य प्रावृ-
षमासन्नां ययुर्द्वारवतीं पुनः॥७०॥ जनेभ्यः कथयांचक्रुर्यदुदेवमहोत्सवं॥ यदासीत्तीर्थयात्रायां सुहृत्संदर्शनादिकम्॥७१॥ इति श्रीभागवते महापु॰ दशम॰ तीर्थयात्रानुवर्णनं नाम चतुरशीतितमोऽध्यायः॥८४॥ ७ ॥

आचरामन कृतवंतो वयं श्रीमदेनांधान्यक्षीणि येषां ते॥६३॥ राज्यश्रीर्माभूत् हे मानद सोऽडागमः॥६४।६५॥ अद्य श्व इति प्रातर्निर्गमे अद्यैवापराह्णे गम्य-
तामिति अपराह्णनिर्गमे श्वो गम्यतामिति पुनः पुनरेवं मानितः॥६६।६७॥ यापितः महता सैन्येन प्रस्थापितः॥६८।६९।७०॥ यदुदेवस्य वसुदेवस्य
महोत्सवं यज्ञादिलक्षणं सुहृत्संदर्शनादिकं चेति॥७१॥ इति श्रीभागवते महापुराणे दशमस्कंधे टीकायां चतुरशीतितमोऽध्यायः॥८४॥ ७ ॥

पंचाशीतितमे रामकृष्णौ संप्रार्थितौ मुनौ। पित्रे ज्ञानमयो [illegible] मंदितोऽभ्यौ कुरुक्षेत्रयात्रायां सुहृदो बहून्। तत्त्वज्ञानं ततः पित्रोरदि
शन्सुतसूनुभिः॥२॥ धाम प्रभावः तत्सूचकं जातविश्रंभः उत्पन्नविश्वासः परिभाष्य संबोध्य॥२॥ अस्य विश्वस्य यत्साक्षात्स्वरूपभूतं कारणं प्रधानपुरुषौ
नाम परौ तयोरपि कारणत्वेनेश्वरौ च साक्षाद्युवामिति जाने॥३॥ नन्विदं विश्वमनेकैः कारकैर्जायमानं कुतः प्रधानपुरुषात्मकं कुतस्तरां आवयोस्तत्का
रणत्वेनेश्वरत्वं तत्राह यत्रेति यत्राधिकरणे येन कर्त्रा करणेन च यतः उपादानात् यस्य संबंधेन षष्ठ्यर्थस्याऽकारकत्वेऽपि निमित्ततोक्ता यस्मै संप्रदानाय यद्य
दिति प्रयोज्यकर्तृकर्मकारके दर्शिते न तु तयोर्नास्ति भेदः यथोक्तं करोतिक्रियमाणे न न कश्चित्कर्मणा विना भवत्यर्थस्य कर्ता च करोतेः कर्म जायते तथा क
रोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यत इति च सत्यं तथाप्यवस्थाभेदेन भेदो विवक्षितः दृश्यते चावस्थाभेदः तंडुला
नोदनं पचति मृदं घटं करोतीति तिन दैवं सप्तविभक्त्यर्था दर्शिताः यथेति पदेति च क्रियाविशेषणभूतानामन्येषां चाव्ययानामर्थाः स्यादिति क्रियापदार्थोपलक्षणं
एवं सर्वं प्रपंचमनूद्य तत्कारणस्य भगवद्रूपतां विधत्ते इदं साक्षादिति प्रधानं भोग्यं पुरुषो भोक्ता तयोरीश्वरो भगवांस्त्वमेव साक्षादिति तयोरैक्यमभिप्रेत्यैक

श्रीशुक उवाच॥ अथैकदात्मजौ प्राप्तौ कृतपादाभिवंदनौ॥ वसुदेवोऽभिनंद्याह प्रीत्या संकर्षणाच्युतौ॥१॥ मुनीनां स वचः
श्रुत्वा पुत्रयोर्धामसूचकम्॥ तद्वीर्य्यैर्जातविश्रंभः परिभाष्याभ्यभाषत॥२॥ वसुदेव उवाच॥ कृष्ण कृष्ण महायोगिन्संकर्षण
सनातन॥ जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ॥३॥ यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा॥ स्यादिदं भगवान्साक्षात्प्र
धानपुरुषेश्वरः॥४॥ एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज॥ आत्मनाऽनुप्रविश्यात्मन्प्राणो जीवो बिभर्ष्यजः॥५॥ प्राणा
दीनां विश्वसृजां शक्तयो याः परस्य ताः॥ पारतंत्र्याद्वैसादृश्याद्द्वयोश्चेष्टैव चेष्टताम्॥६॥ (१ वचनम्॥४॥ किंच धारणपोषणकर्तापि त्व
मेवेत्याह एतदिति हि आत्मन् प्राणः क्रियाशक्तिः जीवो ज्ञानशक्तिश्च सन् त्वमेव बिभर्षि॥५॥ ननु प्राणादीनां विचित्रशक्तीनां कारणत्वावगमात् कथं परमे
श्वरस्यैव कारणत्वेन सर्वात्मकत्वमुच्यते तद्व्याशंक्य प्राणादिशक्तयोऽपि तस्यैवेत्याह प्राणादीनामिति प्राणः सूत्रं तद्दादीनां विश्वसृजां विश्वकारणा
नां याः शक्तयस्ताः परस्य परमकारणस्येश्वरस्यैव कुतः पारतंत्र्यात् यथा वेधशक्तिर्न बाणस्य अपि तु पुरुषस्य तद्वदित्यर्थः ननु भगवतः प्राणादिवर्गस्य
च स्वातंत्र्यमेव किं न स्यात् अत आह वैसादृश्यात् द्वयोरिति चेतनाचेतनत्वेन विसदृशत्वात् द्वयोरचेतनप्राणादिवर्गस्य चेतनपारतंत्र्यमेव युक्तमित्यर्थः
यद्वा प्राणादिषु द्वयोर्द्वयोरेव तावद्विसदृशत्वविरुद्धक्रियाकारित्वात् किंपुनर्बहूनां तस्मादेकेन सर्वज्ञेन सर्वशक्तिनाधिष्ठितानामेव विशिष्टकार्यारं
भकत्वं युक्तं न स्वतंत्राणामिति तथा चोक्तं परैः संहताभावाभूतेंद्रियमनोगुणाः यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम तदा संहत्य चान्योऽन्यं भगवच्छक्ति
चोदिताः सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यदः इति तथा नानात्वात् स्वक्रियानीशाः प्रोक्ताः प्राजल्ययो विभुमित्यादि ननु प्राणादीनां क्रियाकारित्वं शक्त्यभावे कुतः
स्यादित आह चेष्टैव चेष्टतामिति चेष्टमानानामेषां चेष्टैव न तु शक्तिः यथा वायोः शक्त्या तृणादीनां चलनं यथा पुरुषस्य शक्त्या शराणां वेग इति॥६॥ ७॥

पारतंत्र्यमेव प्रपंचयति कांतिरिति पंचभिः चन्द्रस्य कांतिः अग्नेस्तेजः अर्कस्य प्रभा ऋक्षविद्युतां सत्ता स्फुरणमात्रेण सत्त्वं अर्थतो वस्तुतो भवान् यथा च श्रुतिः न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति स्मृतिश्च यदादित्यगतं तेजो जगद्भासयतेऽखिलं यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति भूमेर्वृत्तिः प्राणिनामाधारत्वेन वर्तनं गंधश्च भवान् तवैव शक्तिरित्यर्थः ॥७॥ किंच हे देव अपां तर्पणं तृप्तिजनकत्वं प्राणनं जीवनहेतुत्वं ता आपश्च तासां रसश्च त्वमेव किंच वायोरोजः सह आदि तवैव शक्तिः ॥८॥ दिशामुपाधिकृताकाशप्रदेशानामवकाशो दिशश्च त्वं खं सामान्याकाशः तदाश्रयः स्फोटश्च शब्दतन्मात्रं परावस्था वागित्यर्थः नादः पश्यन्ती ओंकारः मध्यमा वर्णश्च आकृतीनां पदार्थानां पृथक्कृतिः पृथक्करणमभिधानं यस्मात्तस्य द्वर्णपदात्मिका वैखरी च त्वमित्यर्थः ॥९॥ इन्द्रियाणामिन्द्रियं विषयप्रकाशनशक्तिः ॥

कान्तिस्तेजः प्रभा सत्ता चंद्राग्न्यर्कर्क्षविद्युताम् ॥ यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गंधोऽर्थतो भवान् ॥७॥ तर्पणं प्राणनमपां देव त्वं ताश्च तद्रसः ॥ ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥८॥ दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ॥ नादो वर्णस्त्वमोंकार आकृतीनां पृथक्कृतिः ॥९॥ इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहः ॥ अवबोधो भवान्बुद्धेर्जीवस्यानुस्मृतिः सती ॥१०॥ भूतानामसि भूतादिरिंद्रियाणां च तैजसः ॥ वैकारिको विकल्पानां प्रधानमनुशायिनां ॥११॥ नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् ॥ यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥१२॥ सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः ॥ त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥१३॥ तस्मान्न संत्यमी भावा यर्हि त्वय्येव कल्पिताः ॥ त्वं चामीषु विकारेषु ह्यन्यदा व्यावहारिकः ॥१४॥

॥ देवाश्चेन्द्रियाधिष्ठातारः तदनुग्रहस्तेषामधिष्ठानशक्तिश्च त्वं अवबोधोऽध्यवसायशक्तिः अनुस्मृतिः अनुसंधानशक्तिः ॥१०॥ भूतानां कारणं भूतादिस्तामसोऽहंकारस्त्वमसि इन्द्रियाणां कारणं तैजसो राजसोऽहंकारस्त्वं विविधमधिदैवाध्यात्माधिभूतभेदेन विकल्प्यत इति विकल्पा देवास्तेषां कारणं वैकारिकः सात्त्विकोऽहंकारश्च त्वं अनुशायिनां जीवानां संसारकारणं प्रधानं त्वं ॥११॥ अपि च नश्वरेष्वनाशनशीलेषु देहादिषु भावेषु यदनश्वरमवशिष्यमाणं रूपं तत्त्वमसि द्रव्याणां विकारेषु मृत्सुवर्णादिकार्येषु घटकुंडलादिषु नश्वरेषु च द्रव्यमात्रं मृत्सुवर्णादिमात्रमनश्वरं यथा तद्वत् ॥१२॥ ननु त्रिगुणात्मककार्यरूपोऽपि त्वमित्युक्तत्वात् कथमनश्वरत्वं तत्राह सत्त्वमिति तद्वृत्तयस्तत्परिणामाश्च महदादयः अद्धा साक्षात् त्वयि परे ब्रह्मणि कल्पिताः ॥१३॥ तस्मान्न संतीति ननु सतां कथं प्रतीतिरत आह यर्हीति यदा विकल्पितास्तदैव

णतपाः तु गतः अन्यदा तु अव्यावहारिकोः विकल्पकः त्वमेवावशिष्यस इत्यर्थः ।१४। एवं च त्वत्स्वरूपाज्ञाननिबंधनश्च संसार इत्याह गुणप्रवाह इति सूक्ष्मां निष्प्रपंचां गतिम् अबुधाः अविद्वांसः अबुद्धेति वा पाठः अंतः अबोधेन देहाभिमानेन कृतैः कर्मभिः संसरंतीति ।१५। एवं तयोस्तत्त्वं निरूप्य तद्माप्त्या शोचति यदृच्छयेति नृतां मनुष्यतां सुकल्पां पटुतरेंद्रियाम् ।१६। अहो किमिति ममत्तोऽसि त्वया बहुभिः पाशैर्निबद्धत्वादित्याह असावहमिति देहे अस्य देहस्यान्वयादिषु पुत्रादिषु च ममैवैत इति ।१७। अहो त्वं तु तत्र योरावयोः किमिदमारोप्यसे अत आह युवामिति भूभारक्षत्रक्षपणार्थं अवतीर्णौ तथाह निश्चितं आत्थ कथयसि ।१८। तत्तस्मादरणं शरणमापन्नानां संसृतिभयमपहंतीति तथा तत् ननु त्वमतिसुखी कथं

गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः ॥ गतिं सूक्ष्मामबोधेन संसरंतीह कर्मभिः ॥१५॥ यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम् ॥ स्वार्थे प्रमत्तस्य वयो गतं त्वन्मायये श्वर ।१६। असावहं ममैवैते देहे चास्यान्वयादिषु ॥ स्नेहपाशैर्निबध्नाति भवान्सर्वमिदं जगत् ।१७। युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ ॥ भूभारक्षत्रक्षपण अवतीर्णौ तथात्थ ह ।१८। तत्ते गतोऽस्म्यरणमद्य पदारविंदमापन्नसंसृतिभयापहमार्तबंधो ॥ एतावतालमलमिंद्रियलालसेन मर्त्यात्मदृक्त्वयि परे यदपत्यबुद्धिः ।१९। सूतीगृहे ननु जगाद भवानजो नौ संजज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ॥ नानातनूर्गगनवद्विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम् ॥२०॥ श्रीशुक उवाच ॥ आकर्ण्येत्थं पितुर्वाक्यं भगवान्सात्वतर्षभः ॥ प्रत्याह प्रश्रयानम्रः प्रहसन् श्लक्ष्णया गिरा ।२१। श्रीभगवानुवाच ॥ वचो वः समवेतार्थं तातैतदुपमन्महे ॥ यन्नः पुत्रान्समुद्दिश्य तत्त्वग्राम उदाहृतः ।२२। अहं यूयमसावार्य इमे च द्वारकौकसः ॥ सर्वेऽप्येवं यदुश्रेष्ठ विमृग्याः सचराचरम् ।२३। आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः ॥

॥ किं निर्विद्यसे अत आह एतावतेति इंद्रियलालसेन इंद्रियार्थतृष्णाप्रायेण इंद्रियलालसेन मर्त्ये शरीरे आत्मदृक् आत्मबुद्धिर्यस्य त्वयि च परे परमेश्वरे अपत्यबुद्धिरस्मि तेनालमलं पर्याप्तमिति ।१९। ननु कुत एतत् अहं परमेश्वर इति तत्राह सूतीगृहे इति नौ आवयोः अनुयुगमिति युगे यदा सुतपाः पृश्निरिति युग्मं यदा कश्यपोऽदितिश्चेति युग्मं अधुना वसुदेवो देवकीति च युग्मम् एवं हि मतियुग्मे अज एवाहं संजज्ञे अवतीर्ण इति भवान् ननु जगाद ननु अन्यो सौ चतुर्भुजो देव इति तत्राह नानातनूरिति गगनवत् असंग एव त्वं भूम्नः सर्वगतस्य विभूतिरूपां मायां को वेदेति ।२०। उपमन्महे उपमन्यामहे समुद्दिश्य विषयीकृत्य तत्त्वग्रामस्तत्त्वसमूह उदाहृतः सम्यङ्निरूपितः ।२२। इममेव दर्शयन् सर्वत्र विधत्स्वेत्याह अहमिति एवं विमृग्याः ब्रह्मत्वेनैवान्वेषणीयाः किं च सचराचरं जगदपि ।२३। ननु विकारत्वेनात्मक्नोऽत्र त्वमिति चेन्न ब्रह्मण एवोपाधिधर्मैर्बहुधा प्रतीतेरित्याह

भ्यां आत्मा हीति यथा खादिभूतानि तत्कृतेषु घटादिष्वाविस्तिरोभावादि यांति एवमसावात्मापि आत्मसृष्टैर्गुणैः कृतात तत्कृतेषु देहेषु बहुधा ईयते
पुनश्च यथाशयं यथोपाधि आविर्भावतिरोभावादि [illegible]  [illegible] आत्मयं ज्योतिर्दृश्यत्वेन नित्योऽनित्यत्वेन अन्यः अन
न्यत्वेन निर्गुणः सगुणत्वेनेत्यादि बहुधात्वं प्रपंचनीयम्॥२४।२५।२६॥सुविस्मितासती।२७।समाभाव्य संबोध्य।२८।२९।भूमेर्भारायमाणानां रा

आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते।२४।खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम्॥आविस्तिरोऽल्पभूर्य्येको ना
नात्वयास्यसावपि।२५।श्रीशुकउवाच॥एवं भगवता राजन् वसुदेवउदाहृतः॥श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना
अभूत्।२६।अथ तत्र कुरुश्रेष्ठ देवकी सर्व्वदेवता॥श्रुत्वानीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता।२७।कृष्णरामौ समाश्रा
व्य पुत्रान् कंसविहिंसितान्॥स्मरंती कृपणं प्राह वैक्लव्यादश्रुलोचना।२८।श्रीदेवक्युवाच॥रामरामाप्रमेयात्मन्
कृष्ण योगेश्वरेश्वर॥वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ॥२९॥कालविध्वस्तसत्वानां राज्ञामुच्छास्त्रवर्तिनाम्
॥भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे।३०।यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः॥भवंति किल विश्वात्म
न् तत्वाऽद्याहं गतिं गता॥३१॥चिरान्मृतसुतादाने गुरुणा किल चोदितौ॥आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षि
णाम्॥३२॥तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ॥भोजराजहतान्पुत्रान्कामये द्रष्टुमाहृतान्॥३३॥ऋषिरुवाच
।एवं संचोदितौ मात्रा रामः कृष्णश्च भारत॥सुतलं संविविशतुर्योगमायामुपाश्रितौ।३४॥तस्मिन्प्रविष्टावुपलभ्य
दैत्यराट् विश्वात्मदैवं सुतरां तथात्मनः॥तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः।३५।तयोः समा
नीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः॥दधार पादाववनिज्य तज्जलं सवृंद आब्रह्म पुनद्यदंबु ह।३६।स
मर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः॥तांबूल दीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन^ [margin: नन्यवित्रपदृनीतेतौ।३६।३७॥]

ज्ञामर्थे तेषां निधनार्थं मे ममपि किलावतीर्णौ।३०।हे आद्य यस्यांशः पुरुषस्तस्यांशो माया तस्या अंशा गुणाः तेषां भागेन परमाणुमात्रलेशेन विश्वो
त्पत्त्यादयो भवंति तं त्वां त्वां गतिं शरणं गतास्मि।३१।आनिन्यथुः आनीतवंतौ पितृस्थानात् यमसदनात्॥३२।३३।३४।दैत्यराड्बलिः कथंभूतो वि
श्वस्यात्मभूतं दैवं सान्वयः सपरिवारः।३५।सवृंदः सपरिजनः कथंभूतौ पादाववनिज्य यदंबु पयोरवनेजनोदकं आब्रह्म ब्रह्माणमभिव्याप्य जगत्

इंद्रसेनो बलिः प्रेमविभिन्नया प्रेमार्द्रया धिया विभ्रद्धारयन्॥३८॥ अनंताय शेषाय बृहते फणैकदेशे विश्वधारणात् बृहते तस्मै कृष्णाय च वेधसे जगद्विधात्रे सांख्ययोगवितानायेत्यादि पदत्रयमैक्यविवक्षया॥३९॥ योगेश्वराणामपि दुर्दर्शौ युवामस्माभिर्दृष्टाविति तत्रातिचित्रमित्याह दर्शनमिति दुष्प्रापमपि युष्मत्कृपया केषांचित् दुर्लभं सुलभमपि भवति तदाह रजस्तमःस्वभावानामिति नौ दर्शनं प्राप्तौ॥४०॥ अहो विद्विषो वयं सात्त्विकभक्तेभ्योऽपि सभाग्या इत्याह दैत्येत्यादि त्रिभिः॥४१॥४२॥ उद्बद्धवैरेण या भक्तिस्तया केचनेति चैद्यादयः कामतो भक्त्या गोप्यादयो यथा सन्निकृष्टास्त्वदात्मतां प्राप्ताः तथा च सत्त्वसंरब्धाः सत्त्वाविष्टा अपि सुरादयो न सन्निकृष्टा इति॥४३॥ ननु सात्त्विकेभ्योऽपि राजसादयः सन्निकृष्टा इति चित्रं तत्राह इदमित्थमिति

स इंद्रसेनो भगवत्पदांबुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया॥ उवाच हानंदजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम्॥३८॥ बलिरुवाच॥ नमोऽनंताय बृहते नमः कृष्णाय वेधसे॥ सांख्ययोगवितानाय ब्रह्मणे परमात्मने॥३९॥ दर्शनं वां हि भूतानां दुष्प्रापं चातिदुर्लभम्॥ रजस्तमःस्वभावानां यन्नः प्राप्तौ यदृच्छया॥४०॥ दैत्यदानवगंधर्वाः सिद्धविद्याध्रचारणाः॥ यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः॥४१॥ विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि॥ नित्यं निबद्धवैरास्ते वयं चान्ये च तादृशाः॥४२॥ केचनोद्बद्धवैरेण भक्त्या केचन कामतः॥ न तथा सत्त्वसंरब्धाः सन्निकृष्टाः सुरादयः॥४३॥ इदमित्थमिति प्रायस्तव योगेश्वरेश्वर॥ न विदंत्यपि योगेशा योगमायां कुतो वयम्॥४४॥ तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविंदधिषणान्यगृहांधकूपात्॥ निष्क्रम्य विश्वशरणांघ्र्युपलब्धवृत्तिः शांतो यथैक उत सर्वसखैश्चरामि॥४५॥ शाध्यस्मानीशितव्येश निष्पापान्कुरु नः प्रभो॥ पुमान्यच्छ्रद्धयातिष्ठंश्चोदनाया विमुच्यते॥४६॥ श्रीभगवानुवाच॥ आसन्मरीचेः षट् पुत्रा ऊर्णायां प्रथमेंऽतरे॥

इदमिति स्वरूपतः इत्थमिति विशेषतश्च॥४४॥ तदेवं यद्यपि वैरभावेनापि त्वत्प्राप्तिर्भवेत्तथापि मां सात्त्विकं कुर्विति प्रार्थयते तन्न इति तत्तस्मान्नः प्रसीद यथा निरपेक्षैराप्तकामैरपि विमृग्यं युष्मत्पादारविंदं तद्विधिषणमाश्रयः तस्मादन्यद्गृहं तदेवांधकूपस्तस्मान्निष्क्रम्य निर्गत्य विश्वस्य शरणाः रक्षितारो वृक्षास्तेषामंघ्रिमूलेषु स्वत एव गलितैः फलादिभिरुपलब्धा प्राप्ता वृत्तिर्जीविका येन सोऽहं शांतः सन् एक एव चरामि उत अथवा सर्वेषां सखायो महांतः तैः सह यथा चरामीति॥४५॥ कथमल्पपुण्यानामेवंभावः संभवतीति चेत्तर्हि येन भवेत्तथास्माननुशिक्षयेत्याह शाधीति हे प्रभो ईशितव्याः सर्वे जीवास्तेषामीश यत्तवानुशासनं आतिष्ठन् आश्रयन् चोदनाया विधिनिषेधलक्षणायाः सकाशाद्विमुच्यते न खलु त्वद्भक्तो विधिकिंकरः स्यादिति भावः॥४६॥ तदुक्तं सर्वमनुमोद्य स्वागमनकारणं सप्रपंचं कथयति आसन्निति

ऊर्णायां भार्यायां प्रथमेंतरे स्वायंभुवमन्वंतरे ते देवाः सुताः [illegible] उद्यतं कं प्रजापतिं जहसुः उपहसितवंतः ॥४७॥
तेनावद्यकर्मणा पापेन आसुरीं योनिमगन्गमन् अधुना तत्क्षणमेव हिरण्यकशिपोर्जाताः इत्यर्थः ते च योगमायया तेनानीताः संतः ॥४८॥ देव
क्या उदरे जाताः हे राजन् बलेन ते च कंसेन विहिंसिताः सा च तानात्मजान्मत्वा शोचति ते च मे तवांतिके ध्यासते ॥४९॥ लोकं देवलोकं ॥५०॥ स्मरोद्गीथः
स्मरसहितः उद्गीथः सङ्गतिं मोक्षं स्मरस्यैव पूर्वकीर्तिमानिति नाम अतः कीर्तिमंतं प्रथमजं कंसायानकदुंदुभिरर्प्पयामासेत्युक्तम् ॥५१॥ अपच्छतां

देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् ॥४७॥ तेनासुरीमगन्योनिमधुनावद्यकर्मणा ॥ हिरण्यकशिपोर्जाता नीता
स्ते योगमायया ॥४८॥ देवक्या उदरे जाता राजन्कंसविहिंसिताः ॥ सा तान्शोचत्यात्मजान्स्वांस्त इमे ध्यासतेंतिके ॥४९
॥ इत एतान्प्रणेष्यामो मातृशोकापनुत्तये ॥ ततः शापाद्विनिर्मुक्ता लोकं यास्यंति विज्वराः ॥५०॥ स्मरोद्गीथः परिष्वंगः पतं
गः क्षुद्रभृद्घृणी ॥ षडिमे मत्प्रसादेन पुनर्यास्यंति सद्गतिम् ॥५१॥ इत्युक्त्वा तान्समादाय इंद्रसेनेन पूजितौ ॥ पुनर्द्वारवती
मेत्य मातुः पुत्रानयच्छताम् ॥५२॥ तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी ॥ परिष्वज्यांकमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्ण
शः ॥५३॥ अपाययत्स्तनं प्रीता सुतस्पर्शपरिस्नुता ॥ मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥५४॥ पीत्वामृतं पयस्तस्याः
पीतशेषं गदाभृतः ॥ नारायणांगसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥५५॥ ते नमस्कृत्य गोविंदं देवकीं पितरं बलम् ॥ मिषतां सर्व
भूतानां ययुर्धाम दिवौकसाम् ॥५६॥ तं दृष्ट्वा देवकी देवी मृतागमननिर्गमम् ॥ मेने सुविस्मिता मायां कृष्णस्य रचितां नृप
॥५७॥ एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः ॥ वीर्याण्यनंतवीर्यस्य संत्यनंतानि भारत ॥५८॥ सूत उवाच ॥ य इदमनु
शृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः ॥ जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति

अर्प्पयामासतुः ॥५२॥५३॥५४॥ अमृतत्वे हेतुः गदाभृतः पीतशेषमिति नारायणांगसंस्पर्शेन प्रतिलब्धं देवा वयमित्यात्मदर्शनं यैस्ते ॥५५॥ धाम देवलो
कम् ॥५६॥ मृतानामागमनं निर्गमनं च श्रीकृष्णस्य मायां मेने तेनैवापत्यादिरूपेण रचिताम् ॥५७॥५८॥ अमृतकीर्तेर्यस्य तस्य व्यासपुत्रैरिति बहुवचनं
पूजार्थं जगतां अघं भिनत्ति तथा न तत् अलं निःशेषं यथा भवति तथा न कृष्णचक्रादिवदिति न देवं मोक्षहेतुत्वं पापक्षयहेतुत्वं चोक्तं तद्भक्तानां तु सत्कर्णपू
रं परमसुखावहं कर्णाभरणमिति स्वयंसुखरूपतामाह किंच भगवति कृतमावेशितं चित्तं येन स तथाभूत्वा तस्य क्षेमधाम कालादिभयरहितं लो

॥इतिदशमेटीकायांपंचाशीतितमोऽध्यायः॥८५॥षडशीतितमेऽभात्सुभद्रामर्जुनोहरत्॥गत्वाचमिथिलांकृष्णोनृपविप्रावनंदयत्।१।पित्रोःस्वज्ञानमादिश्यसुभद्रांफाल्गुनायच।जगाममिथिलांकृष्णःस्वभक्तप्रियकृत्ततः।२।देवक्यामृतपुत्रलाभवत्अर्जुनस्यसुभद्रालाभोऽपिरामप्रातिकूल्यात्दुर्घटइतिमन्यमानःप्रसंगात्पृच्छतिब्रह्मन्निति।१।२।कथमशृणोत्दुर्योधनायेतिअपरेवसुदेवादयोनदास्यंतीतितल्लिप्सुःतस्यांमात्



इतिश्रीभागवतेम०दशम०मृतात्मजानयनंनामपंचाशीतितमोऽध्यायः॥८५॥राजोवाच॥ब्रह्मन्वेदितुमिच्छामःस्वसारंरामकृष्णयोः।यथोपयेमेविजयोयाममासीत्पितामही।१।श्रीशुकउवाच॥अर्जुनस्तीर्थयात्रायांपर्यटन्नवनींप्रभुः॥गतःप्रभासमशृणोन्मातुलेयींसआत्मनः।२।दुर्योधनायरामस्तांदास्यतीतिनचापरे॥तल्लिप्सुःसयतिर्भूत्वात्रिदंडीद्वारकामगात्॥३॥तत्रवैवार्षिकान्मासानवात्सीत्स्वार्थसाधकः॥पौरैःसभाजितोऽभीक्ष्णंरामेणाजानताचसः॥४॥एकदागृहमानीयआतिथ्येननिमंत्र्यतम्॥श्रद्धयोपहृतंभैक्ष्यंबलेनबुभुजेकिल।५।सोऽपश्यत्तत्रमहतींकन्यांवीरमनोहराम्॥प्रीत्युत्फुल्लेक्षणस्तस्यांभावक्षुब्धंमनोदधे।६।सापितंचकमेवीक्ष्यनारीणांहृदयंगमम्॥हसंतीव्रीडितापांगीतन्न्यस्तहृदयेक्षणा।७।तांपरंसमनुध्यायन्नंतरंप्रेप्सुरर्जुनः॥नलेभेशंभ्रमच्चित्तःकामेनातिबलीयसा॥८॥महत्यांदेवयात्रायांरथस्थांदुर्गनिर्गताम्॥जहारानुमतःपित्रोःकृष्णस्यचमहारथः।९।रथस्थोधनुरादायशूरांश्चारुंधतोभटान्॥विद्राव्यक्रोशतांस्वानांस्वभागंमृगराडिव॥१०॥तच्छ्रुत्वाक्षुभितोरामःपर्वणीवमहार्णवः॥गृहीतपादःकृष्णेनसुहृद्भिश्चान्वशाम्यत॥११॥प्राहिणोत्पारिबर्हाणिवरवध्वोर्मुदाबलः॥महाधनोपस्करेभरथाश्वनरयोषितः।१२।श्रीशुक०॥कृष्णस्यासीद्द्विजश्रेष्ठःश्रुतदेवइतिश्रुतः॥कृष्णैकभक्त्यापूर्णार्थःशांतःकविरलंपटः॥१३॥सउवासविदेहेषुमिथिलायांगृहाश्रमी॥अनीहयागताहार्यनिर्वर्तितनिजक्रियः॥१४॥

((लेप्सांलिप्सुःरामंवंचयितुंपूज्यतमंत्रिदंडिवेषंविधायगतइत्याहसयतिरिति।४।स्वार्थसाधकःकन्यांप्रेप्सुः।४।तमातिथ्येननिजंगृहमानीयबलेनपच्छ्रद्धयोपनीतंपरिविष्टंभैक्ष्यंकिलार्जुनोबुभुजइत्यन्वयः।५।भावेनस्मराभिप्रायेणक्षुभितंमनोदधे॥६॥व्रीडितापांगीसव्रीडकटाक्षातस्मिन्नेवन्यस्तंहृदयमीक्षणंचययासा।७।अंतरंहर्तुमवसरंप्रेप्सुःप्राप्तुमिच्छुःकामेनभ्रमच्चित्तंयस्यसः।८।शानाद्रिसन्मानन्निर्मितंदुर्गमा।९।१०।आसमंतात्कुपतःआवरणंकुर्वतः।१०।११।पारिबर्हाणिवरवध्वोःप्रीतिदेयानि।१२।१३॥अनीहयागताहार्यैर्निर्वर्तितानिक्रियायेनसः॥१४॥

यात्रामात्रं शरीरादिनिर्वाहमात्रं भोज्यं उपनमति तन्मयत्या गच्छति ॥१५॥ मिथिलस्य जनकस्य वंश्यो मैथिलः ॥१६॥ प्रभुरेव स्वयं विदेहान्देशान्प्रययौ ॥१७॥ कृष्णो व्यासः रामो भार्गवः अहं शुकः एवमादिभिः सह ॥१८॥१९॥ आनर्तादयो देशास्तत्तद्देशवर्तिन्यो नृनार्यः उदारहासं स्निग्धमीक्षणं यस्मिन् तत् दृशिभिर्नेत्रैः ॥२०॥ स्ववीक्षणेनैव विनष्टा तमिस्रा दृग्येषां तेभ्यः क्षेमं अभयं अर्थदृशं तत्त्वज्ञानं च यच्छन् ॥२१॥ अभीयुः प्रत्युज्जग्मुः ॥

यात्रामात्रं त्वहरहर्दैवादुपनमत्युत । नाधिकं तावता तुष्टः क्रियाश्चक्रे यथोचिताः ॥१५॥ तथा तद्राष्ट्रपालोऽङ्ग बहुलाश्व इति श्रुतः । मैथिलो निरहंमान उभावप्यच्युतप्रियौ ॥१६॥ तयोः प्रसन्नो भगवान्दारुकेणाहृतं रथम् । आरुह्य साकं मुनिभिर्विदेहान्प्रययौ प्रभुः ॥१७॥ नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः । अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥१८॥ तत्र तत्र तमायान्तं पौरा जानपदा नृप । उपतस्थुः सार्घहस्ता ग्रहैः सूर्यमिवोदितम् ॥१९॥ आनर्तधन्वकुरुजाङ्गलकङ्कमत्स्यपाञ्चालकुन्तिमधुकेकयकोसलार्णाः । अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥२०॥ तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन् । शृण्वन्दिगन्तधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् ॥२१॥ तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप । अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः ॥२२॥ दृष्ट्वा तमुत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः । कैर्धृताञ्जलिभिर्नेमुः श्रुतपूर्वांस्तथा मुनीन् ॥२३॥ स्वानुग्रहाय संप्राप्तं मन्वानौ तं जगद्गुरुम् । मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥२४॥ न्यमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजैः । मैथिलः श्रुतदेवश्च युगपत्संहताञ्जली ॥२५॥ भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया । उभयोराविशद्गेहमुभाभ्यां तदलक्षितः ॥२६॥ श्रोतुमप्यसतां दूराञ्जनकः स्वगृहागतान् । आनीतेष्वासनाग्र्येषु सुखासीनान्महामनाः ॥२७॥ प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः । नत्वा तदङ्घ्रीन्प्रक्षाल्य तदपो लोकपावनीः ॥२८॥ सकुटुम्बो वहन्मूर्ध्ना पूजयांचक्र ईश्वरान् । गन्धमाल्याम्बराकल्पधूपदीपार्घ्यगोवृषैः ॥२९॥

॥२२॥ प्रीत्या उत्फुल्लानि आननानि आशयाः अंतःकरणानि येषां तैः कैः शिरोभिः ॥२३॥२४॥२५॥ तदभिप्रेत्य अंगीकृत्य तत्तदा उभाभ्यामपि ताभ्यां मद्गृहादन्यस्य गृहं पातीत्यलक्षितः अविदितः यद्वा उभाभ्यां रूपाभ्यां तदलक्षितः ताभ्यामलक्षित इति ॥२६॥२७॥ उद्धर्षेण उद्गतहर्षं हृदयं यस्य अस्रैराविले क्लिन्ने ईक्षणे यस्य सः स एव स च ॥२८॥ ईश्वरान् ईश्वरं तत्तुल्यांश्च तथैः

प्रीणन्प्रीणयन्संस्पृशन्संमर्दयन्॥३०॥आत्माचेतयितासाक्षीप्रकाशकःस्वदृक्स्वप्रकाशःअथअतःकारणात्॥३१॥अनंतोबंधुरपिश्रीर्भार्य्यापिअ
जःपुत्रोपि॥३२॥३३॥तच्छांत्यैसंसारोपशमाय॥३४॥३५॥गृहान्गृहेष्वित्यर्थः॥३६॥३७॥धुन्वन्परिभ्रामयन्॥३८॥अवनिजेअवनिनिजेप्रक्षालितवान्॥३९॥४०॥
फलैरामलकादिभिः अर्हणेनउशीरैस्तृणविशेषमूलैःसुवासितैःशिवैरमृतवत्स्वादुभिरंबुभिःसुरभ्यामृदाकस्तूरीप्रमुखयासपर्ययापूजयायथोपप



वाचामधुरयाप्रीणन्निदमाहान्नतर्प्पितान्॥पादावंकगतौविष्णोःसंस्पृशन्शनकैर्मुदा॥३०॥राजोवाच॥भवान्हि
सर्वभूतानामात्मासाक्षीस्वदृक्प्रभो॥अथनस्त्वत्पदांभोजंस्मरतांदर्शनंगतः॥३१॥स्ववचस्तदृतंकर्तुमस्मदृग्गोचरो
भवान्॥यदात्थैकांतभक्तान्मेनानंतःश्रीरजःप्रियः॥३२॥कोनुत्वच्चरणांभोजमेवंविद्विसृजेत्पुमान्॥निष्किंचनानांशांतानांमु
नीनांयस्त्वमात्मदः॥३३॥योऽवतीर्य्ययदोर्वंशेनृणांसंसरतामिह॥यशोवितेनेतच्छांत्यैत्रैलोक्यवृजिनापहम्॥३४॥नम
स्तुभ्यंभगवतेकृष्णायाकुंठमेधसे॥नारायणायऋषयेसुशांतंतपईयुषे॥३५॥दिनानिकतिचिद्भूमन्गृहान्नोनिवस
द्विजैः॥समेतःपादरजसापुनीहीदंनिमेःकुलम्॥३६॥इत्युपामंत्रितोराज्ञाभगवाँल्लोकभावनः॥उवाससकुर्वन्कल्या
णंमिथिलानरयोषिताम्॥३७॥श्रुतदेवोऽच्युतंप्राप्तंस्वगृहान्जनकोयथा॥नत्वामुनीन्सुसंहृष्टोधुन्वन्वासोननर्तह
॥३८॥तृणपीठबृषीष्वेतानानीतेषूपवेश्यसः॥स्वागतेनाभिनंद्यांघ्रीन्सभार्य्योऽवनिजेमुदा॥३९॥तदंभसामहाभागआ
त्मानंसगृहान्वयम्॥स्नापयांचक्रउद्धर्षोलब्धसर्व्वमनोरथः॥४०॥फलार्हणोशीरशिवामृतांबुभिर्मृदासुरभ्यातुल
सीकुशांबुजैः॥आराधयामासयथोपपन्नयासपर्य्ययासत्वविवर्द्धनांधसा॥४१॥सतर्कयामासकुतोममान्वभूत्गृहां
धकूपेपतितस्यसंगमः॥यःसर्वतीर्थास्पदपादरेणुभिःकृष्णेनचास्यात्मनिकेतभूसुरैः॥४२॥सूपविष्टान्कृतातिथ्या
न्श्रुतदेवउपस्थितः॥सभार्य्यःस्वजनापत्यउवाचांघ्र्यभिमर्शनः॥४३॥

॥न्नयाअनायासेनसंपन्नयाभूतान्नुपद्रवलब्धत्वात्सत्वविवर्द्ध
नंयदंधःअन्नंतेनच॥४१॥अस्यश्रीकृष्णस्यआत्मामूर्तिस्तस्यनिकेतैःस्थानविशेषैर्भूसुरैश्चसर्वतीर्थास्पदपादरेणुभिःकृष्णादिभिर्यःसंगमःस
ममकुतोऽन्वभूदितिअन्वितिविस्मयेपद्यआइतिवितर्केत्रइतिविस्मये॥४२॥उपस्थितःसमीपउपविष्टःभार्य्याःभर्त्तव्याःस्वजनाअपत्यानिचतैःसहि
॥तःश्रीकृष्णस्यांघ्रिमभिमृशतिसंमर्दयतीत्यंघ्र्यभिमर्शनः॥४३॥

यर्हीदं विश्वं शक्तिभिः सृष्ट्वा प्रविष्टः तदैव दर्शनं प्राप्तः स एव सन्मात्रो नाद्यतनीभूतस्त्वमित्यर्थः यद्वा नः अस्मान् अद्यैव प्राप्तः इति न किंतु तदैव प्राप्तः यर्हीदं विश्वं स्वशक्तिभिः सत्त्वादिभिः सृष्ट्वा स्वसत्तया अनुप्रविष्टस्त्वं त्वद्दर्शनं तु परं केवलमद्यैव प्राप्तमिति ।४४। मा भूत् सृष्टिप्रवेशयोरविद्या सृष्टिमेव शैघ्र्यं दृष्टान्तेनाह यथेति आत्ममायया स्वाविद्ययेत्यर्थः यद्वा आत्मनस्तव माययेति ।४५। किंच शृण्वतामिति नित्यं श्रवणकीर्तनादिपराणाममलात्मनामपि हृद्येव त्वं भासि मम तु लोचनगोचरस्त्वं अहो भाग्यमित्यर्थः ।४६। ननु सर्वेषां हृदि स्थितः कथं केषांचिदेव हृदि भासि मेघैः सूर्यवज्जीवोपाधिभिरावृतत्वादिति यद्युच्यते तर्हि न कस्यापि मा भूदित्यत आह हृदिस्थोऽपीति कर्मभिर्विक्षिप्तं चेतो येषां तेषामात्मशक्तिभिरहंकारादिभिरग्राह्यः व्यवहितोऽपि उपेतगुणः प्राप्तः श्रवणकीर्तनादिसंस्कारः आत्मा अंतःकरणं येषां तेषामंतिसमीपे अव्यवहितस्त्वमित्यर्थः ।४७। एतदेवं प्रपंचयन्नमस्यति नमोऽस्त्विति ते तुभ्यं नमोऽस्तु

॥श्रुतदेव उवाच॥ नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ॥ यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥४४॥ यथा शयानः पुरुषो मनसैवात्ममायया ॥ सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ।४५। शृण्वतां गदतां शश्वदर्चतां त्वाभिवंदताम् । नृणां संवदतामंतर्हृदि भास्यमलात्मनाम् ।४६। हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ॥ आत्मशक्तिभिरग्राह्योऽप्यंत्युपेतगुणात्मनाम् ॥४७॥ नमोऽस्तु तेऽध्यात्मविदां परात्मने ह्यनात्मने स्वात्मविभक्तमृत्यवे ॥ सकारणाकारणलिंगमीयुषे स्वमाययासंवृतरुद्धदृष्टये ॥४८॥ स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे ॥ एतदंतो नृणां क्लेशो यद्भवानक्षिगोचरः ॥४९॥ श्रीशुक उवाच ॥ तदुक्तमित्युपाकर्ण्य भगवान्प्रणतार्तिहा ॥ गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह ॥५०॥ श्रीभगवानुवाच ॥ ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान्विद्ध्यमून्मुनीन् ॥ संचरंति मया लोकान्पुनंतः पादरेणु

अध्यात्मविदां निवृत्तदेहाद्यहंकाराणां परमात्मने परमात्मत्वेन प्रकाशमानाय मोक्षप्रदायेत्यर्थः अनात्मने देहाद्यभिमानिने जीवाय परत्वेनाप्रकाशमानत्वात् स्वात्मनः सकाशात् विभक्तः समर्पितो मृत्युः संसारो येन तस्मै कृत एतत्तत्राह सकारणं महदादिकार्यं अकारणं प्रकृतिः तदुभयं लिंगमुपाधिं नियम्यतया ईयुषे प्राप्तवते अत एव उभयनियंतुः स्वस्मात्सकाशात्तदुभयवश्याय जीवाय विभक्तमृत्यवइत्यर्थः नियंतृनियम्यत्वे कारणं वदन्नाह स्वमायया संवृतेति अतो तु मे ऐश्वर्यं त्वा द्वितीयत्रे तुभ्यं नमः किंच रुद्धदृष्टये मायाविल्वादेव अन्येषां रुद्धा आवृता दृष्टिर्येन तस्मै यद्वा स्वमायया स्वस्यासंवृता अन्येषां च रुद्धा दृष्टिर्येन तस्मै रूपकं पदम् ।४८। स एवंभूतः परमेश्वरस्त्वं नोऽस्मान् स्वभृत्यान् शाधि अनुशिक्षय ।४९। ५०। त्वस्मिन्नादरमस्यधिकं ब्राह्मणेषु मंदमिवालक्ष्य लोकसंग्रहपरो भगवान्मत्तोऽपि ब्राह्मणेषु श्रद्धातिरेकं कुर्विति एवं तमनुशास्ति ब्रह्मन्विति सप्तभिः मया हृदि स्थेन ।५१॥

भिः॥

देवादिभ्योपि ब्राह्मणाः श्रेष्ठा इत्याह देवा इति ते शनैः पुनन्ति एते तु सद्यः किं च देवादीनि पुनन्ति तदप्यर्हत्तमानामीक्षया ॥५२॥ मम कलापरि
कलनसंपादितत्वयायुतः ॥५३॥ किं च ब्राह्मणाराधनमेव मम प्रेष्ठमित्याह नेति हेतुमाह सर्ववेदमयो विप्र इति प्रमाणाधीनत्वात् प्रमेयस्य वेदमयो
विप्रो देवमयात् तस्माद्रूपात् श्रेष्ठ इत्यर्थः ॥५४॥ अस्वरूपवोदोषदृष्टयः अर्चादौ इज्यदृष्टयः पूज्यबुद्धयः ॥५५॥ अस्य विश्वस्य हेतवो भावाः महदादयः मदी
क्षयाममैव सर्वं ते क्षयो ॥५६॥५७॥५८॥ सन्मार्गे सतां वेदानां त्रिकांडविषयाणां निवृत्तिप्रकारमादिश्य ॥५९॥ इति द० टी० षडशीतितमोऽध्यायः ॥८६॥
सप्ताशीतितमे नारायणनारदवादतः वेदैः स्तुतिर्गुणालंबा निर्गुणावधिवर्ण्यते ॥१॥ वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि यस्यास्ते हृदये संवित्तं
नृसिंहमहं भजे ॥१॥ संप्रदायविशुद्ध्यर्थं स्वीयनिर्बंधयंत्रितः श्रुतिस्तुतिमितव्याख्यां करिष्यामि यथामति ॥२॥ श्रीमद्भागवतं पूर्वैः सारतः संनिवेशितम्

देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ॥ शनैः पुनन्ति कालेन तदप्यर्हत्तमेक्षया ॥५२॥ ब्राह्मणो जन्मना श्रेयान्सर्वे
षां प्राणिनामिह ॥ तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥५३॥ न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ॥ सर्ववेद
मयो विप्रः सर्वदेवमयो ह्यहम् ॥५४॥ दुष्प्रज्ञा अविदित्वैवमवजानन्त्यसूयवः ॥ गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः
॥५५॥ चराचरमिदं विश्वं भावा ये चास्य हेतवः ॥ मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया ॥५६॥ तस्माद्ब्रह्मऋषीनेतान्
ब्रह्मन्मच्छ्रद्धयार्चय ॥ एवं चेदर्चितोस्म्यद्धा नान्यथा भूरिभूतिभिः ॥५७॥ श्रीशुक उवाच ॥ स इत्थं प्रभुणादिष्टः सहकृ
ष्णान्द्विजोत्तमान् ॥ आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥५८॥ एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ॥ उ
षित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥५९॥ इति श्रीभा० द० श्रुतदेवानुग्रहो नाम षडशीतितमोऽध्यायः ॥८६॥ श्रीपरी
क्षिदुवाच ॥ ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ॥ कथं चरन्ति श्रुतयः साक्षात्सदसतः परे ॥१॥ [illegible]
पचीयते ॥४॥ पूर्वाध्यायांते एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात् इत्यत्र सन्मार्गे सतां स्वतः प्रमाणभूता
नाम प्रामाण्यकारणरहितानां वेदानां मार्गं ब्रह्मपरत्वमुपदिश्य भगवान् अगादित्युक्तं तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानः पृच्छति ब्रह्मन्निति तत्र ता
वन्मुख्या लक्षणा गौणी चेति गुणभेदेन त्रिधा शब्दप्रवृत्तिः मुख्यापि रूढियोगभेदेन द्विधा रूढिश्च स्वरूपेण जात्या गुणेन वा निर्देश्यार्हे वस्तुनि संज्ञासंज्ञिसंके
तेन प्रवर्तते यथा डित्थः गौः शुक्ल इति लक्षणा च तेनैव संकेतेनाभिहितार्थसंबंधिनि यथा गंगायां घोष इति गौणी चाभिहितार्थे लक्षितगुणयुक्तेन सदृशे
यथा सिंहो देवदत्त इति यथाह अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता इति एवं त्रिविधप्रवृत्तिप्रतिपादितपरा
[illegible] इत्यादि [illegible] भवतीत्याह [illegible] कथं चरन्तीति [illegible]

तिंनिराकरोतिनिर्गुणेगुणवृत्तयइतिगुणैर्वर्तमानाअपिनिर्गुणेभवंतीत्यर्थः निर्गुणत्वेपहेतुर्वरन्नलक्षणांयोगंचनिराकरोतिसदसतःपरइतिकार्य्य
कारणाभ्यांपरस्मिन्नसंगेकेनचिदपिसंबंधाभावान्नलक्षणायोगवृत्तीसंभवतइत्यर्थः एवंपदार्थत्वायोगादपदार्थस्यचवाक्यार्थत्वायोगान्नश्रुतिगोचर
त्वंब्रह्मणइत्यभिप्रायः॥१॥उत्तरमाहबुद्धींद्रियेतिब्रह्मादीन्उपाधीन्जनानामनुशायिनांजीवानांमात्राद्यर्थंप्रभुरीश्वरोऽसृजत्मीयंतइतिमात्राविषयाःतदर्थं
भवार्थंभवोजन्मलक्षणंकर्मतत्प्रभृतिकर्मकरणार्थमित्यर्थः आत्मनेलोकांतरगामिनेआत्मनस्तत्तल्लोकभोगायेत्यर्थः अकल्पनायकल्पनानिवृत्तयेमुक्त
यइत्यर्थः अर्थधर्मकाममोक्षार्थमितिक्रमेणपदचतुष्टयस्यार्थः जनानामितिवदन्जीवार्थमीश्वरस्यसृष्ट्यादिषुप्रवृत्तिरितिदर्शयतिप्रभुरितिईश्वरस्यउपा
धिवश्यताभावेननित्यमुक्ततांदर्शयतिअयमभिप्रायःसगुणमेवगुणैरनभिभूतंसर्वज्ञंसर्वशक्तिंसर्वेश्वरंसर्वनियंतारंसर्वोपास्यंसर्वकर्मफलदातारंस
मस्तकल्याणगुणनिलयंसच्चिदानंदंभगवंतंश्रुतयःप्रतिपादयंतियःसर्वज्ञःसर्ववित्यस्यज्ञानमयंतपःसर्वस्यवशीसर्वस्येशानःयःपृथिव्यांतिष्ठन्पृ
थिव्याअंतरःसोऽकामयतबहुस्यांसऐक्षततत्तेजोऽसृजतसत्यंज्ञानमनंतंब्रह्मेत्याद्याःतथाभूतेश्वरतांतावत्संसारिणोजीवस्यतन्निवृत्तयेतत्त्वमसी
त्यादिवाक्यानिबोधयंतितत्रचतत्त्वंपदयोःसामानाधिकरण्यंप्रतीयतेतच्चप्रकारांतरेणाऽघटमानंब्रह्मणिपर्य्यवसानंगमयतितथाहिनतावदैश्व

॥श्रीशुकउवाच॥बुद्धींद्रियमनःप्राणान्जनानामसृजत्प्रभुः॥मात्रार्थंचभवार्थंचआत्मनेऽकल्पनायच॥२॥सैषाह्यु
पनिषद्ब्राह्मीपूर्वेषांपूर्वजैर्धृता॥श्रद्धयाधारयेद्यस्तांक्षेमंगच्छेदकिंचनः॥३॥अत्रतेवर्णयिष्यामिगाथांनारायणान्वि
ताम्॥नारदस्यचसंवादमृषेर्नारायणस्यच॥४॥

(देव्यामिक्षेतिवदुभयोरेकार्थाभिधानेनसामानाधिकरण्यंयथोक्तंआमिक्षांदेव
तायुक्तांवदत्येवैषतद्धितःआमिक्षापदसान्निध्यात्सैवविषयार्पणमितिक्वतःभिन्नार्थत्वात्नचाजहत्स्वार्थयानिरूढलक्षणयाविशेषणवि
शेष्यभावेननीलमुत्पलमितिवत्यथोक्तंस्वरूढ्यारज्यतेयेनविशेष्यंनहिशेषणमित्यादिकुतःविरुद्धार्थत्वेनतदयोगात्नचजहत्स्वार्थत्वेनसंबं
धिलक्षणयाकुसुमितद्रुमागंगेतिवत्कुतएकार्थत्वस्यविवक्षितत्वात् अतोजहदजहत्स्वार्थलक्षणयासोऽयंदेवदत्तइतिवद्विरुद्धांशत्यागेनानु
गतचिदंशेनैकार्थेनसामानाधिकरण्येननिर्गुणेपर्य्यवसानंअस्थूलादिवाक्यानांतुसाक्षादुपाधिनिषेधेनतत्पदार्थशोधनउपयोगान्निर्गुणेएवप
र्य्यवसानम्तथाचात्रैवोपक्रमेस्वसृष्टमिदमापीयेत्यादिनाविशिष्टमालंबनंवक्ष्यतिअंतेचश्रुतयस्त्वयिहिफलंत्यतन्निरसनेनभवन्निधनाइत्युपसं
हरिष्यतिउपासनादिवाक्यानांत्वन्यार्थप्रवृत्तत्वस्थूलाद्यवलंबनेनज्ञानसाधनविधानेनतत्परत्वमित्येषादिक्॥१॥अत्रचानादिशिष्टपरंपरागतत्वाच्चसंदेहो
युक्तइत्याहसैषेतिसैषायथोक्तालंबनाब्राह्मीब्रह्मपराश्रद्धयाआदरेणवैतंडिकानर्कानभिनिवेशेनयःश्रवणादिनाधारयेत्सअकिंचनःनिरस्तदेहाद्युपा
धिःसन्परंपदंप्राप्नुयादिति॥२॥एतदेवसर्वश्रुत्यर्थनिरूपणेनप्रपंचयितुमितिहासमवतारयतिअत्रइतिनारायणान्वितांनारायणःप्रवक्तृत्वेनान्वितो

॥पू॰ टी॰ ७।८॥ब्रह्मसत्रमिति यथा यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म कुर्वंतीति तत्कर्म सत्रं प्रसिद्धं तथा यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसंते तद्ब्रह्मसत्रमिति।९॥अहो तर्हि मया कथं तन्न ज्ञातमित्यत आह श्वेतद्वीपमिति तिदीश्वरं तत्रस्थं मामेवानिरुद्धमूर्तिं।१०॥ननु सर्वे ज्ञास्ते कस्तत्र वक्ता मध्ये वा तत्राह तुल्यश्रुतेति श्रुतादिभिरविशेषाः अरिमित्रोदासीनहीनत्वेन निरूपमकरुणाः अतः सर्वे प्रवचनयोग्या अपि केनापि कौतुकेनैकं प्रवक्तारं कृत्वान्ये पप्रच्छुरित्यर्थः।११॥स्वसृष्टमिति स्वयं निर्मितमिदं विश्वं प्रलयसमये आपीय संहृत्य शयानं योगेन निद्राणमिव वर्तमानं तं तेभ्यस्तैर्लिंगैस्तत्प्रतिपादकैर्वाक्यैः परं ईश्वरं सृष्टिसमये प्रथमनिश्वासभूताः श्रुतयः प्रबोधयामासुः।१२॥सुश्लोकैः शोभनाः श्लोकाः कीर्तयो येषु तैः

एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः॥ सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम्॥५॥ यो वै भारतवर्षेस्मिन्क्षेमाय स्वस्तये नृणाम्॥ धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः॥६॥ तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः॥ परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह॥७॥ तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम्॥ यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम्॥८॥ श्रीभगवानुवाच॥ स्वायंभुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा॥ तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम्॥९॥ श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम्॥ ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते॥१०॥ तत्र ह्ययमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि॥ तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः॥ अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे॥११॥ श्रीसनंदन उवाच॥ स्वसृष्टमिदमापीय शयानं सह शक्तिभिः॥ तदंते बोधयांचक्रुस्तल्लिंगैः श्रुतयः परम्॥१२॥ यथा शयानं संम्राजं वंदिनस्तत्पराक्रमैः॥ प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयंत्यनुजीविनः॥१३॥ श्रुतय ऊचुः॥ जय जय जह्यजामजितदोषगृभीतगुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः॥ अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः॥

पराक्रमैः।१३॥ जय जयेति भो अजित जय जय उत्कर्षमाविष्कुरु आदरे वीप्सा केन व्यापारेण अगजगदोकसां अगानि स्थावराणि जगंति जंगमानि च ओकांसि शरीराणि येषां जीवानां तेषामजामविद्यां जहि नाशय किमिति गुणवती हंतव्येत्यत आह दोषगृभीतगुणां दोषाय आनंदाद्यावरणाय गृहीता गुणा यया तां हि ग्रहो भंश्छंदसीति भकारः इयं हि वैरिणी वपरमतारणाय गुणान् गृह्णातिअतो हंतव्येति अन्योदंभिको राज्ञा हंतव्यः तर्हि मय्यपि दोषमावहेदिति ममापि तत्र का शक्तिः स्यादित आह त्वमिति यद्यस्मात्त्वं आत्मना स्वरूपेणैव समवरुद्धसमस्तभगः संप्राप्तसमस्तैश्वर्यो सि वशीकृतमायत्वादि ॥तिभावः नन्विह त्वं मे ज्ञानवैराग्यादिना किं न हन्तुरित्यत आह अखिल॥

॥निभावःनहन्तुरिस्पतओहअखिल॥

शन्यववोधकेतितेषांत्वमेवांतर्यामीसर्वेशक्तिप्रबोधकः अनेनतेज्ञानादिस्वतंत्र्यमुक्तिभावः अहमकुंठज्ञानैश्वर्यादिगुणोजीवानांकर्मज्ञानादिशक्तिप्र
बोधनेनाविद्याहंतेत्यत्रकिंप्रमाणमितिचेत् अहमेवप्रमाणमित्याहनिगमःवेदः ननुएवंभूतेमयिकथंश्रुतीनांप्रवृत्तिस्तत्राहक्वचिदितिकदाचित्सृष्ट्या
दिसमयेअजयामाययाचरतःक्रीडतःनित्यंचात्मसंभगतयासत्यज्ञानानंतानंदैकरसेनात्मनाचचरतोवर्त्तमानस्यनिगमोऽनुचरेत्प्रतिपादयेत्वांप्रति
ष्ठायतोवाइमानिभूतानिजायंतेयोब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितंहदेवमात्मबुद्धिप्रकाशंमुमुक्षुर्वैशरणमहंप्रपद्ये यआत्मनितिष्ठन्
आत्मनोन्तरोयमयतियमात्मानवेदयस्यात्माशरीरंयआत्मानमंतरोयमयतिसतआत्मांतर्याम्यमृतःसत्यंज्ञानमनंतंब्रह्मयःसर्वज्ञःसर्वविदित्याद्यागमक
दंबस्त्वामेवंभूतंप्रतिपादयतीत्यर्थः॥१४॥जयजयाजितजह्यगजंगमावृतिमजामुपनीतमृषागुणांनहिभवंतमृतेप्रभवंत्यमीनिगमगीतगुणार्णवतानव
।१।ननुकथंमामेवंप्रतिपादयंतियतइंद्रोयातोऽवसितस्यराजेत्यादिभिरिंद्रःयातोजंगमस्यअवसितस्यस्थावरस्यचराजेतिप्रतिपाद्यतेतथाअग्निर्मूर्द्धादि
वःककुत्पतिःपृथिव्याअयमपांरेतांसिजिन्वतीत्यादिभिश्चैवंभूतत्वेनाग्न्यादयःप्रतिपाद्यंतेतत्राहबृहदुपलब्धमेतदितिअयमर्थःएतदुपलब्धंदृष्टमिन्द्रादिस
र्वंबृहत्ब्रह्मत्वमित्येवावयंतिजानंतिकथंबृहतएवावशेषतयाऽवशिष्यमाणत्वेनकुतःयतोबृहतःसर्वस्योदयास्तमयौउत्पत्तिप्रलयौसर्वोपादानत्वात्त

बृहदुपलब्धमेतदवयंत्यवशेषतयायतउदयास्तमयौविकृतेर्मृदिवाविकृतात्॥अतऋषयोदधुस्त्वयिमनोवचना
चरितंकथमयथाभवंतिभुविदत्तपदानिनृणाम्॥२१५॥इतितवसूरयस्त्र्यधिपतेखिललोकमलक्षपणकथाऽमृता
ब्धिमवगाह्यतपांसिजहुः॥किमुतपुनःस्वधामविधुताशयकालगुणाःपरमभजंतियेपदमजस्रसुखानुभवम्।३१६॥९

र्हिकिंविकारित्वंबृहतःनअविकृतात्विवर्त्ताधिष्ठानत्वेनाविकारादित्यर्थःवाशब्दउपमार्थःयथाघटादेर्विकृतेर्मृदउदयास्तमयौतद्वत्वाचारंभणंविकारोना
मधेयंमृत्तिकेत्येवसत्यंसर्वंखल्विदंब्रह्मेत्यादिभिस्तथाप्रतिपादनादित्यर्थःअतःकारणादृषयोमंत्रास्तद्द्रष्टारोवात्वय्येवमनोवचनाचरितंदधुःमनसाआ
चरितंतात्पर्यंवचनाचरितमभिधानंचधृतवंतःनपृथग्विकारेष्वित्यर्थःअत्रनिदर्शनंकथमयथेतिनृणांभूचराणांयत्रकुत्रापिदत्तानिनिःक्षिप्तानिपदा
निभुविकथमयथाभवंतिअदत्तानिभवंतिअतोयथामृत्पाषाणेष्टकादिषुदत्तानिपदानिभुवंनव्यभिचरंतितथायत्किमपिविकारज्ञानमवदंतोवेदास्त्वा
मेवसर्वकारणंपरमार्थभूतंप्रतिपादयंतीत्यर्थः॥१५॥द्रुहिणवह्निरवींद्रमुखाऽमराजगदिदंनभवेत्पृथगुत्थितम्।बहुमुखैरपिमंत्रगणैरजस्त्वमुरुमूर्त्ति
रतोविनिगद्यसे॥१॥त्वमेवसर्वनिगमगोचरइतिसत्तांप्रवृत्त्यादृष्ट्यपिनिरूपितेतिवतित्वमेवसर्वकारणत्वेनपरमार्थइतिज्ञात्वाभोःत्र्यधिपतेत्रिगुणमायाप्रभो
नर्तकसूरयोविवेकिनस्तवाखिललोकमलक्षपणकथामृताब्धिंसकलजनवृजिननिरसनहेतुकीर्त्तिसुधासिंधुमवगाह्यनिषेव्यतपंतीतितपांसिपापानिजहुः
स्वानिवाजहुःत्यक्तवंतःत्वदीयकथाश्रवणमात्रेणयदापापत्यागस्तदाकिमुवक्तव्यंयेपुनःस्वधामविधुताशयकालगुणाःस्वधाम्नास्वरूपस्फुरणेनैवविधुता

करणधर्मा रागादयः कालगुणाजरादयश्च ये तैस्तथा हि परमतत्वाज्ञस्य सुखानुभवअखंडानंदानुभवं पदं स्वरूपं भजंति सेवंते तथाभूताः दुःखानित्यजं
तीति तद्यथा पुष्करपलाशमापो न श्लिष्यंते एवमेवैनं विदित्वा पापं कर्म न श्लिष्यते न कर्मणा लिप्यते पापकेनेति तत्सुकृतदुष्कृते विधुनुते एवं ह वाव न त
पति किमहं साधु नाकरवं किमहं पापमकरवमित्यादिश्रुतेरित्यर्थः ॥१६॥ सकलवेदगणेरितसद्गुणत्वमिति सर्वमनीषिजनारताः त्वयि सुभद्रगुणश्र
वणादिभिस्तव पदस्मरणेन गतक्लमाः ॥३॥ असूर्या नाम ते लोका अंधेन तमसावृताः तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जनाः तथा न चेदेवेदीन्महती विन
ष्टिः किमिच्छन्कस्य कामाय शरीरमनुसंचरेत् येतद्विदुरमृतास्ते भवंत्यथेतरे दुःखमेवोपयन्तीत्याद्याः श्रुतयः पूर्वश्लोकोक्तोभयविधभजनहीनान्निंदंति दृ
तय इवेति असुभृतो नराः यदि ते अनुविधा अनुविदधतीत्यनुविधाः अनुवर्तिनो भक्ता इति यावत् न हि श्वसंति जीवंति सफलजीवना भवंतीतरथा दृतय इव
भस्त्रा इव वृथा श्वासा इत्यर्थः नन्वभक्तानामपि कामादिफलमस्त्येव न कार्य्यकारणानुग्राहकत्वेन जीवनहेतोस्तव भजने कृतघ्नानां तदपि न सिद्ध्येदि
त्याशयेनाह महदहमादय इति महानहंकारश्च आदिर्येषां ते यदनुग्रहतः यस्यानुप्रवेशेन लब्धसामर्थ्याः संतः अंडं देहं समष्टिव्यष्टिरूपं सृष्टवंतः तत्र च
पंचापि कोशानन्नमयादीनाविश्य तत्तदाकारः सन् यश्चेतयते स त्वं न दाह पुरुषविध इति पुरुषस्यान्नमयादेर्विधेव विधा आकारो यस्य सः तथा ननु चिद्

दृतय इव श्वसंत्यसुभृतो यदि तेऽनुविधा महदहमादयोऽण्डमसृजन्यदनुग्रहतः ॥ पुरुषविधोऽन्वयोऽत्र चरमोऽन्न
मयादिषु यः सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥४॥१७॥ उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदय
मारुणयो दहरम् ॥ तत उदगादनंत तव धाम शिरः परमं पुनरिह यत्समेत्य न पतंति कृतांतमुखे ॥५॥१८॥ कः तस्य कथं तत्तदाका

रता अत आह अन्वय इति अत्र एषु अन्नमयादिष्वन्वेतीत्यन्वयः अतस्तत्तदाकारतेति एवं तर्हि सत्यत्वमसंगत्वं च कथं तत्राह चरमोऽन्नमयादिषु इति अन्न
मयादिषूपदिश्यमानेषु पश्चरमो ब्रह्म पुच्छं प्रतिष्ठेति पुच्छत्वेनोक्तः सत्यमिति संबंधः ननु तथान्नमयादिष्वन्वितत्वे संगत्वव्याहतिरेव तत्राह सदसतः परं त्वम
थ यदेष्ववशेषमृतमिति सदसतः स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तं तत्साक्षिभूतं अवशेषं अवशिष्यत इत्यवशेषमबाध्यं अथ अत एव ऋतं सत्यम्
तर्हि किमर्थं तेष्वन्वय उक्तः शाखाचंद्रवत् स्थूलस्वरूपोपलक्षणार्थं तथा हि स वा एष पुरुषोऽन्नरसमयः तस्येदमेव शिर इत्यादिना स्थूलसूक्ष्मक्रमेण पंचको
शानुप्रदिश्य तस्य पुरुषविधतामन्वयं च पुरुषविध इति पुनस्तदन्वितत्वेनालक्ष्य ब्रह्म पुच्छं प्रतिष्ठेति सर्वसाक्षिशुद्धस्वरूपनिरूपणमित्यनवद्यम् ॥४॥
१७॥ नरवपुः प्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः नरहरे न भजंति नृणामिदं दृतिवद् श्वसितं विफलं ततः ॥४॥ एवं तावत्सर्वात्मके परमेश्वरे स
र्वे श्रुतिसमन्वयेन सङ्गमनीयत्वमुक्त्वा अभक्तनिंदया च तदेव दृढीकृत्य इदानीमनवगाह्यमहिमनि प्रथमं तावदुपाध्यालंबनमुपासनमुदरं ब्रह्मेति शार्करा
क्षा उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्म हैवैतादृत ऊर्ध्वं त्वेवादसर्पत् तच्छिरोऽश्रयत इत्याद्याः श्रुतयो विदधतीत्याह उदरमुपासन इति ऋषिवर्त्मसु ऋषी
णां संप्रदायमार्गेषु ये कूर्पदृशः शालेउदरालंबनं मणिपूरकस्थं ब्रह्मोपासते ॥

...उदरालंबनं मणिपूरकस्थं ब्रह्मोपासते॥



ध्यायंतिशार्कराक्षादृतिश्रुतिपदस्यप्रतिपदंकूर्पदृशइतिकूर्पशर्करारजोविद्यतेदृक्षुअक्षिषुयेषांतेतथारजःपिहितदृष्टयःस्थूलदृष्टयइतियावत्उदर
स्यहृदयापेक्षयास्थूलत्वात्यद्वाकूर्पंसूक्ष्मंसूक्ष्मदृशइत्यर्थःतदाहृदयस्थंसूक्ष्ममेवालक्ष्यतत्त्वविशालप्रथममुदरमुपासतइतिभावःआरुणयस्तु
साक्षाद्हृदयस्थदहरंसूक्ष्ममेवोपासतेहृदयविशेषणपरिसरपद्धतिमितिपरितःसरंतिप्रसर्पन्तीतिपरिसरानाड्यःतासांपद्धतिंमार्गंप्रसरणस्थानमित्यर्थःवि
शेषणस्यफलमाहततइतिततोहृदयाद्अनंततवधामउपलब्धिस्थानंसुषुम्नाख्यंपरमंश्रेष्ठंज्योतिर्मयंशिरःमूर्द्धानंप्रतिउद्गात्उदसर्पत्मूलाधारा
रभ्यहृदयमध्यात्ब्रह्मरंध्रंप्रत्युद्गतमित्यर्थःकथंभूतंधामयत्समेत्यप्राप्यपुनरिहकृतांतमुखेमृत्युमुखेसंसारेनपतंतितथाचश्रुतिःशतंचैकाहृदयस्य
नाड्यस्तासांमूर्द्धानमभिनिःसृतैकातयोर्द्ध्वमायन्नमृतत्वमेतिविष्वगन्याउत्क्रमणेभवंतीति॥१८॥उदरादिषुयःपुंसांचिंतितोमुनिवर्त्मभिःहंतिमृत्युभयंदे
वोहृद्गतंतमुपास्महे॥ननुचेश्वरस्यापितर्हिजीववत्उदरहृदयादिसंबंधेतदनुप्रविष्टस्यचतारतम्येसतिकेनविशेषेणोपास्यत्वमितिमामाशंकांपरिहरन्तः
एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्माकर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताकेवलोनिर्गुणश्चेत्याद्याःश्रुतयःस्तुवन्तीत्याहस्वकृतविचित्र
योनिष्वितिस्वयंकृतासुउच्चनीचमध्यमासुयोनिषुअभिव्यक्तिस्थानेषुकार्येषुदेहादिषुहेतुतयाउपादानतयाप्रागेवविद्यमानत्वेनमुख्यप्रवेशासंभवादिश

स्वकृतविचित्रयोनिषुविशन्निवहेतुतयातरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः॥अथवितथास्वमूष्ववितथंत
वधामसमंविरजधियोन्वयंत्यभिविपण्यवएकरसम्॥१९॥स्वकृतपुरेष्वमीष्वबहिरंतरसंवरणंतवपुरुषंवदंत्यखिल
शक्तिधृतोंशकृतम्॥इतिनृगतिंविविच्यकवयोनिगमावपनंभवतउपासतेंघ्रिमभवंभुविविश्वसिताः॥२०॥

न्निववर्तमान
स्तारतमतोन्यूनाधिकभावेनचकास्सिअवभाससेस्वकृतायोनीरनुकरोतीतिस्वकृतानुकृतिःअनलवत्अग्निर्यथास्वतस्तारतम्यहीनोपिकाष्ठानुसा
रेणतथातथाप्रकाशतेतद्वत्अथातोवितथासुमिथ्याभूतासुअमूषुयोनिषुअवितथंसत्यंयतःसममविशेषंअतःसत्यंतवधामस्वरूपंविरजधियो
निर्मलमतयःअन्वयंतिजानंतिनुइतिपृथक्वाइवाअत्रहेतुःअभिविपण्यवइतिअभितोविगतव्यवहाराःपणव्यवहारइत्यस्यरूपंपण्युरितिऐहिका
मुष्मिकफलककर्मरहिताइत्यर्थःअविशेषत्वादेवैकरसंसन्मात्रमतस्तत्रोपाधिकृततारतम्याभावादप्रच्युतैश्वर्यस्योपास्यत्वमितिभावः॥१९॥स्वनि
र्मितेषुकार्येषुतारतम्यविवर्जितंसर्वानुस्यूतंसन्मात्रंभगवंतंभजामहे॥१९॥अपिचकुतोन्नियमाशंकास्यात्भगवतोदेहाद्युपाधिकृतदोषप्रसंगइतिपरो
विद्याकामकर्मभिःसंसरतोजीवस्यापिभगवद्भावलक्षणयाबोधयंत्यस्तद्दोषंनिषेधयंतिसयश्चायंपुरुषेयश्चासावादित्येसएकःतत्त्वमसीत्याद्याःश्रुतयःनन्तु
कृतत्वर्थस्यात्मनःस्तुतिरीश्वरत्वेनक्रियतेनतुतस्येश्वरत्वंबोध्यतेनैतद्युज्यतेयतस्तत्रयस्यदेवेपराभक्तिर्यथादेवेतथागुरौतस्यैतेकथिताह्यर्थाःप्रका
शंतेमहात्मनइत्याद्याःश्रुतयःकृतावतारस्यभगवतश्चरणभजनमुपायंवदंतीत्याहस्वकृतपुरेष्वितिस्वकर्मोपार्जितेषुपुरेषुदेहेषुअमीषुनरादिषुमोक्षार्थं

यस्य पूर्णस्य न वा। शङ्कते वदंतीति अंशइवांशः कृत इव कृतः त्वद्रूपं वदंतीत्यर्थः ननु कार्य्यकारणसंवृतस्य कुत एवंभूतत्वं तत्राह अबहिरंतरसंवरणमि
ति बहिः कार्य्यमंतरं कारणं वस्तुतस्तदावरणशून्यं तयोरसत्वादित्यर्थः इति एवं नृगतिं नु जीवस्य गतिं तत्वं विविच्य विशोध्य कवयः अन्यथेदं न प्राप्यत
इति जानंतः निगमावपनं निगमोक्तकर्मणामावपनं आसमंतादुप्यंते स्मिन्नित्यावपनं क्षेत्रं सर्वकर्मार्प्पणविषयमित्यर्थः यत्रार्प्पितानि कर्माणि मुक्ति
फलं फलंति तं भवतोंघ्रिमभवं भवनिवर्त्तकं विश्वसिताः कृतविश्वासाः उपासते श्रद्धेन वंदनादिभिः सेवंते भुवीति मर्त्यलोके इदमेवोचितमिति दर्शयति
॥२०॥ त्वदंशस्य ममेशान त्वन्मायाकृतबंधनं त्वदंघ्रिसेवामादिश्य परानंदं निवर्त्तय॥७॥ भक्तिरल्पसाधनमिति वचनमनुचितमिव मन्वानो भक्तिं गरूक
रोति दुरवगमेति भो ईश्वर दुरवगमं दुर्बोधं यदात्मतत्त्वं तस्य निगमाय ज्ञापनाय यत्तवात्ततनोराविष्कृतमूर्त्तेश्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः च
रितमेव महामृताब्धिस्तस्मिन्परिवर्त्तो विगाहस्तेन परिश्रमणाः परिवर्ज्जनार्थः श्रमणं श्रमः गतश्रमा इत्यर्थः अपवर्गमपि केचिन्न परिलषंति नेच्छंति
कुतोन्यत् इन्द्रपदादिके चिदिति एवंभूता भक्तिरसिका विरला इति दर्शयंति न केवलमन्यन्नेच्छंति किंतु तेनैव सुखेन पूर्णाः संतः पूर्वसिद्धं गृहादिसुखम
प्युपेक्षंत इत्याह तव चरणसरोजहंसकुलसंगविसृष्टगृहा इति तव चरणसरोजे हंसा इव रममाणा ये भक्तास्तेषां कुलं तेन संगस्तेन विसृष्टा गृहा यैस्तेत

दुरवगमात्मतत्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः॥ न परिलषंति केचिदपवर्गमपी
श्वर ते चरणसरोजहंसकुलसंगविसृष्टगृहाः॥२१॥ त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्व
यि हिते प्रिय आत्मनि च न बत रमंत्यहो असदुपासनयात्महनो यदनुशया भ्रमंत्युरुभये कुशरीरभृतः॥२२॥ निभृ
तमरुन्मनोक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात्॥ (था अनेन श्रवणकीर्त्तनेन दर्शिते श्रुतिश्रमुक्तेर
प्याधिक्यं भक्तेर्दर्शयति यथाहं यं सर्वे देवा नमंति मुमुक्षवो ब्रह्मवादिनश्चेति आख्यातं च सर्वैर्दैर्भोप्पकाङ्क्षिः मुक्ता अपि लीलया विग्रहं कृत्वा भजंत इ
ति॥२१॥ त्वत्कथामृतपाथोधौ विहरंतो महामुदः कुर्वंति कृतिनः केचिच्चतुर्वर्गं तृणोपमम्॥८॥ आराममस्य पश्यंति न तं पश्यति कश्चन न तं वि
दाथ य इमा जजानान्यद्युष्माकमंतरं बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरंतीत्याद्याः श्रुतयः अनुक्रोशंत्यो जगदात्मनीश्वरेऽनि
रुपदिशंतीत्याह त्वदनुपथमिति त्वदनुवर्त्तित्वात्त्वत्सेवोपयिकमिदं कुलायं कोपि व्यालीयत इति कुलायं शरीरं आत्मसुहृत्प्रियवत् आत्मा च सुहृ
च्च प्रियश्च तद्वच्चरति स्वाधीनतया वर्त्तत इत्यर्थः तथापि त्वयि उन्मुखे हिते प्रिये आत्मनि च अप्यर्थे चकारः एवंभूते सुसेव्ये अपि त्वयि बत अहो कष्टं न रमंति
असत्यादिना भजंति असदुपासनया देहाद्युपलालनेन आत्महनः ममादिनः कुतः यदनुशयाः यस्यामसदुपासनायां अनुशयो वासना येषां ते कुशरीरभृतः संतः
उरुभये संसारे भ्रमंति परिवर्त्तंते अत आत्महन इति भावः॥२२॥ त्वय्यात्मनि जगन्नाथे मन्मनो रमतामिह कदा ममेदृशं जन्म मानुषं संभविष्यति॥९॥ इदानीं
[illegible] श्रुतयो ध्यानमद्भुतत्वेनोपदिशंतीत्याह निभृतमरुन्मनोक्षदृढयोगयुज इति मरुत्प्राणः मन

युंजंतितेहृदयोगयुजस्तेतथाभूतामुनयोहृदियत्त्वमुपासते तद्देवाचयोपितत्स्मरणादापुःप्रापुःस्त्रियोपिकामतःउरगेंद्रभोगभुजदंडविषक्तधि
यःअहीन्द्रदेहसदृशयोर्भुजदंडयोर्विषक्ताधीर्यासांताःपरिच्छिन्नदृष्टयःसमदृशःसममपरिच्छिन्नंत्वांपश्यंत्योवयंश्रुत्यभिमानिन्योदेवताअपितेसमा
एवरूपाविषयतया अंघ्रिसरोजसुधाः अंघ्रिसरोजंसुष्ठुधारयंत्यः अयंभावःइत्थंभूतस्तवस्मरणानुभावःयेयोगिनस्त्वांहृदयालंबनंउपासतेयाश्च
वयंत्वांसमंपश्यामःयाश्चस्त्रियःकामतःपरिच्छिन्नंध्यायंतियेचतद्द्वेषेणसर्वानपितांस्त्वमेवप्रापयतीति।१०।२३।चरणस्मरणंप्रेम्णातवदेवसुदुर्लभम्।
यथाकथंचिन्नृहरेममभूयादहर्निशम्।११०।यतोवाचोनिवर्ततेअप्राप्यमनसासहकोअद्धावेदकइहप्रावोचत्कुतआजाताकुतइयंविसृष्टिःअर्वाग्दे
वाअस्यविसर्जनेनाथाःकोवेदयतआबभूवअनेजदेकंमनसोजवीयोनैनद्देवाआप्नुवन्पूर्वमर्शत्तद्धावतोअन्यानत्येतितिष्ठत्तस्मिन्नपोमातरिश्वा
दधातीत्याद्याःश्रुतयःभगवतस्त्वंदुर्ज्ञेयंवदंत्योभक्तिमेवोररीकुर्वंत्यःस्तुवन्तीत्याहकइहनुवेदेतिवतअहोभगवन्इहजगतिअग्रसरंपूर्वसिद्धंत्वांअवरजन्म
लयःअर्वाचीनोऽस्तिविनाशवान्कोनुप्रमान्वेदजानातिईश्वरस्यपूर्वसिद्धावन्यस्यचार्वाचीनत्वेप्रमाणंवदन्ज्ञानकारणाभावमाहयतउदगादितियतः
त्वत्तःऋषिर्ब्रह्माउदस्थात्ब्रह्माणमनुउभयेआध्यात्मिकाआधिदैविकादेवगणाउत्पन्नाःततोऽप्यर्वाचीनाःसर्व्वेयदात्वभवान्सर्व्वमवष्टभ्यउपसंहृत्यश

स्त्रियउरगेन्द्रभोगभुजदंडविषक्तधियोवयमपितेसमाःसमदृशोंघ्रिसरोजसुधाः॥१०।२३।कइहनुवेदबतावरजन्म
लयोऽग्रसरंयतउदगादृषिर्यमनुदेवगणाउभये॥तर्हिनसन्नचासदुभयंनचकालजवःकिमपिनतत्रशास्त्रमवकृ
ष्यशयीतयदा॥११।२४।जनिमसतःसतोमृतिमुतात्मनियेचभिदांविपणमृतंस्मरंत्युपदिशंतितआरुपितैः॥अर्वाचीनहितदाअ

नुशायिनांजीवानांज्ञानसाधनंनास्तियतस्तदानसत्स्थूलंआकाशादिनचासत्सूक्ष्मंमहदादिनचउभयंसदसद्भ्यामारब्धंशरीरंनचकालजवःतन्नि
मित्तभूतंकालवैषम्यएवंसतितत्रतदानकिमपिइन्द्रियप्राणाद्यपिनचज्ञापकंशास्त्रमपिअयमभिप्रायःअर्वाक्सृष्टिंगतानांदेहाद्युपाधिकृतान्तरा
णांकालवशेनचमलिनसत्वानांनतावत्भगवज्ज्ञानसामर्थ्यंतथाचश्रुतिःनतंविदाथयइमाजजानान्यद्युष्माकमन्तरंबभूवेत्याद्याःयदातुप्रलयस
मयेनबहुतरमस्तितदापिसाधनाभावान्नभगवज्ज्ञानसामर्थ्यंअतस्त्वदेकशरणतयाश्रवणकीर्त्तनादिभक्तिरेवसुकरेति।११।२४।कोहंब्रह्मादिसरुद्रःक्व
चभूमन्महस्तववैभवंनवधीरयासिधीभक्तिमेनृहरेदिश।११।इतोपिज्ञानंनसुशकमुपदिशतामपिभ्रमबाहुल्यादित्याहुःजनिमसतइतिअसतोजगतोज
निमुत्पत्तिंयेवैशेषिकादयोवदंतिअसतएवब्रह्मत्वेसोऽस्तितियेचपातंजलादयःसतएवैकविंशतिप्रकारस्यदुःखस्यनाशंमोक्षंवदंतियेनैयायिकाःउ
तअपियेचसांख्यादयआत्मनिभिदांभेदंचयेमीमांसकाःविपणंकर्मफलव्यवहारमृतंसत्यंस्मरंतिवदंतितेसर्वेआरुपितैरारोपितैर्भ्रमैरेवोपदिशंति
नतत्त्वदृष्ट्यासदेवसौम्येदमग्रआसीत्ब्रह्मैवसन्ब्रह्माप्येतिअनीशयाशोचतिमुह्यमानःअविद्यायामंतरेवर्तमानाःस्वयंधीराःपंडितंमन्यमानाःज
॥घ्नन्यमानाअपियन्तिमूढाःअंधेनैवनीयमानायथांधाःएकमेवाद्वितीयंब्रह्मएकएवहिभूतात्माभूतेभूतेव्यवस्थितःएकदाबहुधाचैव

दृश्यतेजलचंद्रवदित्यादिश्रुतिविरोधात् किंचवस्तुतःपुरुषस्यत्रिगुणमयत्वेसर्वमिदंसंगच्छेतनतुतदस्तीत्याह त्रिगुणमयःपुमानितिभिदायदबोध कृतात्वयीतित्रिगुणमयःपुमानित्यनेनहेतुनायाभिदाउपलक्षणमेतद्भिदादिसायस्मात्त्वयिविषयेअबोधकृतात्वद्विषयाज्ञानविजृंभितातर्हिकिम ज्ञानमस्तिवस्तुतःपुंसिनेवेत्याहततःअबोधात्परत्रपरेअसंगेअवबोधरसेज्ञानघनेसःअबोधोनभवेतनसंभवतीत्यर्थः॥२५॥मिथ्यातर्कसुकर्क शेरितमहावादान्धकारांतरभ्राम्यन्मंदमतेरमंदमहिमंस्त्वज्ज्ञानवर्त्मास्फुटं श्रीमन्माधववामनत्रिनयनश्रीशंकरश्रीपतेगोविंदेतिमुदावदन्मधुप तेमुक्तःकदास्यामहम्॥२५॥ननुयद्यसन्नोत्पद्येतयदिचत्रिगुणमयःपुरुषोनभवतितर्हीदंप्रपंचजातंपुरुषश्चपृथग्नास्तीत्युक्तंस्यात्कथंतर्हितयोःसत्त्व नमतीतिरत्तआहसदिवमनइतिमनःमनोमात्रविलसितमिदंत्रिवृत्त्रिगुणात्मकंप्रपंचजातंमसदेवसदिवविभातिकथमितिचेत्तत्राहत्वयीतित्वय्य धिष्ठानेअधिष्ठानसत्तयासहृत्मनीयतइत्यर्थःनकेवलमिदंकार्यंसदिवकिंतुआमनुजात् मनुजःपुरुषःअभिविधावाकारःपुरुषमभिव्याप्येतिपुरुषस्यापिपृथक् सत्त्वमतोनिर्मनोमात्रविलसितेसर्थःतथाचश्रुतिःअसतोधिमनोसृज्यतमनःप्रजापतिमसृजतप्रजापतिःप्रजाअसृजततन्हाइदंमनस्येवपरमंप्रतिष्ठितंय दिदंकिंचेतिनन्वात्मविदामपिविश्वंसदेवस्फुरतिअतःकथमसत्त्वादतआहसदभिमृशंतीतिआत्मविदस्त्वशेषमिदंभोक्तृभोग्यात्मकंविश्वमात्मतयेवसदभि

त्रिगुणमयःपुमानितिभिदायदबोधकृतात्वयिनततःपरत्रसभवेदवबोधरसे॥२५॥सदिवमनस्त्रिवृत्त्वयिविभात्यसदा मनुजात्सदभिमृशंत्यशेषमिदमात्मतयात्मविदः॥नहिविकृतिंत्यजंतिकनकस्यतदात्मतयास्वकृतमनुप्रविष्टमिदमात्मत याऽवसितम्॥२६॥तवपरियेचरंत्यखिलसत्त्वनिकेततयातउतपदाक्रमंत्यविगणय्यशिरोनिर्ऋतेः॥

॥मृशंतिसदितिजानंतिआ त्मकार्यत्वात्नपृथगितिसर्थःतथाहियदुपादानकंयत्कार्यंभवतितत्तेनैवरूपेणप्रतीयतेउपादीयतेचेतिलोकाचारेणदर्शयतिनहिविकृतिमितिकनकस्यविकृ तिंकुंडलादिकंकनकार्थिनोनहित्यजंतिअत्रहेतुःतदात्मतयाकनकरूपत्वेनेत्यर्थःअतःस्वकृतमिदंविश्वमनुप्रविष्टंचपुरुषरूपमात्मतयैवावसितंनि श्चितं॥१३॥२६॥यत्सत्त्वतःसदाभातिजगदेतदसत्त्वतःसदाभासमसत्यस्मिन्भगवंतंभजामतं॥१३॥ननुसत्यंज्ञानमनंतंब्रह्मनेहनानास्तिकिंचनमृत्योः समृत्युमाप्नोतियइहनानेवपश्यतीत्यादिश्रुतिभिरेवंभूतस्यभगवतःप्रतिपादनात्तज्ज्ञानंसुकरमेवतिकिंकृतंभक्त्याअतआहतवपरियेचरंतीतितवेतिकर्म णिषष्ठीत्वांयेपरिचरंतिछंदसिव्यवहिताश्चेतिपच्छेदेनव्यवधानमदोषःकेनरूपेणाखिलसत्त्वनिकेततयाअखिलानिसत्त्वानिनिकेतोयस्यसतथातस्यभा वःतत्तातयासर्वभूतावासतयेत्यर्थःअतएवअविगणय्यतिरस्कृत्यतएवनिर्ऋतेर्मृत्योःशिरःमूर्धानंपदापादेनआक्रमंतिमृत्योर्मूर्ध्निपदंदधतीतितदं निगुच्यतइत्यर्थःयेपुनर्विमुखाःअभक्तास्तान्गिरावाचापशूनिवविबुधात्विदुषोऽपिपरिवयसेबध्नासिकृतस्त्वयिकृतसौहृदाःत्वयिकृतंसौहृदंप्रेमयैस्ते स्वहृदिस्थितंपुनंतिपवित्रयंतिआत्मानंअन्यानपिइतिशेषःनेतरेतथाचश्रुतिःतस्यवाकंतिर्नामानिदामानितस्येदंवाचातन्त्यानामभिर्दामभिःसर्वंसितं

तिअयमभिप्रायः सत्यमेवंभूतमात्मानं श्रुतयः प्रतिपादयंति तत्र च यद्यपि वस्तुनोऽपरोक्षत्वादपरोक्षमेव ज्ञानमुत्पद्यते तथाप्यसंभावनाविपरीतभाव नातिरस्कृतत्वान्मलिनचित्तेषु परोक्षमिव भवति नितरां परोक्षसंसारभ्रमनिवृत्तिसमर्थं भगवत्परिचर्यया तु सम्यगमलचित्तानां तत्प्रसादेन लब्धापरोक्ष ज्ञानानामयत्नत एव करकलितो मोक्ष इति तथा च श्रुतयः देहांते देवः परं ब्रह्म तारकं व्याचष्टे यमेवैष वृणुते तेन लभ्यः यस्य देवे परा भक्तिरित्याद्यः ॥१४।२६॥ तत्प तु नाप्यैः प्रपतंतु पर्वताग्रे टंतु तीर्थानि पठंतु चागमान् यजंतु यागैर्विवदंतु वादैर्हरिं विना नैव मृतिं तरंति ॥१४॥ ननु यद्यखिलसत्त्वनिकेतत्वेन भगवतः सेव्यत्व मुच्यते तर्हि त्वत्करणसंबंधात् कर्तृत्वभोक्तृत्वे प्रसज्येयातां न वस्तुतस्तथात्वमिति चेन्न हि जीवानामपि तत्तुल्यत्वमिति केन विशेषेण पुनः सेव्यसेवकत्वमिती मामाशंकां परिहरंत्यः अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं पुराणमित्याद्याः श्रुतयः स्तु वंतीत्याह त्वमकरण इति करणसंबंधरहित एवाखिलकारकशक्तिधरः अखिलानां प्राणिनां यानि कारकाणि करणानि इंद्रियाणि तेषां शक्तीर्धारयसि प्रवर्तयसीति तथा कुतः स्वराड् यतः स्वेनैव राजते दीप्यते न हि स्वतः सिद्धज्ञानशक्तेरिंद्रियापेक्षेत्यर्थः अतस्तव बलिमुद्वहंति पूजां कुर्वंति अजया अवि द्यया सहितास्तया वृतास्त्वित्यर्थः अनिमिषा देवा इंद्रादयः तत्पूज्या विश्वसृजो ब्रह्मादयोऽपि यथा सस्त्रीका एव किंकराः स्वामिनं सेवंते तथा विद्यायुक्ता देवा

परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पुनंति न ये विमुखाः ॥१४।२६॥ त्वमकरणः स्वराडखिल कारकशक्तिधरस्तव बलिमुद्वहंति समदंत्यजयानिमिषाः ॥ वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥१५।२७॥ स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्त ततः ॥

दयस्त्वामिति लोकोक्तिः समदंति च मनुष्यैर्दत्तं हव्यकव्यादिलक्षणं बलिं भक्षयंति अत्र दृष्टांतः वर्षभुजोऽखिलक्षितिपतेरिवेति यथा वर्षभुजः अखं डमंडलपतयोऽखिलक्षितिपतेर्महामण्डलेश्वरस्य स्वप्रजादत्तबलिभुजो बलिमुद्वहंति तद्वदिति कथं बलिमुद्वहंतीति तदाह विदधति यत्र ये त्वधिकृ ता भवतश्चकिताः इति त्वत्तो भीताः संतो यस्मिन्कर्मणि ये नियुक्तास्तत्तत्कुर्वंतीति त्वदाज्ञापालनमेव बलमुद्वहनमित्यर्थः तथा च श्रुतिः भीषास्माद्वा तः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेंद्रश्च मृत्युर्धावति पंचम इति ॥१५।२७॥ अनिंद्रियोऽपि यो देवः सर्वकारकशक्तिधृक् सर्वज्ञः सर्वकर्ता च सर्व सेव्यं नमामि तं ॥१५॥ न देवकारणप्रवर्तकमीश्वरं कारणपरतंत्रा जननाभंजनी तु युक्तं न केवलमिय देवकारणं ततन्नउत्पन्नत्वे नापि तत्परतंत्रत्वादिति वदं ति यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरंतीत्यादि श्रुतयः इत्याह स्थिरचरजातय इति हे विमुक्त नित्यमुक्त यदि तव अजया मायया विहरः विहारः क्रीडा भवति तदा स्थिरचरजातयः स्थिराश्च चराश्च जातयः जात्यालिंगिता देहा येषां ते जीवाः स्युः भवेयुः कथंभूतस्य तव ततः अजातः परस्य दूरे वर्तमानस्यासंगस्येत्यर्थः कथं विहार उदीक्षया ईक्ष

॥ णलेशेन ननु प्रलये लीनानां जीवानां कथं जन्म स्यात्तत्राह उत्थनिमित्तयुज इति ईक्षयैव उत्थितानि आ ॥

विर्भूतानिनिमित्तानिकर्माणितद्युक्तानिलिंगशरीराणिवानैर्गुण्यंतदितितथाननुकिंनिमित्तोत्थानेनमदिच्छयैवआविर्भवंतुनत्वपिवैषम्याभावात्‌वि षमसृष्टेरयोगादित्याहपरमस्येतितवपरमस्यउत्तमस्यपरमकारुणिकस्यवियतइवआकाशसदृशस्यसमस्येत्यर्थःकश्चिदपरःस्वीयःपरोऽस्वीयश्चन भवेत्‌नसंभवतीत्यर्थःअसद्वाइदमग्रआसीत्‌ततोवैसदजायतेत्यादिश्रुत्याशून्यपूर्वकत्वमिवप्रतीयतेतत्तदर्थंपुनर्विशिनष्टिशून्यतुलांदधतःशून्य साम्यंभजतःतदेवदर्शयितुंपुनर्विशिनष्टिअपदस्येतिनपद्यतेज्ञायतेइत्यपदःतस्यवाङ्मनसयोरगोचरस्येत्यर्थः॥१६॥२९॥त्वदीक्षणवशक्षोभमायाबो धितकर्मभिःजातान्संसरतःखिन्नान्नृहरेपाहिनःपितः॥१६॥एवंतावत्परमात्मनःसकाशात्‌अविद्याकृतकार्योपाधयस्तदंशाएवजीवाजाताःसंसरंतोभजंती त्युक्तम्‌तत्रयद्येकाविद्यातदाजीवस्याप्येकत्वादेकमुक्तौसर्वमुक्तिप्रसंगःअथनानाऽविद्यास्तर्हितस्यएवांशांतरेणसंसारानपगमादनिर्मोक्षइत्यादितर्कबा लेनवस्तुतएवनानात्मानःतत्रचतेषामणुत्वेदेहव्यापित्वंनस्यात्‌देहपरिमाणत्वेचमध्यमपरिमाणानांसावयवत्वेनानित्यत्वंस्यात्‌ अतःसर्वगतानित्या श्चेतिकेचनमन्यंतेतत्रनतावदुक्तदोषप्रसंगःअविद्याभेदेनतच्छक्तिभेदेनवाबद्धमुक्तव्यवस्थासंभवात्‌ईश्वरस्यतुनकेनापिअंशेनसंसारशंकेत्युक्तमे वमसिद्धंचात्मैक्यंसर्वश्रुतिषुकिंचेमंपक्षमंतर्यामिब्राह्मणमपिनसहतइत्याहअपरिमिताइतिवस्तुतएवानंताःध्रुवास्तेनैवरूपेणनित्याःसर्वगताश्च

नहिपरमस्यकश्चिदपरोनपरश्चभवेद्वियतइवापदस्यतवशून्यतुलांदधतः॥१६॥२९॥अपरिमिताध्रुवास्तनुभृतोयदिसर्व
गतास्तर्हिनशास्यतेतिनियमोध्रुवनेतरथाअजनिचयन्मयंतदविमुच्यनियंतृभवेत्सममनुजानतांयदमतंमतदुष्टतया॥१७
॥३०॥नघटतउद्भवःप्रकृतिपूरुषयोरजयोरुभययुजाभवंत्यसुभृतोजलबुद्बुदवत्‌॥ ६ ॥ ७ ॥ ६ ॥

ततनुभृतोजीवायदिस्युस्तर्हितेषांसमत्वात्‌शास्यतानघटतइतिकृत्वाहेध्रुवनियमोनियमनंत्वयानस्यात्‌इतरथातुघटेतइतिकथंयन्मयेउपाधिते यद्विकारमायंयज्जीवाख्यंअजनिजातंतत्तस्यस्वविकारस्यनियंतृनियामकंभवेत्‌अविमुच्यकारणतयाऽपरित्यज्यकिंततसममनुस्यूतंयत्‌ननुकिं यतच्छब्देर्ज्ञायतेचेदुच्यतांइदंतदितिअतआहअनुजानतांयदमतमितिजानीमइतिवदतांयदमतमविज्ञातप्रायंअविषयत्वात्‌तथाचश्रुतिः यस्यामतंतस्यमतंमतंयस्यनवेदसःअविज्ञातंविजानतांविज्ञातमविजानतांअवचनेनैवप्रोवाचसहतूष्णींबभूवेत्यादिकिंचमतस्यज्ञातस्य दुष्टतयादोषश्रवणात्‌तथाचश्रुतिःयदिमन्यसेसुवेदेतिदहरमेवापिनूनंत्वंवेत्थब्रह्मणोरूपंयदस्यत्वंयदस्यदेवेष्वित्यादितस्मादुक्तच्छब्दा ऽवद्योत्प्रमतर्क्यंकिमपिसर्वानुस्यूतत्वेनसमंनियंतृभवेदित्यर्थः॥१७॥३०॥अंतर्यंतासर्वलोकस्यगीतःश्रुत्यायुक्त्याचैवमेवावसेयःयःसर्वज्ञःस र्वशक्तिर्नृसिंहःश्रीमंतंतंचेतसैवावलंबे॥१७॥ननुयदिचपरमात्मनोजीवाजायंतइतिनियंतृनियम्यभावउच्यतेतथासतिजीवानामनित्यत्व प्रसंगेनप्रतिदिनंकृतनाशाऽकृताभ्यागमप्रसंगःस्यात्‌किंचतदामोक्षोनामजीवस्यस्वरूपहानिरेवस्यात्‌नचैतत्‌॥ ७ ॥

चुर्क्तं स्वप्रकाशानंदात्मनोः विद्याकृतानर्थनिवृत्तिमात्रस्य मोक्षत्वाभ्युपगमादित्याशंक्योपाधिजन्मनैव जीवानां जन्म उच्यते न स्वतो घटनादित्याह
न घट इति तत्र किं प्रकृते र्जीवरूपेणोद्भवः स्यात् पुरुषस्य वा उभयो र्वा आद्ये जीवानां जडत्वापत्तिः द्वितीये पुरुषस्य विकारित्वप्रसंगः अत एव न तृती
यदृत्या शंक्येनोक्तम् प्रकृतिपुरुषयोरुद्भवो न घटत इति श्रुत्याः जन्मप्रतिपादनादपीत्याह अजयोरिति तथा च श्रुतिः अजामेकां लोहितशुक्लकृष्णां ब
ह्वीं प्रजां जनयन्तीं सरूपां अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति उभयपुत्रा भवंतीति उभयं च तत् पुत्र्यत इति उभयपुत्रं बहुप
रस्पराध्वस्तमिति यावत् तेन प्रसुभूतः प्राणाद्युपाधयो जीवा जायंत इत्यर्थः जलबुद्बुदवदिति यथा केवलेनानिलेन सलिलेन वा जलबुद्बुदा न भवंति किं
तु मिलिताभ्यां तद्वत् तत्र च यथा निलो निमित्तं जलमुपादानम् एवमत्रापि प्रकृतिर्निमित्तं पुरुष उपादानम् तस्माद्वा एतस्मादात्मन आकाशः संभूतः
सोऽकामयत बहु स्यां प्रजायेयेति यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंत्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एव आ
त्मानो व्युच्चरन्तीत्यादिषु श्रुतिषु चेतनाचेतनप्रपंचस्य परमात्मोपादानत्वश्रवणात् न च विकारित्वं परिणामानंगीकारात् केचित्तु नः परिणाममंगी
कृत्यात्मनो विकारभिया विपरीतं निमित्तोपादानभावमिच्छंति सर्वथा तावत्प्रकृतिपुरुषैक्याद्भवतीति सिद्धम् तदेकमेवाद्वितीयं ब्रह्म अजामेकां अवि
नाशी वा अरेयमात्मेत्यादिश्रुतिबलादुत्पत्तिश्रवणाच्च जीवानामौपाधिकमेव जन्म न स्वत इत्युक्तम् उपाधिलयेन परमात्मनि पुनर्लयश्रवणात् अपि न वा

त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥ १८ ॥ ३१ ॥ नृषु तव मायया भ्रमममीष्ववगत्य
भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ॥ कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम्

स्तवं जन्मेत्याह त्वयि त इति त्वयि कारणात्मनि त इमे जीवास्तत इति यतो न वास्तवं जन्म तस्मात् द्विविधनामगुणैरनेकप्रकारकार्य्योपा ((म। १०। ३१
धिभिः सह निलिल्युः लीना बभूवुः तत्र सुषुप्तिप्रलययोर्मधुन्यशेषरसा इव लीयंते यथा मधुनि सकलकुसुमरसा विशेषतः अनुपलक्ष्यमाणा अपि सामा
न्येनोपलक्ष्यंते एवं स्वापादौ विशेषमात्रलयात् कारणस्याविद्यमानत्वात् सामान्यतो वर्त्तन्ते मुक्तौ तु कारणस्यापि लयात् त्वयि परमे निरुपाधौ सरित इवा
र्णवे लीयंत इति विवेकः तथा च श्रुतयः यथा सौम्य मधु मधुकृतो निस्तिष्ठंति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां रसं गमयंति ते यथा न त
त्र विवेकं लभंते अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति यथा
नद्यः स्यंदमानाः समुद्रेऽस्तं गच्छंति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमित्याद्याः ॥ १० ॥ ३१ ॥ यस्मिन्नुद्यद्विलयमपि
यद्भाति विश्वं लयादौ जीवोपेतं गुरुकरुणया केवलात्मावबोधे अत्यंतांतं व्रजति सहसा सिंधुवत्सिंधुमध्ये मध्येचित्रं त्रिभुवनगुरुं भावये तं नृसिंहम्
॥ २० ॥ ननु एवं तावत्सर्वेश्वराज्जीवा जायंते तद्दर्शनेन च कर्माणि कुर्वन्ति पुनस्तत्र लीयंत इति संसारचक्रे परिभ्रमणमुक्तम् इदानीं तन्निवृत्तये परीत्य भूतानि
परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेशेत्याद्या भगवदनुवृत्तिं विदधतीत्याह नृषु तव मायया इति नृषु
जीवधर्मीषु तव मायया भ्रमम् उक्तलक्षणम् अवगत्य ज्ञात्वा सुधियः भृशं त्वयि अभवे भवनिवर्त्तके भावं स्वभावमनुप्रभवं निरंतरं दधति कुर्वन्ति कीदृशं भ्रमम्

किंअतआहकथमितिअनुवर्ततांअनुवर्तमानानांत्वामेवशरणंभजतांभवभयंसंसारभयंकथंभवेत्नकथंचिदपीत्यर्थःकुतःयद्यस्मात्तवभ्रूकु
टिःभ्रूभंगरूपस्त्रिणेमिस्त्रिनेमिःयद्वावच्छेदाःशीतोष्णावर्षाकालायस्यसंवत्सरात्मकस्यकालस्यसःअभवच्छरणेषुनभवान्शरणंरक्षितायेषां
तेष्वेवभयंजन्ममरणादिलक्षणंसृजतिकरोतिअतएवंभूतंसंसारमाकलय्यतन्निवृत्तयेसुधियस्त्वयिभावंदधतीति।१९।३३।संसारचक्रक्रकचैर्वि
दीर्णमुदीर्णनानाभवतापतप्तम्।कथंचिदापन्नमिहप्रपन्नंत्वमुद्धरश्रीनृहरेनृलोकं।१९।सचभगवतिभावोमनोनियमेसतिभवतिसोपिगुरूपसद
नादितिगुरूपसदनंविदधनितहिज्ञानार्थंसगुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियंब्रह्मनिष्ठंआचार्यवान्पुरुषोवेदनैषातर्केणमतिरपनेयाप्रोक्तान्ये
नैवसुज्ञानायप्रेष्ठेत्याद्याःश्रुतयइत्याहविजितहृषीकवायुभिरितिविजितानिहृषीकाणींद्रियाणिवायुश्चप्राणोयैस्तैरपिअदांतमनस्तुरंगंअदांत
मदमितंमनएवतुरगःदुर्दमत्वसाम्यात्तंयेयंतुनियंतुंयतंतिप्रयतंतेअतिलोलमनिचंचलंगुरोश्चरणंसमवहायअनाश्रित्यतेउपायेषुखिद्यंतेक्लि
श्यंतीत्युपायखिदःसंतःव्यसनशतान्विताःबहुव्यसनाकुलाइहसंसारसमुद्रेसंतिभिष्ठंतिदुःखमेवमाप्नुवंतीत्यर्थःहेअजअकृतकर्णधराअस्वीकृतना
विकावणिजोयथातद्वत्उक्तंचनृदेहमाद्यंसुलभंसुदुर्लभंप्लवंसुकल्पंगुरुकर्णधारंमयानुकूलेननभस्वतेरितंपुमान्भवाब्धिंनतरेत्सआत्महाप्राक्तैः

विजितहृषीकवायुभिरदांतमनस्तुरगंयइहयतंतियंतुमतिलोलमुपायखिदः॥व्यसनशतान्विताःसमवहायगुरो
श्चरणंवणिजइवाजसंत्यकृतकर्णधराजलधौ।२०।३३।स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयिसतिकिंनृणांश्रय
तआत्मनिसर्वरसे।इतिसदजानतांमिथुनतोरतयेचरतांसुखयतिकोन्विहस्वविहतेस्वनिरस्तभगे।२१।३४।भुवि
पुरुपुण्यतीर्थसदनान्यृषयोविमदास्तउतभवत्पदाम्बुजहृदोऽघभिदंघ्रिजलाः॥((संस्कृतैश्चैवगद्यपद्याक्षरैस्तथादेशभाषा
दिभिःशिष्यंबोधयेत्सगुरुःस्मृतःगुरुणोपदर्शितभगवद्भजनसुखानुभूतौतुस्वतएवमनोनिश्चलंभवतिनान्यथेतिभावः।२०।३३।यदापरानंदगु
रोभवत्पदेपदंमनोमेभगवल्लभेत।तदानिरस्ताखिलसाधनश्रमःश्रयेयसौख्यंभवतःकृपातः।२०।परीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमा
यात्नास्त्यकृतःकृतेनतथायदासर्वेप्रमुच्यंतेकामायेस्यहृदिस्थिताःअथमर्त्योमृतोभवत्यत्रब्रह्मसमश्नुतइत्याद्यावैराग्यमंगविदधतीत्याहस्वजन
सुतेतिआत्मादेहःधामगृहंअसुःप्राणःस्वजनादिभिःकिंसर्वरसेसर्वेरसाःसुखानिविद्यंतेयस्मिन्तस्मिन्त्वयिपरमानंदेतस्यैवानंदस्यान्यानिभू
तानिमात्रामुपजीवंतीतिश्रुतेःश्रयतःत्वांसेवमानस्यपुंसःआत्मनिसतिनृणान्तुच्छैरेतैःकिंकउपयोगइतिसत्सत्यंपरमार्थसुखमजानतांअतएवमि
थुनतःस्त्रियामिथुनीभूयरतयेमायासुखायचरतांप्रवर्तमानानांकर्मणिषष्ठ्येयोअजानतश्चरतःपुरुषान्कोनुअर्थःसुखयतिआनंदयतिनकोऽपीत्यर्थः
देहसंसारकथंभूतेस्वविहतेस्वतएवनश्वरेस्वनिरस्तभगेस्वतएवगतसारपाठांतरेतुकोन्वित्यस्यैनहिशोषणद्वयम्अतस्त्वद्भजनमेवोचितमित्यर्थः
[illegible]मनसोहिभवान्योज्ञात्मारमानंदविहीनःआत्मेवकिमतःकृत्यंतुच्छदारसुतादिभिः।२१।एवंतुरूपदेशेनतस्यमनागमसारासारविवेकेन

पपत्तिभिः सम्यगवधारयितुं तीर्थसदनानि मुनयः पर्य्यटंतीति भ्रांतत्वमतमित्यादि श्रुत्यर्थमाह मुनिपुरुपुण्यतीर्थसदनानीति ते उक्तलक्षणाः ऋषयो विमदाः

निरहंकाराः यतो भवत्पदांबुजहृदः भवतः पदांबुजं हृदि येषां ते अतः स्वयमेव अघभिदः अघभिदंघ्रिजलाः अघभिदंघ्रिजलं येषां ते उत अपि तथाविधा अपि पुरूणि ब
हूनि पुण्यानि तीर्थानि सदनानि च क्षेत्राणि तान्यद्योपासते सेवंते प्रायस्तत्रैव महत्संगो भवतीति अथवा पुरु अधिकं भगवद्भजनलक्षणं पुण्यं येषां तानि च ता
नि तीर्थानि च गुरवः महांतः इत्यर्थः तेषां सदनानि आश्रमान् यथाहामरसिंहः निपानागमयोस्तीर्थमृषिजुष्टजले गुराविति न पुनः पुरुषसारहरावसथान् पुरुषा
णां सारं विवेकस्थैर्य्यधैर्य्यक्षमाशांतिप्रमुखं हरंतीति तथा ते च ते आवसथा गृहास्तान् न च तेषां गृहादिभवक्लेशेन सुखापेक्षेत्याह यदि सकृन्म
नस्त्वयि य आत्मनि नित्यसुखे इति सकृदपि त्वयि येमनो दधतीति ते पिगृहाद्यासक्ता न भवंति किं पुनरेवंभूता इत्यर्थः॥२२॥३५॥ ग्रुं च नगतं रंगसंगमनिशं त्वामेवसं
चिंतयन् संतः संति यतो यतो मतमदास्तानाश्रमानावसन् नित्यं तन्मुखपंकजाद्विगलितं त्वत्पुण्यगाथामृतस्रोतः संप्लवसंप्लुतो नरहरे न स्यामहं देहभृत्॥
॥२२॥ ननु चाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामित्युक्तानां क्रियार्थेन समन्वय इति तत्र तत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानादुपनिषदामपि त
देवयुक्तम् यथा क्तं तत्र वार्तिककृता एतेन कर्तृत्वर्थे कर्तृमति पादेनेनोपनिषदां नैराकांक्ष्यं व्याख्यातमिति न एकमेवाद्वितीयं ब्रह्मविज्ञानमानंदं ब्रह्म अच
स्वरश्रात्रमित्येवं तद्विपरीतात्मप्रतिपादनान्न ह्यद्वितीयपरमानंदरूपस्य कर्मांगत्वं प्रयुज्यते अनत्नुमतं चैन हि तार्किककृतः कथं सर्वत्रैव हि विज्ञानसंस्कार

दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखेन पुनरुपासते पुरुषसारहरावसथान्॥२२॥३५॥ सत इदमुत्थितं सदिति चेन्ननु तर्क
हतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक् व्यवहृतये विकल्प इषितोंधपरंपरया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान्॥
॥२३॥३६॥

त्वेन गम्यते परांगं चात्मविज्ञानादन्यत्रेत्यवधार्य्यतामिति नेनैवोक्तत्वात् एतदर्थमेव मननाय मुनयः पर्य्यटंतीत्युक्तं न च तावद्वैतस्य सत्यत्वे भवे
दप्येवं तद्वक्तुं न संभवतीति प्रश्नोत्तराभ्यां मननेन तत्त्वावधारणप्रकारमाह सत इदमुत्थितं सदिति च दिति इदं विश्वं धर्मि सदिति साध्यो धर्मः सत उत्पन्नत्वा
त् हेतुः यद्यत उत्पन्नं तत्तदात्मकमेव दृष्टम् यथा कनकादुत्पन्नं कुंडलादि तदात्मकं न हि इति तत्र यदि सदभेदः साध्यते तदा उपादानत्वनिर्देशेनैव भेदप्रतीते
र्विरुद्धो हेतुरित्याह ननु तर्कहतमिति न तु नाभेदं साधयामः किंतु तदुत्पन्नत्वेन कुंडलादिवद्भेदं प्रतिषेधयामः तत्र अभेद एव स्यादित्याशंक्यानैकांतिकत्वे
न दूषयति व्यभिचरति क्व चेति पितृपुत्रादिषु मुद्गरघटप्रध्वंसादिषु च तथादर्शनादिति भावः ननु तदुत्पन्नत्वं नाम तदुपादानत्वं न तु तन्निमित्तत्वं अतो ना
नैकांतिकत्वमित्याशंक्य दूषयति क्व च मृषेति गुणोपादानस्यापि फणिनो न गुणत्वं किंतु मिथ्यात्वं अन्यथा कुंडलादिवद्बाधप्रसंगात् अतः पुनरपि अनैकां
तिकत्वमेवेति भावः ननु न तत्र केवलं गुणमात्रं फणिन उपादानं किंतु अविद्यायुक्तं तथाभूतस्य चावस्तुत्वात् युक्तं फणिनो मिथ्यात्वमित्याशंक्य तत्तुल्यमत्रापी
ति दूषयति न तथोभययुगिति अयमर्थः अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वं एवंभूतस्य च नैव वस्तुसत्त्वं अतः सदुपादानत्वमसिद्धमिति न वस्तुसत्त्वं प्रपंचस्ये
ति ननु माभूदनेन हेतुना प्रपंचस्य सत्त्वं हेत्वंतरेण तु साधयामः तथा हि सदिदं अर्थक्रियाकारित्वात् न यदेवं न तदेवं यथा शुक्तिरजतमित्यत आह व्यवहृतये वि
॥ कल्प इषित इति व्यवहाराय अर्थक्रियार्थं विकल्पो भ्रम इषितः इष्ट एव कूटकार्षापणादिनापि क्वचिद्व्यवहा॥

रदर्शनात् नन्वेकत्रसतोन्यत्रारोपो भ्रमः प्रसिद्धः असंल्लासत्वे कथं प्रपंचो भ्रमः स्यात् सत्वे वा नाऽद्वैतसिद्धिः उक्तं च भट्टैः अध्यस्यते यत्र पुष्पत्वमसत्कथमवस्तु निमित्तानेगुणसत्ताकमध्यारोप्यतवानवेतिनेत्याह अंधपरंपरयेति अंधपरंपरया यो विकल्पस्तद्रूपत्वन्वयः अयंभावः संस्कारजन्यो भ्रमः संस्कारसिद्धयेपूर्वप्रतीतिमात्रमपेक्षते न वस्तुसत्वं प्रतीतौ सत्यां वस्तुसत्वाभावेन ब्रह्मव्यतिरेकादर्शनात् अतोऽनादित्वात् पूर्वपूर्वभ्रमदृष्टस्योत्तरोत्तरआरोपो भविष्यतीसंधपरंपरान्यायेन तेनव्यवहारः सेत्स्यतीत्यप्रयोजकोहेतुरितिनन्वसत्वंहदेवात् मोस्याजिनःसुकृतंभवति अपाम सोममममृता अभूमेत्यादिभिः कर्मफलस्यनित्यत्वप्रतिपादनात् सत्वं नघटतेनहिनित्यं वस्तुअसद्भवति तस्माहेदप्रतिपादितत्वाद्वैतसदेवेत्याशंक्याह भ्रमयतीति हे भगवन् तत्तव भारती विरलक्षणा उरुचयामाशस्त्यमात्रेविध्येकवाक्यत्वात् ———— अन्यथा वाक्यभेदप्रसंगात् तद्यथेहकर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इति न्यायोपबृंहितश्रुत्यंतरविरोधाच्च अतः कर्मजडानामिदं भ्रममात्रमिति एतेनैव तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादीनामप्यन्यपरत्वं दर्शितं भवति ॥ २४ ॥ उद्भूतं भवतः सतोपि भुवनं सन्नैव सर्प्पस्रजः कुर्व्वत् कार्य्यमपीह कूटकनकं वेदोपि नैवं पुरः अद्वैतं तव सत्परं तु परमानंदं पदं तन्मुदा वंदे सुंदरमिंदिरानंदहे राम मुंच मोमानतं ॥ २३ ॥ तदेवं प्रपंचस्य सत्वे साधकं नास्तीत्युक्तं इदानीमसत्वे सृष्टिप्रलयश्रुत्युपपत्तिवाद्यमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयं

नयदिदमग्र आस न भविष्यदतो निधनादनुमितमंतरा त्वयि विभाति मृषैकरसे ॥ अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयंत्यबुधाः ॥ २४ ॥ स यदजया त्वजामनुशयीत गुणांश्च जुषन् भजति सरूपतां तदनु मृत्युमपेतभगः ॥

इत्याद्यास्त न्मूलं चानुमानं प्रमाणमित्याह नयदिदमिति यद्यस्मादिदं विश्वमग्रे सृष्टेः पूर्व्वं न आस न आसीत् सदेव सोम्येदमग्र आसीत् आत्मा वा इदमेक एवाग्र आसीदित्यादिश्रुतेः न च निधनात् प्रलयात् अनु अनंतरं भविष्यद्भविष्यति नासदासीन्नो सदासीत्तदानीमित्यादिश्रुतेः अंतः कारणात् अंतरा मध्येपि एकरसे केवले त्वयि मृषा मिथ्यारूपमेव विभातीति निमित्तेन निश्चितं यत एवमतः श्रुत्या द्रविणजातिविकल्पपथैर्द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पाः भेदाः घटकुंडलादयस्तेषां पंथानो मार्गाः प्रकाराः तैरुपमीयते सदृशं नयानि रूप्यते यथा तत्र कार्याकारणांनामधेयमात्रतनाकारणं मृदादेवतु सत्यं तथाऽऽप्याकाशादीनां नाममात्रता ब्रह्मैव सत्यं तथा च श्रुतिः वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं यथा सोम्यैकेन मृत्पिंडेन सर्व्वं मृन्मयं विज्ञातं भवति यथा एकेन लोहमणिना सर्व्वं लोहमयं विज्ञातं स्यात् तथा एकेन नखनिकृंतनेन सर्वं कार्ष्णायसमित्यादि तस्माद्दृश्यसत्वे प्रमाणाभावाद्सत्वे प्रमाणस्य विद्यमानत्वात् वितथं मनोविलासमृतं सत्यमिति ये अवयंति जानंति ते अबुधाः अज्ञा इत्यर्थः अत्रेवं प्रयोगः विवादाध्यासितं न सत् आद्यंतयोरविद्यमानत्वात् विकारत्वाद्दृश्यत्वाच्च शुक्तिरजतादिवत् इदं त्वन्वयेदृष्टांतः आत्मवत्वेति व्यतिरेके दृष्टांतः ॥ २४ ॥ अमुकटकुंडलकंकणकिंकिणीपरिणतकनकं परमार्थतः महद्दहंकृति त्वमसत्यं तथा नवहिन न परमाये तेः ॥ ... नानामनीत्यवनतेः सतां ... चिन्मयसं ... धर्मो ... दिकिमपराद्धजीवन्नयनः ॥

अयंसंसरतिकिंवाबहुपुण्यमीश्वरस्यपतोनित्यमुक्तःकिंविषयंचतदाकर्म्मकांडमित्यपेक्षायांजीवेश्वरविशेषंद्वासुपर्णासयुजासखायासमानंवृक्षंपरिष
स्वजातेतयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीतिअजामेकांलोहितशुक्लकृष्णांइत्याद्यावदन्तीत्याहसयदजयेतिसतुजीवःयद्यस्मादजया
मायया अजामविद्यांअनुशयीतआलिंगेत्ततःगुणांश्चदेहेन्द्रियादीनजुषन्सेवमानआत्मतयाध्यासन्तदनुतदनंतरंसरूपतांतद्धर्मयोगंचजुषन्
अपेतभगःपिहितानन्दादिगुणःसन्मृत्युंसंसारंभजतिमाप्नोतितद्विषयमेवचकर्मकांडमितिभावःत्वमुतत्वंतुजहासितामजांमायाम्ननुसामर्थ्यंवा
त्तिकथंत्यागस्तत्राहअहिरिवत्वचमितिअयंभावःयथाभुजंगःस्वगतमपिकंचुकंगुणबुद्ध्यानाभिमन्यतेतथात्वमजामन्नहिनिरंतराल्हादिसंवित्कामध्ये
तुवंरपनेरजयाहत्स्वमितितामुपेक्ष्यसइतिकुतएतत्तत्राहआत्तभगःनित्यमाप्तैश्वर्यःमहसिपरमैश्वर्येअष्टगुणितेअणिमाद्यष्टविभूतिमहीयसेपूज्य
सेविराजसेकथंभूतःअपरिमेयभगःअपरिमितैश्वर्यःनह्यन्येषामिवदेशकालादिपरिच्छिन्नंतवाष्टगुणितमैश्वर्यंअपिचपरिपूर्णस्वरूपात्तवाधित्वाद
परिमितमित्यर्थः॥२५॥३८॥न्नुसंतीतववीक्षणांगणगताकालस्वभावादिभिर्भावान्सत्वरजस्तमोगुणमयानुन्मीलयंतीबहूनंगामाक्रम्यपराशिरस्यति
भरंसमर्द्यंत्यातुरंमायातेशरणंगतोस्मिन्नृहरेत्वामेवतावारय॥३८॥एवंतावदुक्तसाधनकर्त्वेनयेभगवंतंभजंतितेमृत्युंतरंतिइतरेसंसरंतीत्युक्तमद्

त्वमुतजहासितामहिरिवत्वचमात्तभगोमहसिमहीयसेष्टगुणितेऽपरिमेयभगः॥२५॥३८॥यदिनसमुद्धरंतियतयोहृदिका
मजटादुरधिगमोऽसतांहृदिगतोऽस्मृतकंठमणिः॥असुतृपयोगिनामुभयतोप्यसुखंभगवन्ननपगतांतकादनधिरूढपदा
द्भवतः॥२६॥३९॥त्वदवगमीनवेत्तिभवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हिदेहभृतांचगिरः॥

इदानींयेबहिःसङ्गंपरित्यज्यभगव
न्मार्गेप्रवृत्ताअपिकथंचिदंतर्बोनाशिनःकामान्नसंचंतितेनभगवंतंप्राप्नुवंतिनचेहसुखंलभंतेकेवलंक्लेशयोनीरेवमाप्नुवंतीतितान्शोचन्कामानयःका
मयतेमन्यमानःसकर्मभिर्जायतेतत्रतत्रेत्यादिश्रुत्यर्थमाहयदिनसमुद्धरंतीतिहेभगवन्येयतयोहृदिस्थिताःकामजटाःकामस्यजटाःमूलानिवास
नाःयदिनसमुद्धरंतिनोत्पाटयंतितेषामसतांभवान्हृदिगतोपिदुरधिगमःदुष्प्रापःकथंअस्मृतकंठमणिःविस्मृतोयःकंठमणिःतत्तुल्यःसयथाकंठेवर्त
मानोप्यस्मृतश्चेदप्राप्तइवभवतितद्वदितिनकेवलमेतावन्किंतुअसुतृपयोगिनामिंद्रियतर्पणपराणांयोगच्छद्मनामुभयतोऽप्यसुखंइहामुत्रचदुः
खमेवतदाहअनपगतान्तकात्अनिवृत्तान्मृत्योःलोकाराधनधनार्जनादिक्लेशात्भोगवैभववाकल्यभयाच्चेहतावद्दुःखंभवतईश्वरादपिदुःखंकथंभूतात्
अनधिरूढपदात्अनधिरूढंपदंस्वरूपंयस्यतस्मात्त्वत्स्वरूपमप्राप्यभावादविद्यावहिर्मुखत्वेनप्राप्तनिजधर्मातिक्रमनिबंधनत्वद्दण्डरूपनरकप्राप्तेरमु
त्राप्यसुखमित्यर्थः॥२६॥३९॥दंभन्यासमिषेणवंचितजनंभोगैकचिंतातुरंसंमुह्यंतमहर्निशंविरचितोद्योगक्लमैराकुलम्आज्ञालंघिनमज्ञमज्जजनतासे
मानंनासनमर्हदीनानाथदयानिधानपरमानंदप्रभोपाहिमाम्॥२६॥ननुयतेर्नकिमपिकृत्यमस्तिप्रारब्धमेवसुखोपभोगेनापक्षीयतेअतःकिमितिवृथाशश्यते

नकर्म्मणावर्द्धतेनोकनीयानित्यादितत्राहत्वदवगमीतिहेसगुणषड्गुणैश्वर्य्ययुक्तात्वदवगमीत्वत्ज्ञानवान्भवदुस्थशुभाशुभयोर्भवतःकर्म्मफलदातु
रीश्वरहेतोःउत्थयोराविर्भूतयोःशुभाशुभयोःप्राचीनयुगपदायुग्मपकर्मणोःफलभूतान्गुणविगुणान्वयान सुखदुःखसंबंधाननवेत्तिनानुसंधत्तेनहि
तदानीचदेहभृतांदेहाभिमानिनांप्रवृत्तिनिवृत्तिकरीगिरःविधिनिषेधलक्षणानवेत्तिविगतदेहाभिमानतयाकार्य्याकार्य्यबोधाभावात् ननियुज्यतइ
त्यर्थः युक्तंचैतत् यतःकारणात् मनुजैःअन्वहंश्रवणभृतःअनुदिनंश्रवणेनचेतसिधृतस्त्वंतेषामपवर्गगतिंअपवर्गरूपागतिर्भवसिकथंश्रवणभृतः॥
अनुयुगंप्रतियुगंयागीतपरंपराउपदेशसंततिस्तयासंप्रदायानुसारेणेत्यर्थः एतदुक्तंभवतियेतावत्तत्त्वज्ञानिनः नतेषांकर्म्माधिकारशंकाऽपियेचान
वरतत्वकथाश्रवणादिनिष्ठास्तेषामप्यासन्नभवस्यदानांविधिनिषेधबाधःइतरेषांतुयोगच्छद्मनेन्द्रियलालनलालसानामुभयतोऽप्यसुखमिति॥२७
॥४०॥अवगमेनवमेदिशमाधवस्फुरतियन्नसुखासुखसंगमः श्रवणवर्णनभावमथापिवानहिभवामियथाविधिकिंकरः॥२७॥त्वदवगमीनवेत्तिसुख
दुःखेनचविधिनिषेधावित्युक्तंतत्रननुकथमवगंतुंशक्यतेदुरधिगमत्वस्योक्तत्वादित्येवमाशंक्यसत्यमेवमनवगाह्यमहिम्नोवाङ्मनसागोचरत्वाद्वि
षयत्वेनैवज्ञानमितिदर्शयन्यदूर्ध्वंगार्गिदिवोयदर्वाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंभवच्चभविष्यच्चेत्यादिश्रुतिप्रतिपादितमपरिमितमहिमान

अनुयुगमन्वहंसगुणगीतपरंपरयाश्रवणभृतोयतस्त्वमपवर्गगतिर्मनुजैः॥२७॥४०॥द्युपतयएवतेनययुरंतमनंततया
त्वमपियदंतराऽण्डनिचयाननुसावरणाःखइवरजांसिवांतिवयसासहयच्छ्रुतयस्त्वयिहिफलंत्यतन्निरसनेनभवन्नि
धनाः॥२८॥४१॥श्रीभगवानुवाच॥इत्येतद्ब्रह्मणःपुत्राआश्रुत्यात्मानुशासनम्।सनंदनमथानर्चुःसिद्धाज्ञात्वात्मनोगतिं

माहद्युपतयएवेतिहेभगवन्तेअंतंद्युपतयःस्वर्गादिलोकपतयोपिब्रह्मादयोनययुःनप्रापुःतत्कुतःयतःनवहस्तत्किमपित्वनभवसिआस्तांद्युपत
योनययुरितियत्यस्मात्त्वमपिआत्मनोअंतंनयासिकुतस्तर्हिसर्वज्ञतासर्वशक्तितावाअतआहअनंततयाअंताभावेननहिशशविषाणज्ञानंस
र्वज्ञतांदस्मासिर्वाशक्तिवैभवंविहंतिअनंतत्वमेवाहयदंतरेतियस्यतवअंतराभध्येनतुअहोसावरणाःउत्तरोत्तरंदशगुणसप्तावरणयुक्ताअण्डनिच
याब्रह्माण्डसमूहाःवांतिपरिभ्रमंतिवयसाकालचक्रेणखेरजांसीवसहएकदैवनतुपर्यायेणहियस्मादेवंअतःश्रुतयस्त्वयिफलंतितात्पर्य्यवृत्त्या
पर्य्यवस्यंतिनतुसाक्षादिदंतिअयमेतावानितिसगुणस्यगुणानन्त्यात् निर्गुणस्यचागोचरत्वात्कथंतर्ह्यपदार्थेतात्पर्य्यमितितत्रविधिमुखवाक्येभ
वेदयंनियमःपरार्थस्यैववाक्यार्थत्वमितिनिषेधमुखेनतुनायंनियमइत्याहअतन्निरसनेनेतिअन्यदेवतद्विदितात् अथोअविदितादपिअन्यत्रधर्मादन्य
त्राधर्मात् अन्यत्रास्मात्कृताकृतात् अस्थूलमनण्वित्यादिप्रकारेणलक्षणयाचतत्त्वमसीत्यादयःपर्य्यवस्यंतिनचवाच्यंनिषेधैःशून्यमेवज्ञाप्यतइ
तियतःभवन्निधनाःभवतित्वयिनिधनंसमाप्तिर्यासांतास्तथानहिनिरवधिनिषेधःसंभवतियतोऽवधिभूतेत्वयिफलंतीत्यर्थः॥२८॥४१॥द्युपतयोविदु
॥रंतमनंततेनचभवान्नगिरःश्रुतिमौलयः त्वयिफलंतियतोनमइत्यतोजयजयेतिभजेनवतत्पदं॥२८॥४२॥

इत्यशेषसमाम्नायपुराणोपनिषद्रस इति सर्वश्रुतिपुराणरहस्यतात्पर्यमित्यर्थः ॥४३॥ ब्रह्मदायाद इति ब्रह्मैव दायमिव अमयत्वमाप्य अतिसेवत इ-
ति तथा ब्रह्मपुत्रेति वा ॥४४॥ पूर्णः कृतकृत्यः श्रुतमर्थं मनसि धारयन् धीरव्रतः नैष्ठिकः ॥४५॥ नम इति श्रीकृष्णावतारतया नारायणं नमस्यति उक्तं हि
एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयमिति ॥४६॥ साक्षात्पितुरिति योनिव्यवधानं विना जनकस्य अग्निमथनावसरे कथंचिदरणीरेतः पतितं मम-
थ व्यासस्तदेव तनत उत्पन्नः शुक इति हि वदंति ॥४७॥४८॥४९॥ समस्तवेदस्तुत्यर्थसंग्रहात् स्मारयति योऽस्येत्यैक्षक इति यः अस्य विश्वस्य उत्प्रेक्षकः
एवमिदमनुशायिनां समस्तपुरुषार्थसिद्धये सृष्टिस्थितिप्रलयादिनापणीयमित्यालोचक इत्यर्थः अनेन निमित्तत्वमुक्तम् एवमालोच्यास्यादि
मध्यनिधने आदिर्जन्म मध्यः पालनं निधनं अंतः एतेषु कर्मसु यो वर्तते अनेनोपादानत्वमुक्तम् ननु प्रकृतिपुरुषयोरुपादाननिमित्तत्वं प्रसिद्ध-

इत्यशेषसमाम्नायपुराणोपनिषद्रसः ॥ समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥४३॥ त्वं चैतद्ब्रह्मदायाद श्रद्धयात्मानु-
शासनम् ॥ धारयंश्चर गां कामं कामानां भञ्जनं नृणाम् ॥४४॥ श्रीशुक उवाच ॥ एवं स ऋषिणादिष्टं गृहीत्वा श्रद्धयात्मवान्
॥ पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः ॥४५॥ श्रीनारद उवाच ॥ नमस्तस्मै भगवते कृष्णायामलकीर्तये यो धत्ते सर्वभूता-
नामभवायोशतीः कलाः ॥४६॥ इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः ॥ ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥४७
सभाजितो भगवता कृतासनपरिग्रहः ॥ तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥४८॥ इत्येतद्वर्णितं राजन् यन्नः प्रश्नः
कृतस्त्वया ॥ यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि श्रुतिश्चरेत् ॥४९॥ योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो यः
सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः ॥ यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयो-
निमभयं ध्यायेदजस्रं हरिम् ॥५०॥ सत्यमनयोरपि तत एवोद्भूतत्वात् मूलकारणं स एवेत्याह योऽव्यक्तजीवेश्वर इति प्रवेशनियमने
दर्शयति यदिति पूर्वोक्तप्रकारेणेदं सृष्ट्वा यदर्थमेतत्सृष्टं तेन ऋषिणा सृष्टे कार्ये अहमिति दर्शनादृषिर्जीवः तेन सहानुप्रविष्टः पुरः शरीराणि त-
स्य भोगायतनानि चक्रे ताः पुरः शास्ति तस्य भोगं ददत् परिपालयते उपासकस्य च कैवल्यरूपो भवतीत्याह यं संपद्येति यं संपद्य प्राप्यानुशयी अन्व-
नुदण्डवत् प्रणामैश्चरणमूले शेते इति तथा स जीवः अजां कार्यकारणलक्षणामविद्यां त्यजति ननु ब्रह्मसंपन्नस्यापि जीवस्य ननु संबंधो दृश्यते अत
आह सुप्तः कुलायं यथेति अयं भावः यथा सुप्तः शरीरं वर्तमानं अन्ये पश्यंति स तु नात्मानं तथा पश्यति एवं जीवन्मुक्तमप्यन्ये देहवंतं पश्यंति स तु न किंचित्प-
श्यतीति तं हरिं अजस्रं अनवरतं ध्यायेत् किमित्यत आह अभयं न भयं यस्मात् भयनिवर्तकमित्यर्थः कुत एतत् कैवल्यनिरस्तयोनिं कैवल्येन अप्रच्युत-
॥ स्वरूपावस्थानेन निरस्ता निरस्कृता योनिः मूलकारणं माया येन तं ॥५०॥

